# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORK[S]

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES. No. 983.



# बोधिचर्यावतारपञ्जिका ।

## PRAJÑAKARAMATI'S COMMENTARY

TO THE

## BODHICARYĀVATĀRA OF ÇANTIDEVA

EDITED WITH INDICES

BY

LOUIS DE LA VALL[É]E POU[SSIN]
PROFESSOR OF SANSKRIT IN THE UNI[VERSITY] ...

FASCICULUS I.



CAL[CUTTA]
1902 PRINTED AT THE ...
AND ...
ASIATIC ...

# INTRODUCTION.

## (PRELIMINARY.)

[illegible]he Bodhicaryâvatârapañjikâ is preserved in two [illegible]part of the collection of the Government of Bengal [illegible], both acquired by Professor Haraprasâd Çâstri. (See Notices [illegible] Sanskrit MSS., Vol. XI, p. 7). The first is in the Nepalese [illegible]cter and contains (with several large lacunae) the whole of the [illegible] the second, in the Maithili character, contains only the [illegible]ntary on the ninth chapter.[2]

[illegible]s concerns the text of the Bodhicaryâvatâra, I have used th[illegible] [illegible]n of Minaev and his critical apparatus, together with the tw[illegible] in Paris (Devanâgarî 78, Burnouf 98, called Dev. and Burn).

Some help has been found in a little tract, of which sc[illegible] [illegible]nents only are preserved, called Bodhicaryâvatâraṭippanî; th[illegible] was discovered in the Durbar Library at Kathmandu by Profe[illegible] [illegible]l Bendall and was copied for him. I re[illegible]r to it as Ṭipp.

Much more profitable has proved the study of the Çikṣâsamucc[illegible] [illegible]m which our author, Prajñâkaramati, has borrowed, mostly with [illegible]nowledgment, nearly the whole of his illustrations from ear[illegible] [illegible]rature. The able editor of this work has helped us in identify[illegible] [illegible] comparing the two texts.

The translations of the Bodhicaryâvatâra and of the Pañjikâ in [illegible]ndjur have been used, from the 16th page of this edition onwards, ascertaining or elucidating the Sanskrit text; the Tibetan text of the [illegible] passages, together with a translation, will be given in a final [illegible]pendix.

[illegible], *July 1902.* LOUIS DE LA VALLÉE POUSSIN.

[illegible] [illegible] [illegible]he tenth chapter of the Avatâra, the authenticity of which is rather [illegible] there is, so far as I know, no commentary by Prajñâkaramati.

[2] Edited by myself in Latin character, some years ago, in my *Bouddhisme, [illegible]des et Matériaux*, I. (London, Luzac.)

# प्रज्ञाकरमतिकृता
# बोधिचर्यावतारपञ्जिका ।



ओँ नमो बुद्धाय[1] ॥

सुगतान् ससुतान् सधर्मकायान्
प्रणिपत्यादरतो ऽखिलांश्च वन्द्यान् ।
सुगतात्मजसंवरावतारं
कथयिष्यामि यथागमं समासात् ॥[2] १ ॥

. . . . . . . . . . . . . . . . . . [3] अखि] [2a] लांश्च वन्द्यानिति 5
कल्याणमित्रप्रभृतीनां[4] ॥ सुगतात्मजसंवरावतारमित्यभिधेय-
कथनं । कथयिष्यामीति प्रयोजनाभिधानं । संबन्धप्रतिपादनपदं

---

1 Sic Minaev, Burn., Dev.; L[2] has: namaḥ sarvabuddhabodhisattvebhyaḥ M.: namo ratnatrayāya, the ṭippanī: namas tārāyai.

2 The first four stanzas of our text are quoted by the author Çānti-deva in the exordium to his work the *Çikṣāsamuccaya* (edited by C. Bendall in the *Bibliotheca Buddhica*), with some variants. Here instead of: "yathā-gamaṁ samāsāt." the Çikṣās. has: "samuccitārthavākyaiḥ." The special character of the two works, which have the same "prayojana" and the same "abhidheya" (bodhisattvasaṁvara), is clearly illustrated by their introductive formulas.

3 The first folio of our MS. is lost. The second one, in some parts illegible, is broken down: wants the right part (four or five akṣaras).

The ṭippanī begins as follows: Ihāyam ācāryaçāntidevaḥ parān bodhi-sattvasaṁ[vare'va]tārayitum ātmānaṁ ca tatra sthirīkartuṁ bodhicaryā-vatāraṁ kartukāma ādau sadācāraparipālanārthaṁ sugatān ityādy āha.

4 Supply in the lost part of the Comm.: praṇatiḥ, namaskṛtiḥ.

तु न विद्यते । सामर्थ्यादेव तु स प्रतिपत्तव्यः ॥ यथागममभि
स्वातन्त्र्यपरिहारपदं । समासा[दिति पुनरु[1]]क्ततापरिहारवच
इति समुदायार्थः[2] ॥

अवयवार्थस्तूच्यते । सुगतानित्यत्र गतशब्देन सर्वपृथग्जनेभ्
5 भगवतां व्यवच्छेदमुपदर्शयति । तेषां संसारान्तर्गतत्वात्
भगवतां तु संसारविनिर्गतत्वात् । सुशब्दस्तु प्रशस्तार्थस्त्र[3]य
वृत्तिविशिष्टं सुग[- - - -]। तेनायमर्थः । प्रशस्तं यथा भवति
एवं मध्यमप्रतिपदा[4] क्लेशाद्यावरणप्रहाणं गताः सुगताः । अने
प्रहाणसंपत्तिरुक्ता ॥ यदि वा प्रशस्तं सर्वधर्मनिःस्वभावता
10 तत्त्वं गता अधिगताः सुगताः । अनेनाधिगमसंपदुपदर्शिता
य[- - - -तो]र्थिकशास्तृभ्यो भगवतां विशेषश्चोपदर्शितो भवति
तेषामात्मादिभावाभिनिवेश[वशात्] प्रशस्त[गमना][5]भावात्
आत्मादीनां च प्रमाणबाधितत्वात् । संसाराप्रतिपक्षत्वाच्च अप्र
शस्तं गमनं ॥ अपुनरावृत्त्या वा गताः । पुनर्जन्मनो रागादीना[
15 - - -अहं]कार - -[6]ऽहंकारबीजस्याविद्यायाः सर्वथा प्रहाणा

---

[1] Punaruktatā, *cf. infra* p. 6, l. 5.

[2] Tipp.: atra çloke ratnatrayasya vandyānām upādhyāyaprabhṛtīnāṃ c
praṇatiḥ। abhidheyam। tatsaṁbandhaḥ। prayojanam। asvātantryam। apauna
uktyam iti ṣaḍ arthāḥ pratipāditāḥ॥ tatra sugatātmajasaṁvaro' bhidheyam
asya ca granthenāmunā' bhidhā[nam। abhidhā]nābhidheyabhāvalakṣaṇa
saṁbandhaḥ sāmarthyagamyaḥ। asya cābhidheyasya buddhatvaṁ par
niṣṭhitaṁ prayojanaṁ gamyam।) This method of exposition (abhidhey
etc.), is well known by the Nyāyabinduṭīkā, the Madhyamakavṛtti, th
Vedāntasāra, the Tarkasaṁgraha, p. 70; *cf.*, *infra*, p. 4, l. 14.

[3] MS.: °artha traya.°

[4] MS. has: madhyamāpra.°

[5] Three syllables added in margin. The last seems to be: vya.

[6] Perhaps: °kāraçuddhyā.°

सुगताः । अनेन स्रोतआपन्न[सकृद्]आगामिबोधिसत्त्वेभ्यो ऽपि भगवतां विशेषो दर्शितः । तेषां प्रशस्तगमनेऽपि सर्वथा-स-प्रहाणात्[1] पुनरावृत्तिसंभवात् ॥ निःशेषं वा - - - - - - - - - ष][2b]वंवासनाया अपि कायवागबुद्धिवैगुण्यलक्षणायाः स्वय-मधिगतमार्गाख्यावपाटवस्य[2] वा सर्वथा प्रहाणात् सुगताः । एता-वता संपूर्णगामित्वं[3] भगवतां प्रतिपादितं । अनेनाप्यनागामि-श्रावकप्रत्येकबुद्धेभ्यो भगवतामसाधारणगुणत्वमावेदितं । तेष[ा- - - -] कायवागबुद्धिवैगुण्यस्य स्वाधिगतमार्गाख्यापाटवस्य च संभवात् । एवं च बुद्धत्वमशेषगुणसरमसाधारणमपरयोगिभि[ः] सुगतशब्देन ख्यापितं ॥ 10

तानेवंभूतान् सुगतानादरतः परमप्रसादेन प्रणिपत्येति नमस्कृत्य सुगतात्मजसंवरावतारं कथयि[ष्यामीति] संबन्धः ॥

किंभूतान् ससुतानिति । सुताश्च मुनीनामिह सत्त्वप्रमु-दितादिभूमयो[4] बोधिसत्त्वा एव गृह्यन्ते । तेषामेवाचाधिकृत-त्वात् तैः सह । अनेन विशेषणेनार्यसंघस्य नमस्कारोऽन्तर्भावितः॥ 15

अपरं विशेषणमाह । सधर्मकायानिति । सर्वाप[- - - -]क्षो भगवतां स्वाभाविको धर्मकायः[5] । स एव चाधिगमस्वभावो धर्मः । समूहार्थो वा कायशब्दः । जनकायो बलकाय इति यथा । तेन प्रवचनस्यापि ग्रहणं । तेन सह । अनेनापि धर्मस्य नमस्कारो ऽन्तर्भावितः । इति रत्नत्रयनमस्कारोऽयमित्यु [- - - - -] ॥ 20

1 MS.: Sarvadhārhatva. Ex conj.: sarvadhātv' 2 Apāṭava, in *Less.* only.
3 New word. 4 The first of the ten Bhūmis (Dh. S. lxiv).
5 On the Dharmakāya, see KERN, *Over den aanhef eener buddh. Inscr. uit Battambang* (Versl. d. K. Ak. v. Wet., Afd. Letter. 4 R, D. iii, Amsterdam, 1899).

ननु बुद्धाद्धर्मो धर्मतश्चार्यसंघ इति क्रमः । तत्किमिति बुद्धानन्तरमार्यसंघः । तदनु धर्म इति व्यतिक्रमनिर्देशः ॥ सत्यमिह लोकवृद्धानुरोधाद् व्यतिक्रमनिर्देशो वेदितव्यः । योजनात्तु सुगतान् सधर्मकायान् ससुतान् प्रणिपत्येत्यनुक्रमेणै-

5 [व न कश्चिदत्र][3a] दोषः ॥ अथ वा बोधिसत्त्वानामप्यधिगत-धर्मत्वादानुरूप्येण धर्मकायो विद्यत एव । तेषामपि सह धर्मकायेन नमस्क[रणं][1] प्रतिपादनीयं । तेऽपि हि समधिगत-धर्मतया सुगतत्वनियताः सुगतप्रायाः । इति धर्मात्पूर्वं निर्देशः । इति न किं चिदयुक्तं ।

10 किमे[तानेव] । नेत्याह । अखिलांश्च वन्द्यानिति । अपरा-नपि समस्तान् वन्दनीयान् । आचार्योपाध्यायप्रभृतीनपि[2] । आदरतः प्रणिपत्येति ।

इति पूर्वार्धेन सुगतादीनां नमःकृतिमभिधाय । अपरार्धे-नाभिधेयादीनि प्रतिपादयन्नाह । सुगतात्मजेत्यादि ॥ आत्मनो

15 जाताः । आत्मजाः । सुगतानामात्मजा जिनपुत्रा बोधिसत्त्वा इत्यर्थः ॥ तेषां संवरावतार[3] । संवरणं[3] संव्रियते वानेनेति संवरः । बोधिचित्तग्रहणपूर्वकं बोधिसत्त्वशिक्षासमादानं । तच्च यथावसरं वक्ष्यामः[4] ॥ तस्यावतरणमवतीर्यते तस्मिन् वाऽने-नेत्यवतारो मार्गः । येन बोधिसत्त्वपदप्राप्तौ सुगतत्वमवाप्यते ।

20 तं कथयिष्यामि प्रतिपादयिष्यामि । अनेन ग्रन्थेनेत्यर्थः ।

---

1 MS., quite illegible, has : namaskritāyā prati°.

2 Ācārya, upādhyāya, cf. CHAVANNES, *Religieux éminents*, ii, 1, 140.

3 MS. : Saṃvara, saṁvaraṇam.   4 *Cf. infra*, iii, 22.

एवमनेन प्रतिपाद्यमानत्वात्संवरावतारोऽभिधेयमस्य । अयमभि-
धानं संवरावतारस्य ॥ इत्यभिधानाभिधेयलक्षणः संबन्धो-
ऽप्यर्थात्कथितः । तत्कथनं चाभिधानप्रयोजनं । परमार्थतस्त्वभि-
धेयस्वरूपव्युत्पत्तिरेव तत्प्रयोजनं । अभिधेयस्य पुनः श्रुतसंख्या-
दिप्रज्ञोत्पादनक्रमेण सर्वावरणविगमाद् बुद्धत्वमेव प्रयोजनमिति 5
प्रयोजननिष्ठा । इदं च सुगतात्मजसंवरावतारशब्द एवान्तर्भा-
वितं । तदनन्तरमेवोक्तेः । यदनुशंसक[3b][1]थनेन च सूचयिष्यति ।

अशुचिप्रतिमामिमां गृहीत्वा
जिनरत्नप्रतिमां करोत्यनर्घां । इति[2] ॥

इति संबन्धाभिधेयप्रयोजनानि प्रवृत्त्यङ्गतया प्रतिपादि- 10
तानि ॥ अन्यथाऽनभिधेयादिशङ्कया प्रेक्षावतामत्र प्रवृत्तिर्न
स्यात्[3] ॥

ननु त्वया स्वातन्त्र्येण कथितं कथमं ग्रहीष्यन्तीत्याह ।
यथागममिति । आगमानतिक्रमेण । यथैव प्रवचने भगवद्भिः
प्रतिपादितः । तथा मयापि तदर्थानतिवृत्त्या प्रतिपादयितव्यः । 15
अनेनागमात्स्वातन्त्र्यं परिहृतं भवति । उत्सूत्रमिदं न भवती-
त्यर्थः[4] । [5]प्रवचनार्थावगाहनमपि चावक्रतयानेनात्मनो[6] दर्शितं ॥
इदमपि प्रवृत्त्यङ्गमेव ।

---

1 *Cf.* M. Vyut. 25, and *infra*, v, 25. 2 *Infra*, i, 10.

3 *Cf. Nyāyabinduṭīkā*, 3, 27. In the Abhidharmakoça five sorts of prajñā are enumerated; among them the "vimalā prajñā."

4 New in Buddhist works? —P.W: utsūtra = was nicht im Sūtra steht (*Mahābh.* (K.), 12, 27. 5 New compound.

6 Avakratā, new word.

ननु यदि यथागमं कथयितव्यस्तर्ह्यागम एव तदभि-
लाषिणः प्रवर्तिष्यन्ते। तत्किमनेनेत्याह। समासादिति संक्षे-
पात्। यदि नाम आगमेऽपि कथितः। तथापि तत्रातिविस्तरेण
नानासूत्रान्तेषु प्रतिपादनात्। अहं तु पिण्डीकृत्य संक्षेपेण
5 कथयिष्यामीति विशेषः॥ अनेन पुनरुक्तमिदं भवतीति परि-
हृतं। अयमपि चाप्रवृत्त्यङ्गतापरिहारः। तस्मात्प्रवृत्त्यङ्गत्वाद्
अभिधेयादिकथनमसंगतं न भवति॥

तर्हि प्रणामकरणमपार्थकं॥ तदपि श्रेयोलाभाद्यर्थमभि-
धीयमानं कथमपार्थकं। अयमस्याभिप्रायः। सुगतादिप्रणाम-
10 समुद्भूतपुण्यसंभारसमाक्रान्तचित्तसंतानस्य[1] प्रतनुतरपुराकृतपाप-
स्योपशमान्तविघ्नस्यारब्धार्थपरिसमाप्तिरुपजायते। समस्तसाधु-
जनगतमार्गानुगमनमपि चानेनात्मनः प्रकाशितं भवेत्।
इष्टदेवतादिनमस्कृतिश्रवणादास्तिकत्वसंभावनया[2] श्रोतृणा-
मात्मग्रन्थे च गौरवमापादितं स्यात्॥ अत्र च सुगतशब्दे-
15 नोक्ताखिलभगवद्गुणमाहात्म्यश्रवणात्तदभिलाषिणस्तदुपार्जनप्रवण-
मानसाः सुगतात्मजसंवरावतारपरिज्ञानाय यत्नवन्तोऽस्मिन्
प्रवर्तन्ते। इदमभिमतं देवतादिप्रणामफलं॥ एतेनेदमपि।
येन यदभिमतमभिप्रेतं कर्तुं स तदेव करोतु नान्यत्। अन्य-
करणेऽप्रस्तुताभिधानमतिप्रसङ्गश्च स्यात्। तदयमपि संवराव-
20 तारकथने कृताभिप्रायः किमप्रस्तुतमिष्टदेवतादिप्रणामं

---

1 This expression (cittasaṁtāna) is well known from the *Sarvadarçana-saṁgraha*, etc., and the Chap. ix of this book. 2 Āstikatva, new word.

करोति । प्रागुक्तदोषद्वयप्रसङ्गादिति यदुच्यते तदपि निराकृतं भवति । प्रकृत एव तदुपयोगस्य वर्णितत्वात् । नाप्रस्तुताभिधानं । यत्प्रकृतोपयोगि तद्वक्तव्यं नान्यदित्यतिप्रसङ्गो नास्तीति सर्वं सुस्थं ॥

नन्वागमानतिरिक्तं संक्षेपेणाभिधीयमानमपि कथमर्थ- 5
विशेषाद्यभावाद् विशेषेण प्रवृत्त्यङ्गतया कस्य चिदुपादेयं स्यात् । तस्मादागमादधिकमपि किं चिदत्र वक्तव्यमित्याशङ्क्याह ।

न हि किं चिदपूर्वमत्र वाच्यं
न च संग्रन्थनकौशलं ममास्ति ।
अत एव न मे परार्थचिन्ता 10
स्वमनो वासयितुं कृतं ममेदं[1] ॥ २ ॥

नैव किं चिदपूर्वमपरमागमादतिरिक्तमस्मिन् वक्तव्यमस्ति मम । यस्मादर्थे वा हि शब्दः ॥ तर्हि तदधिकप्रमेयानभिधाने-ऽपि पदार्थरचनाविशेषो भविष्यति । तस्मादपि विशेषेण प्रवृत्तिः स्यादिति ॥ अत्राह । न चेति । नापि । [2]संग्रन्थनमर्थ- 15
पदविन्यासविशेषः । तत्र कौशलं नैपुण्यं ममास्ति । अवधारणे वा चकारः ॥ यद्येवं कथमस्य परार्थोपयोगित्वमिति । आह । अत एवेति । परप्रपञ्चितमेवाभ्युपगच्छति । यस्मादपूर्वं वक्तुं मम शक्तिर्नास्ति । नापि संग्रन्थनकौशलमस्ति । न च परार्थ-
चिन्तापि । परार्थोपयुक्तमिदं भवति[3] विकल्पो ऽपि मे नास्ति । 20

[1] Minaev and Text-MSS.: bhāvayitum;—Çikṣā°. has: ... parārthayatnaḥ svamano bhāvayitum mamedam iṣṭam.

[2] Saṁgranthana, new meaning, cf. *Vāgbhaṭālaṁkāra* I, 12.

[3] Read: bhavatīti.

तच्च प्रणिधिवैगुण्यात् ॥ किमर्थं करणाय यत्न इति चेत् । आह । स्वमन इति । आत्मचित्तं सुगतात्मजसंवरावताराभ्यासरसेनाधिकाधिकं वासयितुं कृतं प्रणीतं मया प्रकरणमिदं । संवरावतारकथनं वा । अतीतकालनिर्देशो ऽन्त[1]स्तन्निष्पन्नं
5 मनसि निधायेति ॥

ननु नात्मार्थं ग्रन्थप्रणयनं दृष्टं । न च स्वयंकृतेनैवात्मनि विशेषाधानं । तावतः संस्कारविशेषस्य प्रागेवात्मनि विद्यमानत्वादिति ॥ अत्राह ।

मम तावदनेन याति वृद्धिं
10 कुशलं भावयितुं प्रसादवेगः ।
अथ [2]मत्समधातुरेव पश्येद्
अपरो ऽप्येनमतो ऽपि सार्थको ऽयं ॥ ३ ॥

अनेन ग्रन्थेन तदर्थेन वा । कुशलं शुभमनस्कारं भावयितुमाराधयितुं । वृद्धिं याति प्रसादवेगः । उत्तरोत्तर-
15 वर्धमानस्य प्रसन्नचित्तसंतानस्य प्रवाहवाहितया प्रवृत्तिः ॥ अनेन स्वार्थकारित्वमनुभवसिद्धमस्य निदर्शयति ॥ परार्थकारित्वमपि लेशतः संभवति । इति दर्शयन्नाह । अथ मत्समेत्यादि । अथेति प्रकारान्तरोपन्यासे । स्वार्थकारित्वमस्य तावदनुभवसिद्धं । यदि पुनर्मम समानप्रकृतिरेव कश्चिदन्यः पश्येदीक्षेत ।
20 एनं ग्रन्थमर्थं वा । अतो ऽपि परार्थोपयुक्तत्वादपि सार्थकः सप्रयोजनो ऽयं । परार्थोपयोगस्यापि कथंचित्संभवात् ॥

---

[1] MS. quite illegible.  [2] Çikṣās. has: yadi matsama°

अनेन श्लोकद्वयेन [1]निरभिमानतामात्मनो दर्शयति ॥
इदानीं संवरावतारकथां ग्राहयितुमुपोद्घातं रचयन्नाह ।

[2]क्षणसंपदियं सुदुर्लभा
प्रतिलब्धा पुरुषार्थसाधनी ।
यदि नात्र विचिन्त्यते हितं
पुनरप्येष समागमः कुतः ॥ ४ ॥

अष्टाक्षणविनिर्मुक्तस्य[3] क्षणस्य संपत्तिः समग्रता । इयं सुदुर्लभा । सुष्ठु दुःखेन लभ्यत इ[5a]ति कथं चित्प्राप्या ।

महार्णवयुगच्छिद्रकूर्मग्रीवार्पणोपमा[4] ।

प्रतिलब्धा प्राप्ता सा च पुरुषार्थसाधनी । पुरुषस्यार्थोऽभ्युदयनिःश्रेयसलक्षणः । तस्य साधनी । निष्पादनी तदनुकूलत्वाच्च समर्थेति यावत् ॥ यदि चैवंभूतायामप्यस्यां न हितं विचिन्त्यते । स्वपरसुखहेतुः । स्वर्गापवर्गसाधनं नोपादीयते । तदा पुनरपि भूयोऽपि । एष तथागतोत्पादः श्रद्धा ऽक्षणविमुक्तो मनुष्यभाव इत्ययं समागमः समावेशो मिलनमिति यावत् ।

1 Nirabhimānatā, new word.
2 Cf. *Saddh. puṇḍ* (S. B. of the E. xxi), p. 424, 2.
3 Cf. IX, 163; M Vyut. 120; Çikṣās. 2, 4; Dh. S. cxxxiv; Mhv. I, 405. Cf. *infra*, p. 10, n. 5.
4 Cf. *infra* IV, 20; Burn. *Lotus*, p. 431 (°grīvāpraveçavat); Kern, *Saddh puṇḍ* (p. 423): "as the entering of the tortoise's neck into the hole of the yoke formed by the great ocean" and note thereof; "I am as unable to elucidate this comparison as Burnouf was......"—"It is as unlikely to happen as if a tortoise should put its neck into a hole opening every *yuga* in the world's ocean."

कुतः। कथं। न कथंचिद्भविष्यति सुदुर्लभत्वात्। अक्षणाव-
स्थायां धर्मप्रविचयस्य[1] कर्तुमशक्यत्वादित्यभिप्रायः॥

यथोक्तमार्यगण्डव्यूहसूत्रे[2]। आर्यजयोष्मायतनविमोक्षे। दुर्लभा-
ऽष्टाक्षणविनिवृत्तिः। दुर्लभो मनुष्यभावप्रतिलम्भः। दुर्लभा
5 क्षणसंपद्विशुद्धिः। दुर्लभो बुद्धोत्पादो। दुर्लभाऽविकलेन्द्रियता।
दुर्लभो बुद्धधर्मश्रवणो। दुर्लभं सत्पुरुषसमवधानं। दुर्लभानि
भूतकल्याणमित्राणि। दुर्लभो भूतनयानुशासन्युपसंहारः[3]। दुर्लभं
सम्यग्जीवितं मनुष्यलोक इति[4]॥ इदमेवाभिसंधायोक्तं।

मनुष्यं दुर्लभं लोके बुद्धोत्पादोऽतिदुर्लभः।
10 ततोऽपि श्रद्धाप्रव्रज्याप्रतिपत्तिः सुदुर्लभा॥
बोधौ चित्तं दृढं सर्वसत्त्वानामनुकम्पया।
सर्वदुःखप्रशान्त्यर्थं दुर्लभानां परंपरा॥ इति।

अक्षणाः पुनरिमे।

नरकप्रेततिर्यञ्चो म्लेच्छा दीर्घायुषोऽमराः।
15 मिथ्यादृग्बुद्धकान्तारौ[5] मूकताष्टाविहाक्षणाः॥ इति।

तस्मादिदानीमेवोद्योगः कर्तव्य इति॥ सांप्रतं बोधिचित्त-
ग्रहणाय तदभिलाषमुत्पा[5b]दयितुमनुशंसामवतारयन्नाह।

---

1 New as technical term.

2 Quoted from Çikṣās. 2, 4, where occur some variants: °kṣaṇanivṛttiḥ, manuṣyaprati° (=classic mānuṣya°; cf. I. 9), °dharmaçravo (right).

3 Anuçāsani, *cf.* notes of BENDALL, (Çikṣās. 2, 6, 36, 8. 122, 15); M. Vyut 16, 3, and *infra* V, 30, 74.

4 Our MS. agrees with MS. Hodgson 2 (R. Asiatic S.) fol. 62a; Çikṣās has: jīvitaṁ | durlabhaḥ saddharmo tadanukūlaḥ prayatno manuṣya°.

5 Buddhakāntāra = tathāgatānām anutpāda.—According to the Saṁgītisutta there are nine classes of beings "akṣaṇā asamayā brahmacariyāvāsāya" (see *Burnouf, Lotus*, p. 835).

रात्रौ यथा मेघघनान्धकारे
विद्युत्क्षणं दर्शयति प्रकाशं।
बुद्धानुभावेन तथा कदाचिल्
लोकस्य पुण्येषु मतिः क्षणं स्यात् ॥ ५ ॥

निशायां यथा जलदागमसमये मेघैर्बहुले तमसि सति सौदामनी चपललवमात्रमालोकयति किं चिद्वस्तुजातं प्रकाशयति। सैवोपमात्रापि। इत्याह। बुद्धानुभावेनेत्यादि। बुद्धा एव हि भगवन्तो हितसुखोपसंहाराय सदा भव्याभव्यतया[1] सर्वसत्त्वसंतानमवलोकयन्तस्तिष्ठन्ति। यदा यत्र येनोपायेन यस्मै यं भव्यं[2] पश्यन्ति तदा तत्र तेनोपायेन तस्मै तमधितिष्ठन्ति। अभव्यावस्थायामुपेक्ष्य विहरन्ति। इति तथागताधिष्ठानेन। कथं[3] चिद्दुर्लभोत्पत्तिकत्वात्। लोकस्य जनस्य पुण्येषु हितसुखहेतुषु कुशलेषु कर्मसु बुद्धिर्मुहूर्तमेकं भवेत्। तत्र तथा अस्थिरत्वात्। अनादिसंसारे लोकेनाकुशलपक्षस्यैवाभ्यस्तत्वात्॥ यदि नामैवं ततः किमित्याह।

तस्माच्छुभं दुर्बलमेव नित्यं
बलं तु पापस्य महत्सुघोरं।
तज्जीयतेऽन्येन शुभेन केन
संबोधिचित्तं यदि नाम न स्यात् ॥ ६ ॥

[1] Bhavya-abhavyatā, new word, cf. Çikṣās. 121, 4; 135, 4, 209, n. 7.
[2] Ms. yadbhavyam. [3] Better reading than the "Kadācit" of the Text-Mss.

यत एवं तस्माच्छुभं पुण्यं दुर्बलं सामर्थ्यविकलमेव विद्यु-
दुन्मेषप्रायत्वात्। अतिकृशं। नित्यं सर्वकालम्॥ कस्य तर्ह्यति-
शयवद्बलमस्तीत्याह। बलं त्विति। सामर्थ्यं पुनरशुभस्य महत्।
मेघघनान्धकारसदृशत्वात्तस्य। सुघोरमतिभयंकरं नरकादि-
5 दुःखदायकत्वात्। सुदुर्जयत्वाच्च॥ भवतु नाम महत्सामर्थ्यमस्य।
तथापि तदपरेण बलवता पुण्येन जेष्यते। तथा च न
का चित्क्षतिरिति। आह। तदित्यादि। तत्तादृशं महासामर्थ्यं
जीयते। अभिभूयते। अन्येन इतरेण पुण्येन केन। न केना-
पीत्यर्थः॥ कुतः पुनरेवमुच्यते। संबोधीत्यादि। सम्यक्संबोधौ
10 बुद्धत्वे यच्चित्तं सर्वसत्त्वसमुद्धरणाभिप्रायेण तत्प्राप्त्यर्थमध्याशयेन
मनसिकारः। तद्यदि नाम न भवेत्। महासामर्थ्यं हि तद-
परेण महीयसा पराजीयते। सूर्येणेव निशान्धकारः। न
[6a]संबोधिचित्तात्प्रतिपक्षो महीयानपरः संभवति। तस्मा-
त्तत्प्रतिघाताय संबोधिचित्तमेवोपादेयं नान्यदित्यभिप्रायः।
15 इतोऽपि संबोधिचित्तमुपादेयमित्याह।

**कल्पाननल्पान् प्रविचिन्तयद्भि-**
**र्दृष्टं मुनीन्द्रैर्हितमेतदेव।**
**यतः सुखेनैव सुखं प्रवृद्ध-**
**मुत्प्लावयत्यप्रमिताञ्जनौघान्॥ ७॥**

20 एकोऽन्तरकल्पः कल्पः। विंशतिरन्तरकल्पाः कल्पः। अशी

तिरन्तरकल्पाः कल्पः[1] । स च महाकल्प इत्यभिधीयते । तदिह
महाकल्पस्यैव ग्रहणं । कल्पान् बहून् । [2]प्रथमासंख्येयान्तर्गतान् ॥
प्रविचिन्तयद्भिस्तात्पर्येण परिभावयद्भिर्दृष्टं । अधिगतं । मुनीन्द्रैः ।
बुद्धैर्भगवद्भिर्बोधिसत्त्वावस्थायां । हितं सर्वार्थसाधनयोग्यं तद्बीज-
भूतत्वात् । एतदेव संबोधिचित्तमेव ॥ 5

कथं पुनरिदमेव हितमित्याह । यत इत्यादि । यस्मात्सुखं
प्रवृद्धं प्रकर्षगतं बुद्धत्वलक्षणं । अप्रमितानप्रमेयान् । जनौघान्
सत्त्वसमूहान् । उत्प्लावयति । उत्तारयति । संसारदुःखमहार्णवात् ॥
तस्मादिदमेव हितं ॥

अथ वा । यस्मात् सुखं देवमनुष्यसंपत्तिलक्षणं । प्रवृद्धं वृद्धिं 10
गतं । अर्थात्संबोधिचित्तादेव । उत्प्लावयत्यतिशयेन संतर्पयति ।
सौकर्यादधिकतरं यद्भवति तदुत्प्लावनमुच्यते[3] । यथा दध्ना
यवमुत्प्लाविता इति सौकर्यादधिकतरं दधि भूतमित्यर्थः ॥

यदि वा । यतः संबोधिचित्तात्सुखं प्रवृद्धमिति योजनीयं ॥

कथं प्रवृद्धमित्याह । सुखेनैवेति । अकष्टेन । न शिरोलुञ्च- 15
नादिना महता कष्टेन । तथा हि बोधिचित्तसंवरादेव बोधि-
सत्त्वोऽमितपुण्यज्ञानसंभारात्प्रवर्धमानो देवमनुष्यसंपत्तीः सुख-
मधिगच्छन् सत्त्वानेवाधिकतरं ताभिः संतर्पयतीति । यद्वक्ष्यति ।

एवं सुखात्सुखं गच्छन् [6b] को विषीदेत्सचेतनः ।
बोधिचित्तरथं प्राप्य सर्वखेदश्रमापहं ॥ इति ॥[4] 20

---

1 *Cf.* Sp. Hardy, *Manual*, 7; Childers, s. voc. kappo, yuga; *infra ad* II, 8.
2 Ex conj.: parama...(??).
3 I do not know from which koça this half çloka is quoted.—Utplāvana, new word; W.K.F. has: utplava, utplavana.
4 Cf. *infra* VII, 30.

यत एवं तस्माच्छुभं पुण्यं दुर्बलं सामर्थ्यविकलमेव विद्यु-
द्विमेषप्रायत्वात् । अतिशयं । नित्यं सर्वकालं ॥ कस्य तर्हीति-
शयवद्बलमस्तीत्याह । बलं त्विति । सामर्थ्यं पुनरशुभस्य महत् ।
मेघघनान्धकारसदृशत्वात्तस्य । सुघोरमतिभयंकरं नरकादि-
5 दुःखदायकत्वात् । सुदुर्जयत्वाच्च ॥ भवतु नाम महत्सामर्थ्यमस्य ।
तथापि तदपरेण बलवता पुण्येन जेष्यते । तथा च न
का चित्क्षतिरिति । आह । तदित्यादि । तत्तादृशं महासामर्थ्यं
जीयते । अभिभूयते । अन्येन इतरेण पुण्येन केन । न केना-
पीत्यर्थः ॥ कुतः पुनरेवमुच्यते । संबोधीत्यादि । सम्यक्संबोधौ
10 बुद्धत्वे यच्चित्तं सर्वसत्त्वसमुद्धरणाभिप्रायेण तत्प्राप्त्यर्थमध्याशयेन
मनसिकारः । तद्यदि नाम न भवेत् । महासामर्थ्यं हि तद-
परेण महीयसा पराजीयते । सूर्येणेव निशान्धकारः । न च
[6a]संबोधिचित्तात्प्रतिपक्षो महीयानपरः संभवति । तस्मा-
त्तत्प्रतिघाताय संबोधिचित्तमेवोपादेयं नान्यदित्यभिप्रायः ॥
15 इतोऽपि संबोधिचित्तमुपादेयमित्याह ।

कल्पानल्पान् प्रविचिन्तयद्भि-
र्दृष्टं मुनीन्द्रैर्हितमेतदेव ।
यतः सुखेनैव सुखं प्रवृद्ध-
मुत्प्लावयत्यप्रमिताञ्जनौघान् ॥ ७ ॥

20 एकोऽन्तरकल्पः कल्पः । विंशतिरन्तरकल्पाः कल्पः । अशी-

निरन्तरकल्पाः कल्पः[1] । स च महाकल्प इत्यभिधीयते । तदिह महाकल्पस्यैव ग्रहणं । कल्पान् बहून् । [2]प्रथमासंख्येयान्तर्गतान् ॥ प्रविचिन्तयद्भिस्तात्पर्येण परिभावयद्भिर्दृष्टं । अधिगतं । मुनीन्द्रैः । बुद्धैर्भगवद्भिर्बोधिसत्त्वावस्थायां । हितं सर्वार्थसाधनयोग्यं तद्बीजभूतत्वात् । एतदेव संबोधिचित्तमेव ॥ 5

कथं पुनरिदमेव हितमित्याह । यत इत्यादि । यस्मात्सुखं प्रवृद्धं प्रकर्षगतं बुद्धत्वलक्षणं । अप्रमितानप्रमेयान् । जनौघान् सत्त्वसमूहान् । उत्प्लावयति । उत्तारयति । संसारदुःखमहार्णवात् ॥ तस्मादिदमेव हितं ॥

अथ वा । यस्मात् सुखं देवमनुष्यसंपत्तिलक्षणं । प्रवृद्धं वृद्धिं 10 गतं । अर्थात्संबोधिचित्तादेव । उत्प्लावयत्यतिशयेन संतर्पयति । सौकर्यादधिकतरं यद्भवति तदुत्प्लावनमुच्यते[3] । यथा दध्ना वयमुत्प्लाविता इति सौकर्यादधिकतरं दधि भूतमित्यर्थः ॥

यदि वा । यतः संबोधिचित्तात्सुखं प्रवृद्धमिति योजनीयं ॥

कथं प्रवृद्धमित्याह । सुखेनैवेति । अक्लेशेण । न शिरोलुञ्चनादिना महता कष्टेन । तथा हि बोधिचित्तसंवरादेव बोधिसत्त्वोऽमितपुण्यज्ञानसंभारात्प्रवर्धमानो देवमनुष्यसंपत्तीः सुखमधिगच्छन् सत्त्वानेवाधिकतरं ताभिः संतर्पयतीति । यदक्ष्यति । 15

एवं सुखात्सुखं गच्छन् [6b] को विषीदेत्सचेतनः ।
बोधिचित्तरथं प्राप्य सर्वखेदश्रमापहं ॥ इति ॥[4] 20

---

1 *Cf.* Sp. Hardy, *Manual*, 7; Childers, s. voc. kappo, yuga; *infra ad* II, 8.

2 Ex conj.: parama...(??).

3 I do not know from which koça this half çloka is quoted.—Utplāvana, new word; W.K.F. has: utplava, utplavana.

4 Cf. *infra* VII, 30.

ननु भगवतामपि मैत्रीबलादिजातकेषु[1] महद्दुष्करं श्रूयते । तत्कथं सुखेनैव सुखं प्रवृद्धमिति ॥ नैष दोषः । यत उत्पाद्यमेव परहितसुखाधायकं दुःखं स्वपरयोः कृपात्मभिः । सुखमेव तादृशं दुःखं परदुःखदुःखिनां धीमतामिति प्रतिपादयिष्यते[2] ॥

अस्मादपि स्वपरहितहेतुत्वाद्बोधिचित्तं न परित्याज्यमेवेति दर्शयन्नाह ॥

भवदुःखशतानि तर्तुकामै-
रपि सत्त्वव्यसनानि हर्तुकामैः ।
बहुसौख्यशतानि भोक्तुकामै-
र्न विमोच्यं हि सदैव बोधिचित्तम् ॥ ८ ॥

संसारदुःखशतानि । नरकादिगतिदुःखानामसातवेदितानां[3] शतानि । अपर्यन्तममूहांस्तर्तुकामैः परित्यक्तुमिच्छद्भिः श्रावक-प्रत्येकबुद्धगोत्रैः[4] ॥ न केवलमात्मीयानि लोकानां जात्यादि-दुःखान्यपि हर्तुकामैरपनेतुकामैर्बोधिसत्त्वगोत्रैः[4] ॥ न केवलं स्वपरदुःखानि हर्तुकामैः । अपि च । बहूनि सुखान्येव

---

[1] *Jātakamālā*, VIII, "not met with in the Cariyāpiṭaka nor in the five (first) volumes of the Pāli Jātaka" (Speyer, Sacred Books of the Buddhists, I, 71). The story of Maitrībala is parallel to the stories of the king of the Çibis and of Maṇicūḍa.

[2] Cf. *infra* VII, 22 and foll — Traces of rhythm.

[3] Cf. Mhv. I, 373.

[4] *Cf.* M. Vyut. 61, CHILDERS s. voc. gotrabhū. The expressions: Çrāvaka-gotra, pratyeka°, bodhisattva°, although identical in meaning with the technical terms of the M. Vyut., are new; *cf.* Çikṣās. 8, 8 and *infra*, 23, 10.

सौख्यानि। तेषां शतानि। देवमनुष्योपपत्तिलभ्यानि[1]। अनु-
भवितुकामैः संसारसुखाभिलाषुकैरपि॥ सदैव सर्वकालं न
विमोच्यमपरित्याज्यं बोधिचित्तं। स्वीकर्तव्यमित्यर्थः॥ अथ वा
संबोधिकाङ्क्षिणामेव विशेषणानि॥ 5

अस्मादपि गुणविशेषाद्बोधिचित्तं ग्राह्यमित्याह।

भवचारकबन्धनो वराकः
सुगतानां सुत उच्यते क्षणेन।
स नरामरलोकवन्दनीयो
भवति स्मोदित एव बोधिचित्ते॥ ९॥ 10

संसार एव बन्धनागारं। तत्र बन्धनं बन्धो रागादय एव
यस्येति विग्रहः। तादृशो वराकस्तपस्वी[2] समुदित एव बोधि-
चित्ते। प्रथमतरं बोधिचित्तसंवरग्रहणसमये। सुगतानां सुत
उच्यते। बुद्धपुत्र इत्यभिधीयते। क्षणेन। तत्क्षणमेव॥

न केवलमेवेत्याह। स नरामरेत्यादि। सह नरामरैर्मनुष्य- 15
देवैर्वर्तन्ते ये। असुराद्यो [7a] लोकाः। तेषामपि वन्दनीयो
नमस्करणीयः स्तवनीयश्च भवति स्म। स्मशब्देनातीतकालाभि-
धान[न]ाद्बोधिचित्तोदयसमय[3] एव भूतः॥

अस्मादपि गुणानुशंसदर्शनाद्बोधिचित्तग्रहणे यत्नः करणीय
इत्याह। 20

---

1 Upapatti-rebirth; cf. *Childers*, s. voc.

2 Cf. *infra ad* VI, 51.

3 MS. abhidyantād —Cf. *infra ad* I, 21.

अशुचिप्रतिमामिमां गृहीत्वा
जिनरत्नप्रतिमां करोत्यनर्घां ।
रसजातमतीव वेधनीयं
सुदृढं गृह्लत बोधिचित्तसंज्ञं ॥ १० ॥

5 अमेध्यप्रतिमामिमां मनुष्यादिकलेवरस्वभावां तद्धातुकां तत्स्वभावां तेन संवर्धितामित्यर्थः । तां गृहीत्वाऽदाय । जिन एव रत्नं दुर्लभप्रतिलम्भादिगुणयोगात् । तस्य प्रतिमां करोति निष्पादयति बोधिचित्तं । तथागतविग्रहं निर्वर्तयतीत्यर्थः । किंभूतां । अनर्घां । न विद्यतेऽर्घो मूल्यं यस्याः । सर्वत्रैधातु-
10 कातिशायिगुणत्वाद्गुणपर्यन्तापरिज्ञानाच्च । तथोक्तां तां ॥

अत एव रसजातं । रसप्रकारं । अत्युच्चवेधकारित्वादतीव वेधनीयं । कर्तर्यनीयः करणे वा[1] । तस्मादृग्रं । बोधिचित्तं संज्ञा अस्य रसजातस्य । बोधिचित्तापरव्यपदेशं । सुदृढं गृह्णत यथा गृहीतं न पुनस्खलति । गृह्णीतेति प्राप्ते गृह्णतेति यथा-
15 गमपाठात्[2] ॥ तस्माज्जिनरत्नमात्मानं कर्तुकामैर्बोधिचित्तमहा-रसः सुदृढं ग्रहीतव्यः ॥

यथोक्तं चार्यमैत्रेयविमोक्षे[3] । तद्यथा कुलपुत्रास्ति हाटक-प्रभासं नाम रसजातं । तस्यैकं पलं लोहपलसहस्रं सुवर्णीकरोति ।

---

[1] Cf. Pāṇ. 3, 4, 68, and Vārtt. on 3, 1, 96.—*Speyer, Sanskrit Syntax* § 357 (saṁgamanīyo maṇiḥ : the jewel that causes the reunion).

[2] The form "gṛhṇati" is epic.—"The authority of the tradition warrants the irregular form."

[3] This fragment is quoted in Çikṣās. 177, 16-178, 2 (Cf. *infra ad* V, 98). Read with the Çikṣās.: saṁkleçayitum (p. 17, l. 6); but with our MS.: tadrasapalam (l. 1), suvarnān (l. 4), çakyate (l, 5).

न च तद्रसपलं शक्यते तेन लोहपलसहस्रेण पर्यादातुं लोही-कर्तुं वा। एवमेवैकः सर्वज्ञताचित्तोत्पादरसधातुः कुशल[मूल]-परिणामनाज्ञानसंगृहीतः सर्वकर्मक्लेशावरणलोहानि पर्यादाय सर्वधर्मान् सर्वज्ञतासुवर्णान् करोति। न च सर्वज्ञताचित्तोत्पाद-रसधातुः शक्यते सर्वकर्मक्लेशा[7b]वरणलोहादिभिः पर्यादातुं 5 तत्कर्तुं वेति॥

भवगतिषु विभूतिकामैरपि नात्र संशयो विपर्यासो वा कर्तव्यः। इत्युपदर्शयन्नाह।

सुपरीक्षितमप्रमेयधीभि-
र्बहुमूल्यं जगदेकसार्थवाहैः। 10
गतिपत्तनविप्रवासशीलाः
सुदृढं गृह्णत बोधिचित्तरत्नं॥ ११ ॥

गतय एव पत्तनानि। पण्यद्रव्यक्रयविक्रयनगराणीह पत्त-नानि। तद्वच्छुभाशुभकर्मपण्यद्रव्यक्रयविक्रयस्थानानि गतिपत्त-नानि। तेषु विप्रवासो विप्रवसनमेव शीलं स्वभावो येषां ते 15 तथोक्ताः। तेषां संबोधनं। हे गतिपत्तनविप्रवासशीलाः सुदृढं गृह्णत बोधिचित्तरत्नं॥ बोधिचित्तमेव रत्नं। रत्नमिव। यथा चिन्तामणिमहारत्नं सर्वदारिद्र्यदुर्गतिप्रशमनहेतुः। तथेदमपि बोधिचित्तरत्नं॥ अयमभिप्रायः। वणिज एव सुखसंपत्ति-लाभार्थिनो यूयं। अत इदमेव महारत्नं महतादरेण गृह्णत। 20 कुतः। बहुमूल्यमिति। हेतुपदमेतत्। यस्मादनर्घमिदं। सर्वा-

तिग्राथि लौकिकलोकोत्तरसंपत्तिनिदानभूतत्वात्। तस्मादि-
दमेव ग्राह्यमित्यर्थः॥

कथमिदं ज्ञायत इति चेदाह। सुपरीक्षितमिति। सुष्ठु
निरूपितं सम्यक् निर्णीतमित्यर्थः॥ कैरित्याह। अप्रमेय-
5 धीभिः। अप्रमेया प्रमातुमशक्या धीर्बुद्धिर्येषां तैर्महाप्राज्ञैर्बुद्ध-
बोधिसत्त्वैः। एतावता परीक्षायां स्खलितमपि नास्ति। इति
सुपरीक्षितमुच्यते॥ पुनरपि किंभूतैः। जगदेकसार्थवाहैः।
सार्थं वाहयन्तीत्यण्[1]। जगतामेक एव सार्थवाहाः करुणावश-
वर्तिनो बुद्धा भगवन्तो बोधिसत्त्वाश्च। तैः। यथा खलु वणिजां
10 हिताहितप्राप्तिपरिहारयोर्हितैषिणो ज्ञानवन्तश्च सार्थवाहा नेता-
[8a]रो भवन्तीति न तत्र विसंवादसंभावना। तथात्रापीत्य-
भिप्रायः। तस्मादिदमेव बोधिचित्तरत्नमनघं सुदृढं ग्राह्यमिति।

एतच्च तत्रैवोक्तं[2]। तद्यथा कुलपुत्र यावच्चन्द्रसूर्यौ मण्डल-
प्रभयावभासेते। अत्रान्तरे ये के चिद्धनधान्यरत्नजातरूपरजत-
15 पुष्पधूपगन्धमाल्यविलेपनवस्त्रपरिभोगाः। ते सर्वे वणिराज-
महामणिरत्नस्य मूल्यं न क्षमन्ते। एवमेव यावत्त्रिध्वध्वसु
सर्वज्ञज्ञानं धर्मधातुविषयमवभासयति। अत्रान्तरे यानि कानि
चित्सर्वदेवमनुष्यसर्वसत्त्वसर्वश्रावकप्रत्येकबुद्धकुशलमूलानि सास्र-
वानास्रवाणि सर्वाणि तानि बोधिचित्तोत्पादवणिराजमहामणि-
20 रत्नस्य मूल्यं न क्षमन्ते। इति॥

---

1 See PĀṆ. 3, 2, 1.

2 *Maitreyavimokṣe*, one of the rare quotations in our text hitherto not found in the Çikṣās.

इदमपरमसाधारणमतिशयवत्कल्पतरोरिव माहात्म्यमस्यो-पदर्शयन्नाह।

कदलीव फलं विहाय याति
क्षयमन्यत्कुशलं हि सर्वमेव।
सततं फलति क्षयं न याति 5
प्रसवत्येव तु बोधिचित्तवृक्षः॥ १२॥

कदली यथा फलमेकवारं दत्त्वा न पुनः फलति। तथा बोधिचित्तादन्यदपि कुशलं सर्वमेव। किं चिदेव। विपाके[1] परिपक्के न पुनः फलदानसमर्थं भवति। तावतैवास्य परिक्षयात्। विपाकस्य चाव्याकृततया पुनः फलानुबन्धाभावात्॥ बोधिचित्त- 10 स्य पुनरयं विशेष इत्याह। सततमित्यादि। सर्वकालं फलति। देवमनुष्योपपत्तिषु सुखसंपत्तिप्रदानात् क्षयं न याति तदन्यकु-शलवत् स्थिरस्वभावत्वात्। प्रतिक्षणमनेकप्रकारैः शुभमेघप्रवाहै-रापूर्यमाणत्वाच्च प्रसवत्येव तु बोधिचित्तवृक्षः। अविच्छिन्नसुख-संपत्तिफलप्रसवनात्। उत्तरोत्तरमपरापरगुणविशेषजननाच्च। 15 बोधिचित्तं वृक्ष इव। उपमितं व्याघ्रादिभिरिति समासः[2]। यस्मादेवं तस्मादनुपरतमतिशयवत्सर्वसुखसं[8b]पदः प्राप्तुकामैः प्रेक्षावद्भिरिदमेव ग्राह्यं।

---

1 MS. has: "na kiṁ cid eva vipāke na; na erased.
2 Pāṇ. 2, 1, 56

कथितं चैतदार्याक्षयमतिनिर्देशे[1] । तद्यथापि नाम भदन्त शारद्वतीपुत्र महासमुद्रपतितस्योदकबिन्दोर्नास्त्यन्तरा परिक्षयः पर्यादानं । यावन्न कल्पपर्यन्त इति । एवमेव बोधिपरिणामितस्य कुशल[मूल]स्य नास्त्यन्तरा परिक्षयः पर्यादानं । यावन्न
5 बोधिमण्डनिषदनं । इति ॥

न केवलं सर्वशुभसंचयकारणं । अकुशलपक्षक्षयहेतुरपि बोधिचित्तमिति सार्धश्लोकेन दर्शयन्नाह ।

कृत्वापि पापानि सुदारुणानि
यदाश्रयादुत्तरति क्षणेन ।
10 शूराश्रयेणेव महाभयानि
नाश्रीयते तत्कथमज्ञसत्त्वैः[2] ॥ १३ ॥

बोधिचित्तग्रहणात्पूर्वं कृत्वापि पापानि । अकुशलकर्माणि । नरकादिषु दुःसहदुःखदायकत्वात् सुदारुणानि । अतिभयंकराणि । महान्ति वा । यस्य बोधिचित्तस्याश्रयादाश्रयणात् ।
15 तदुत्पादनरक्षणवर्धनसेवनलक्षणात् । उत्तरति निस्तरति तत्सामर्थ्याभिभवेनातिक्रामतीत्यर्थः । क्षणेन । एकस्मिन्नेव क्षणे महतः पुण्यराशेः समुपार्जनात् । तदुत्पादनमात्रेण ॥ कथमिवोत्तरति । शूराश्रयेणेव महाभयानि । बलवत्पुरुषाश्रयेण यथा महापराधं कृत्वापि कश्चिदुत्तरति । तदपराधफलान्निर्भयो भवति । तथा

1 The same text is quoted Çikṣās. 158, 7, with some variants.
2 On this topic, see Çikṣās. Chap. VIII, pāpaçodhana.

प्रक्षतेऽपि ॥ तदेवंभूतं बोधिचित्तं कथं किमिति नाश्रीयते।
न सेव्यते। अज्ञसत्त्वैः प्रज्ञाविकलैर्मूढजनैरित्यर्थः। आश्रयणीय-
मेव तद्भवेदिति भावः।

इदमपि तत्रैवोक्तं[1]। तद्यथा कुलपुत्र शूरसंनिश्रितः पुरुषः
स्वर्वशत्रुभ्यो न बिभेति। एवमेव बोधिचित्तोत्पादशूरसंनिश्रितो 5
बोधिसत्त्वः सर्वदुश्चरितशत्रुभ्यो न बिभेतीति।

अपरमपि बोधिचित्तात्पापक्षयदृष्टान्तमाह।

युगान्तकालानलवन्महान्ति
पापानि यन्निर्दहति क्षणेन।

युगान्तकाले प्रलयसमये [ ] अनलो वह्निः सप्तसूर्योदय- 10
समुद्भूतः[2]। यथा सर्वं कामधातुं सप्रथमध्यानं[3] निर्दहति। निःशेषं
दहति यथा भस्मापि नावशिष्यते॥ तद्वत्पापानि। किंभूतानि।
महान्ति। सुमेरुप्रख्यानि। महारौरवादिदुःखविपाकानि।
यद्बोधिचित्तं निर्हरति। तद्विपाकोपघातान्निर्मूलयति। क्षणेन।
न चिरेण। नाश्रीयते तत्कथमज्ञसत्त्वैरिति संबन्धः कार्यः। 15

एतदपि तत्रैवोक्तं[4]। कल्पोद्दाहाग्निभूतं सर्वदुष्कृतनिर्दहन-
तया। पातालभूतं सर्वाकुशलधर्मपर्यादान[करण]तयेति ॥

---

1 Hitherto not found in the Çikṣâs.

2 Cf. Sp. Hardy, *Manual*, p. 30.

3 New use of the prefix "Sa" if the reading be correct. Buddhist sanskrit: saha prathamadhyânât; classic: sahapûrvâhṇam (PĀṆ. 6, 3, 81, Comm.; W. K. F., *s. voc.*, 3 c.)

4 This fragment occurs in *Çikṣâ.* 177, [14], quoted from the *Âryamaitreya-vimokṣa.*

ननु कृतकर्माविप्रणाशवादी भगवान् । तत्कथमिदमभि-
धीयते ॥ सत्यमुच्यते । बोधिचित्तप्रसूते प्रतिक्षणमाकाशधातु-
व्यापके महति पुण्यौघेऽन्तर्भूततया लवणपलोपमन्यायेनाप्रज्ञाय-
मानत्वात् । बलवता प्रतिपक्षेणाभिभूतत्वाच्च । फलदानासमर्थं
5 दग्धमेव तदित्यदोषः ॥ यदि वा । निरुपायाभिसंधिना तदुक्तं ।
नाभुक्तं क्षीयते कर्मेति । इदं तु सर्वपापनिर्मूलने महानुपायः ।
तथा हि यदा बोधिसत्त्वः सर्वसत्त्वानाकाशधातुव्यापिनः सर्व-
दुःखात्समुद्धृत्य सर्वसुखसंपन्नान् करिष्यामीत्यध्याशयेन विचि-
न्तयति । पूर्वकृतं च पापं विदूषणासमुदाचारादिभिः[1] क्षपयति ।
10 तदा बोधिचित्तबलादेव तत्संताने पापस्य कः सद्भावो येन
चोद्यस्यावकाशः स्यादिति सर्वं निराकुलं ॥ एतावता यदुक्तं

तत्क्षीयतेऽन्येन शुभेन केन । इति[2] ।

तदपि विस्पष्टीकृतं ॥ अन्ये पुनरनियतविपाकापेक्षया सर्व-
मेतदुच्यते । नियतविपाकस्य तु कर्मणः केन चित्प्रतिषेद्धु-
15 मशक्यत्वा [9b] दित्याहुः ॥

इत्थमपि बोधिचित्तमुपादेयमित्याह ।

**यस्यानुशंसानमितानुवाच**
**मैत्रेयनाथः सुधनाय धीमान् ॥ १४ ॥**

यस्य बोधिचित्तस्य । अनुशंसान्[3] स्वाभाविकान् गुणान्-

---

1 Cf. *Çikṣâs.* pp. 160–171, and *infra* V. 98.

2 See *supra* p. 11, 16.

3 Cf. infra VII. 81, but ad V 41. : ânuçaṁsa ; the correct reading is ânṛçaṁsa (cf. KERN, Saddh. puṇḍ, 336, n. 1 ; Pâli : ânisaṁsa.) cf. anuçaṁsâ, p. 10, 17, anuçaṁsa, 15, 19.

मितानप्रमाणान्। मैत्रेयनाथः। भगवानजितः[1]। किंभूतो धीमान्[2] बोधिसत्त्व उवाच। उक्तवान्। सुधनाय सुधननाम्ने बोधिसत्त्वाय। तथा चा[र्यगण्डव्यूह]सूत्रे[3] वर्णितं। बोधिचित्तं हि कुलपुत्र बीजभूतं सर्वबुद्धधर्माणां। क्षेत्रभूतं सर्वजगच्छुक्ल-धर्मविरोहणतया। धरणिभूतं सर्वलोकप्रतिशरणतया। याव- 5
त्पितृभूतं सर्वबोधिसत्त्व[ा]रक्षणतया॥ पेयालं॥ वैश्रवणभूतं सर्वदारिद्र्यसंछेदनतया। चिन्तामणि[राज]भूतं सर्वार्थसंसाधन-तया। भद्रघटभूतं सर्वाभिप्रायपरिपूरणतया। शक्तिभूतं क्लेश-शत्रुविजयायेत्यादिविस्तरः॥

नाश्रीयते तत्कथमन्यसत्त्वैरित्यत्रापि योजनीयं॥ 10

इदानीं बोधिचित्तस्य प्रभेदं दर्शयन्नाह।

**तद्बोधिचित्तं द्विविधं विज्ञातव्यं समासतः।**
**बोधिप्रणिधिचित्तं च बोधिप्रस्थानमेव च[4]॥ १५**

तत्समनन्तरप्रदर्शितानुशंसं बोधिचित्तं द्विविधं। द्विप्रकारं। विज्ञातव्यं। वेदितव्यं॥ [5]गोत्रभूम्यादिगतानेकप्रकारसंभवेऽपि 15
कथं द्विविधमित्याह। समासतः। अपरप्रकारसंभवेऽपि संक्षेपत

---

[1] On this surname of Maitreya, see KERN, Saddh. puṇḍ, 18, *n.*; cf. *Çikṣâs*, 5, 20, (and 101, 18) and infra ad I. 25.

[2] Epithet of the Bodhisattvas, see Pentaglotte DE HARLEZ, T'oung-pao, VII. 4.

[3] Fragment of the text quoted Çikṣâs. 5, 20, with the same omissions.

[4] cf. Çikṣâs. 8, 15.

[5] cf. *supra* p. 14, n. 4.

इदं द्विविधमित्युच्यते॥ द्विविधमपि कथं। [1]बोधिप्रणिधि-
चित्तमित्येकं। बोधिप्रस्थानमिति द्वितीयं॥ बोधौ प्रणिधि-
रेव चित्तं तत्र वा चित्तं। यच्चित्तं प्रणिधानादुत्पन्नं
भवति दानादिप्रवृत्तिविकलं च। तत्प्रणिधिचित्तं। तद्यथा
5 सर्वजगत्परित्राणाय बुद्धो भवेयमिति प्रथमतरं प्रार्थनाकारा
चेतना॥ प्रस्थाने चित्तं। प्रस्थानमेव वा चित्तं चित्तस्य
तत्स्वभावत्वात्। पूर्वकमनस्कारपुरःसरमेव यतः प्रभृति [10ᵃ]
संवरग्रहणपूर्वकं संभारेषु प्रवर्तते। तत्प्रस्थानचित्तमिति उक्त-
क्रमेण द्वैविध्यं॥ इयानेव भेद इत्येवकारेण प्रतिपादयति॥
10 चकारद्वयं परस्परसमुच्चये द्वयोरपि बोधिचित्तत्वं दर्शयति।
तेन पूर्वकं बोधिचित्तं न भवतीति शङ्कां निरस्यति॥

शूरङ्गमसूत्रे[2] मायोत्पादितस्यापि बोधिचित्तस्य बुद्धत्वहेतु-
त्वाभिधानात्। तथार्यगण्डव्यूहे[3] चोक्तं। दुर्लभाः कुलपुत्र ते
सत्त्वाः सत्त्वलोके[4] ये ऽनुत्तरस्यां सम्यक्संबोधौ चित्तं प्रणिदधति।
15 ततोऽपि दुर्लभतमास्ते सत्त्वा ये ऽनुत्तरां सम्यक्संबोधिमभि-
संप्रस्थिता इति॥

इदानीमुक्तमेव प्रभेदमुदाहरणेन व्यक्तीकुर्वन्नाह।

**गन्तुकामस्य गन्तुश्च यथा भेदः प्रतीयते।**
**तथा भेदोऽनयोर्ज्ञेयो याथासंख्येन पण्डितैः॥१६**

---

[1] Ms.: bodhicittapra°.
[2] cf. Çikṣās. p. 8, 19.
[3] cf. *ibidem*, p. 8, 16–19.
[4] Çikṣās. has: sarva°.

यथा कश्चित्पुरुषोऽभिमतदेशप्राप्तये गन्तुकामो गमनाभिप्रायो न तु पुनर्गच्छत्येव । अन्यः पुनस्तत्प्राप्तये प्रस्थितो गच्छत्येव । यद्यथा तयोर्भेदो विशेषः प्रतीयतेऽवगम्यते । तद्वत्तथा भेदो नानात्वमनयोर्बोधिप्रणिधिप्रस्थानचेतसोर्यथोऽवबोद्धव्यः पण्डितैर्विचक्षणैः । कथं । यथासंख्येन । स्वार्थेऽयम्[1] । प्राक्तनं प्रणिधिचित्तस्य निदर्शनं पश्चात्तनं[2] प्रस्थानचेतस इति संख्यार्थः ॥ तदेतत्प्रणिधिचित्तं प्रतिपत्तिविकलमपि[3] संसारे महाफलं भगवता वर्णितमित्याह ।

## बोधिप्रणिधिचित्तस्य संसारेऽपि फलं महत् ।

यदि नाम तत्प्रतिपत्तिविकलं तथापि तस्यास्तां तावद् बुद्धत्वं[4] संसारेऽपि देवमनुष्योपपत्तिस्वभावं सुखसंपत्तिलक्षणं फलं महत् । अन्यस्मात् कुशलाद् बृहत् । सततं फलतीत्यादिविशेषणविशिष्टत्वात् । तथा चोक्तमार्यमैत्रेयविमोक्षे[5] । तद्यथापि नाम कुलपुत्र भिन्नम[10b]पि वज्ररत्नं सर्वप्रतिविशिष्टं सुवर्णालंकारमभिभवति । वज्ररत्ननाम च न विजहाति । सर्वदारिद्र्यं च[6] विनिवर्तयति । एवमेव कुलपुत्र प्रतिपत्तिभिन्नमपि[7] सर्वज्ञताचित्तोत्पादवज्ररत्नं सर्वश्रावकप्रत्येकबुद्धगुण-

---

1 W.K.F.: yathā° (Whitney 1313, e; Speyer, S. Syntax, 255).—Gramm. note deest in Tib.

2 Paççāttana, the word seems new.

3 The corresponding expression in Çikṣās. is caryāvikala (9, 7), āçayapratipatti° (10) (*cf. infra* p. 27, 7).

4 Tib. has: buddhatvahetutvam.

5 *Cf.* Çikṣās. 9, 8-12.

6 Çikṣās. omits ca.

7 *Ibidem* āçayapratipatti°.

सुवर्णालंकारमभिभवति । बोधिचित्तनाम च न विजहाति । संसारदारिद्र्यं[1] च विनिवर्तयतीति ॥

तस्माद्योऽपि पारमितासु सर्वेण सर्वं सर्वथा शिक्षितुमसमर्थः । तेनापि बोधिचित्तमुत्पादनीयं । एवमुपायपरिग्रहेण
5 महाफलत्वात् ॥

यथोक्तमार्य[ापर]राजाववाद[क]सूत्रे[2] । यस्मात्त्वं महाराज बह्वकृत्यो बहुकरणीयः । असहः सर्वेण सर्वं सर्वथा[3] दानपारमितायां शिक्षितुं । यावत्प्रज्ञापारमितायां शिक्षितुं । तस्मात्तर्हि त्वं महाराज । एवमेव संबोधिच्छन्दं श्रद्धां प्रार्थनां प्रणिधिं
10 च । गच्छन्नपि तिष्ठन्नपि निषण्णोऽपि शयानोऽपि जाग्रदपि भुञ्जानोऽपि पिबन्नपि सततसमितमनुस्मर । मनसिकुरु । भावय । सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकपृथग्जनानामात्मनश्चातीतानागतप्रत्युत्पन्नानि कुशलमूलानि पिण्डयित्वा तुलयित्वाऽनुमोदयस्व । अग्र्ययाऽनुमोद[न]या[4] । अनुमोद्य च सर्वबुद्ध-
15 बोधिसत्त्वप्रत्येकबुद्धार्यश्रावकाणां पूजाकर्मणि[5] निर्यातय । निर्यात्य च सर्वसत्त्वसाधारणानि कुरु । ततः सर्वसत्त्वानां यावत्सर्वज्ञताप्रतिलम्भाय सर्वबुद्धधर्मपरिपूरणाय दिने दिने त्रैकाल्यमनुत्तरायां सम्यक्संबोधौ परिणामय । एवं खलु त्वं

---

[1] Çikṣās. and Tib.: sarvasaṁsāra°. [2] *Cf.* Çikṣās. 9, 12. *cf. infra* Chap. III.

[3] Read: sarvathā sarvadā, with Tib.—Çikṣās. has: Yasmāc ca tvam... sarveṇa sarvaḥ sarvathā sarvaṁ sarvadā.

[4] With more developments in the Çikṣās.

[5] Çikṣās. has: °karmaṇe.

महाराज प्रतिपन्नः सन् राज्यं चकारयिष्यसि[1]। राज्य[11a]कृत्यानि [च] न हापयिष्यसि। बोधिसंभारांश्च परिपूरयिष्यसि॥ इत्यादिकमुक्त्वाह[2]। स खलु पुनस्त्वं महाराज सम्यक्संबोधिचित्तकुशलमूलविपाकेन[3]। अनेककृत्वो देवेषूपपन्नोऽभूः। अनेककृत्वो मनुष्येषूपपन्नोऽभूः। सर्वासु च देवमनुष्योपपत्तिष्वाधिपत्यं कारयिष्यसीति[4] विस्तरः।

इति चर्याविकलेऽपि बोधिचित्ते नावमन्यना कार्या। तस्याप्यनन्तसंसारे सुखप्रसवनात्[5]। यत्पुनः प्रतिपत्तिसारं बोधिचित्तं तदतितरां विपुलफलमेवेति सिद्धमित्याह।

न त्वविच्छिन्नपुण्यत्वं यथा प्रस्थानचेतसः॥ १७

न तु। न पुनः। यथा प्रस्थानचित्तस्याविच्छिन्नपुण्यत्वं निरन्तरशुभप्रवाहवाहित्वं। न तथा अस्येति भावः॥ इदमेवाविच्छिन्नपुण्यत्वं वृत्तद्वयेन प्रसाधयन्नाह।

यतः प्रभृत्यपर्यन्तसत्त्वधातुप्रमोक्षणे।
समाददाति तच्चित्तमनिवर्त्येन चेतसा॥ १८
ततः प्रभृति सुप्तस्य प्रमत्तस्याप्यनेकशः।
अविच्छिन्नाः पुण्यधाराः प्रवर्तन्ते नभःसमाः॥ १९

---

1 Ms. : pratipannaḥ svarājyaṁ kariṣyasi I rāja°.

2 Instead of: "ityādikam uktvāha" the Çikṣās. has "atraiva cāsya vipāka uktaḥ."

3 Çikṣās. has: tasya samyaksaṁbodhicittasya kuçalakarmaṇo vipākena.

4 Çikṣās. has: kārayasi.

5 Read, with Tib.: anantasukha° Cf. Çikṣās. 9, 7 where Çāntideva has written :...kartavyā...anantasaṁsārasukhaprasavanatvāt.

यतः प्रभृति यस्मादारभ्य । न विद्यते पर्यन्त इयत्तास्येत्य-
पर्यन्तस्य । आकाशधातुव्यापिनः सत्त्वधातोः । प्रमोक्षणे प्रमोक्षे
सर्वदुःखोपशमनिमित्ते । समाददाति तच्चित्तं । सम्यक्संबोधि-
चित्तं समादाय वर्तते । कथं । अनिवर्त्येन चेतसा । अ[प्रवृत्ति-
5 भ्र]ष्टेन[1] मनसा ।

ततः प्रभृति तदादिं कृत्वा । सुप्तस्य मिद्धाक्रान्तचित्तस्य
प्रमत्तस्य विक्षिप्तचित्तस्यापि । उभयथापि संबध्यते । उपलक्षणं
चैतत् । गच्छतोऽपि तिष्ठतोऽपि निषण्णस्यापि भुञ्जानस्यापि
मूर्छाद्यवस्थायामपीत्यादि द्रष्टव्यं ॥ अनेकश इति । प्रतिक्षण-
10 मनेकवारं ॥ अविच्छिन्नाः पुण्यधाराः । निरन्तरसंततयः
शुभवेगाः प्रवर्तन्ते । नभःसमाः । प्रतिक्षणमाकाशधातुप्रमाणाः ॥
तस्मात्प्रतिपत्तिसारेण बोधिसत्त्वेन भवितव्यं ।

आर्यसमाधिराजे चोक्तं[2] । [11b]तस्मात्प्रतिपत्तिसारो भवि-
ष्यामि । इत्येवं कुमार शिक्षितव्यं । तत्कस्य हेतोः । प्रतिपत्ति-
15 सारस्य कुमार न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिरिति ॥

अविच्छिन्नपुण्यत्वमस्य भगवतैवोक्तं । इत्युपदर्शयन्नाह ।

**इदं सुबाहुपृच्छायां सोपपत्तिकमुक्तवान् ।**
**हीनाधिमुक्तिसत्त्वार्थं स्वयमेव तथागतः ॥ २०**

---

[1] Three or four akṣaras illegible.—Tib.: bjug-pa-nyams-pa-med-paisems-kyis.

[2] Quoted with variants from Chap. X, p. 32, 24 (edited by ÇARAT CHANDRA DÁS and HARIMOHAN VIDYÁBHÚSHAN).

इदमेवाप्रमेयपुण्यत्वं स्वयमेवात्मनैव तथागतो बुद्धो भगवानुक्तवान् कथितवान्। क्व। सुबाहुपृच्छायां। सुबाहुपृच्छानाम्नि सूत्रे[1]। कथं सोपपत्तिकं सयुक्तिकं[2]। किमर्थं हीनाधिमुक्तिसत्त्वार्थं। हीनश्रावकप्रत्येकबुद्धयानेऽधिमुक्तिः श्रद्धा रुचिर्वा येषां ते। ते सत्त्वाश्च। तेभ्य इदं। तदर्थं। तत्प्रयोजनमुद्दिश्येत्यर्थः॥ तथा हि येऽनियतगोत्राश्चिरतरकालेन[3] बहुतरसंभारोपार्जनभीता महायानाच्चित्तं व्यावर्त्य लघुतरकालेनाल्पतरसंभारसाध्ये श्रावकप्रत्येकबुद्धयाने चित्तमुत्पादयन्ति। तद्व्यावर्तनार्थं भगवानुपपत्तिमाह। तामेवोपपत्तिं वृत्तद्वयेन कथयन्नाह।

**शिरःशूलानि सत्त्वानां नाशयामीति चिन्तयन्।**
**अप्रमेयेण पुण्येन गृह्यते स्म[4] हिताशयः॥ २१**
**किमुताप्रमितं शूलमेकैकस्य जिहीर्षतः।**
**अप्रमेयगुणं सत्त्वमेकैकं च चिकीर्षतः॥ २२**

कतिपयजनानां मस्तकपीडां नाशयामि मन्त्रेणागदेन[5] वा। इत्येवं मनसि कुर्वन्नप्रमेयेण सुकृतेनासौ कल्याणाभि-

---

1 *Subāhuparipṛcchā*, K.F. 216; Nanjio 23, 26 [ A.D. 384–417 ]; 23, 87 (49, 50) [ A.D. 265–316 ]; 531, 822.—M. Vyut. 65, 60.

2 Sayuktika, new word.

3 Aniyatagotra, *Cf. supra* p. 14, n. 4.—Cf. *Laṅkāv.* p. 66.

4 Tipp.: gṛhyate smeti pūrvaval laṭ (*Cf.* Pāṇ. 3, 2, 123, 118; and *supra ad* I, 9).

5 Tipp.: mantreṇauṣadhena vā.

प्राप्तो गृहीतो द्रष्टव्यः ॥ किं पुनरप्रमाणं संसारदुःखं प्रति-
सत्त्वमप्रमाणस्य जगतो हर्तुमिच्छतः । अपि च तच्छूलमपनीय
सर्वसत्त्वान् सर्वगुणसमङ्गिनः कर्तुमिच्छतः । किमप्रमेयं पुण्यं न
भवति । इति विभक्तिविपरिणामेन योजनीयं । अविच्छिन्नाः
5 पुण्यधाराः किमुत तस्य न प्रवर्तन्ते नभःसमा इति[1] ॥
तस्माद्यथा संभारबाहुल्यस[[12a]]ध्यं बुद्धत्वं । तथा संभारवैपुल्ये-
ऽपि[2] प्रतिक्षणमिति हेतुविशेषादत्रैव महायाने महान् लाभः ।
अतो नास्माच्चित्तमभयस्थाने कातरतया विनिवर्तनीयमित्युप-
दर्शितं भवति । यदच्यति ।

10 क्षपयन् पूर्वपापानि प्रतीच्छन् पुण्यसागरान् ।
बोधिचित्तबलादेव श्रावकेभ्योऽपि शीघ्रगः ॥ इति ।[3]

यश्चैवं सर्वसत्त्वानां हितसुखार्थमुद्युज्यते स देवादिभ्योऽप्य-
साधारणगुणत्वात् प्रशस्य इत्युपदर्शयन्नाह ।

**कस्य मातुः पितुर्वापि हिताशंसेयमीदृशी ।**
15 **देवतानामृषीणां[4] वा ब्रह्मणां वा भविष्यति ॥ २३**

कस्य सत्त्वस्य । मातुर्जनन्याः कस्य पितुर्वा जनकस्य
देवतानां सोमवरुणादीनामृषीणां वा वसिष्ठगौतमादीनां
ब्रह्मणां वा वेधसां । इयमीदृशी हिताशंसा । हितोपसंहार-
मतिर्यादृशी समनन्तरं प्रतिपादिता बोधिसत्त्वस्य । भविष्यति ।

---

1 *Supra* I, 19. 2 Ms.: °vaipulyamapi.
3 *Infra* VII, 29.
4 *Sic* Tipp.—Minaev and Text-Mss. have: devānāṁ vā ṛṣiṇāṁ vā.

इति । आस्तां तावत् भूता भवति[1] वा । भविष्यत्यपि[1] नैव कस्य चिद्बोधिसत्त्वमन्तरेणान्यस्य ॥ कुतः पुनरेतदित्याह ।

**तेषामेव च सत्त्वानां स्वार्थेऽप्येष मनोरथः ।**
**नोत्पन्नपूर्वः स्वप्नेऽपि परार्थे संभवः कुतः ॥ २४**

तेषां मात्रादीनां । स्वार्थेऽपि । आत्मनः कृतेऽपि । एष 5 मनोरथः सर्वदुःखमपहर्तुं । अप्रमाणगुणानाधातुं । नोत्पन्नपूर्वः । अभूतपूर्वः । स्वप्नेऽपि । आस्तां तावज्जाग्रदवस्थायां बुद्धिपूर्वकमुत्पन्नः ॥ परार्थे कदा चिदुत्पद्यत इत्याह । परार्थे संभवः कुतः । आत्मा हि वल्लभो लोकस्य परस्मात् । तत्रैव चेन्नास्ति । परार्थे संभावनापि कुतः ॥ अथ वा । स्वप्नेऽपि परार्थे संभवः 10 कुतः इति योज्यं ।

तदेवमसाधारणत्वं बोधिसत्त्वस्य प्रतिपाद्योपसंहरन्नाह ।

**सत्त्वरत्नविशेषोऽयमपूर्वो जायते कथं[2] ।**
**यत्परार्थाशयोऽन्येषां न स्वार्थेऽप्युपजायते ॥ २५**

एवमत्यद्भुतकर्मकारितया दुर्लभोत्पादात् सत्त्व एव रत्न- 15 विशेषः । अपूर्वः अनुपलब्धपूर्वः । अयमिति चाडुग्रगुणोऽत्र कथितः [12b] । जायते कथं । कथमित्यद्भुते ॥ कस्मात्पुनरेवमुच्यते । आह । यत्परार्थेति । यस्य महात्मनः परार्थाशयोऽन्येषां सत्त्वानामुन्मत्तकानेष न स्वार्थेऽप्युपजायत इत्यस्मात् ॥

---

[1] Ms. has: bhavanti, bhaviṣyanti. [2] Minaev and Text-Mss.: kutaḥ.

अत्र चान्येऽपि बोधिचित्तोत्पादकस्य गुणा वक्तव्याः । यथार्यगण्डव्यूहे[1] भगवतार्यमैत्रेयेण सुधनमधिकृत्योद्भाविताः । ते चातिविस्तरेण शास्त्रकृता शिक्षासमुच्चये दर्शिताश्च तत्रैवावधारयितव्याः ॥

5 पुनरपि बोधिचित्तानुशंसाद्वारेण बोधिसत्त्वस्याप्रमेयपुण्यत्वमाह ।

जगदानन्दबीजस्य जगद्दुःखौषधस्य च ।
चित्तरत्नस्य यत्पुण्यं तत्कथं हि प्रमीयतां ॥ २६

सर्वसत्त्वानां सर्वप्रामोद्यकारणस्य देवादिसर्वसंपत्तिनिदान-
10 भूतत्वात् । चित्तरत्नस्य बोधिचित्तस्य यत्पुण्यं तत्कथं हि प्रमीयतां । केन प्रकारेण नाम संख्येयतां । अतिविपुलतया प्रमातुमशक्यत्वात् ॥ एतदुक्तमार्यवीरदत्तपरिपृच्छायां[2] ।

बोधिचित्ताद्धि यत्पुण्यं तच्च रूपि भवेद्यदि ।
आकाशधातुं संपूर्य भूयश्चोत्तरि तद्भवेत् ॥ इति ।

15 यदि नाम सामान्येन निर्देशस्तथापि प्रस्थानचित्तस्येति द्रष्टव्यं । तस्यैव प्रकृतत्वात् ॥ पुनरपि तस्यैव विशेषणमाह । जगद्दुःखौषधस्य चेति । सर्वप्राणभृतां[3] कायिकचैतसिकसर्वदुःखनिवर्तनतया सर्वव्याधिहरणमहागदस्वभावत्वात् । तदने-

---

1 *Cf.* Çikṣās. 5, 20, and *supra* I, 14.

2 A *Vîradattaparipṛcchâ* (prose) is quoted in Çikṣās. 34, 16 230, 10.

3 New word = prâṇabhṛt.

नाभ्युदयनिःश्रेयसहेतुत्वं बोधिचित्तस्य प्रतिपादितं ॥ अतो युक्तमेवासंख्येयपुण्यमित्युक्तं भवति । कथं पुनरेतद्युक्तमित्याशङ्क्य प्रतिपादयन्नाह ।

**हिताशंसनमात्रेण बुद्धपूजा विशिष्यते ।**
**किं पुनः सर्वसत्त्वानां सर्वसौख्यार्थमुद्यमात्[1] ॥ २७** 5

सर्वजगत्परित्राणाय बुद्धो भवेयमित्यभ्याशयेनाशंसनात् प्रार्थनात् केवलात्प्रतिपत्तिविकलाद्बोधिचि[13a]त्तादित्यर्थः । यत्पुण्यं भवति तद्बुद्धपूजामतिशेते । इत्यागमाद्भवत्येव पुण्यस्कन्धप्रसवहेतुः । इति प्रथमस्य बोधिचित्तस्य[2] माहात्म्यमुक्तं । एतदपि तत्रैवोक्तं । 10

गङ्गावालिकसंख्यानि बुद्धक्षेत्राणि यो नरः ।
दद्याद्रत्नपूर्णानि लोकनाथेभ्य एव हि ॥
यश्चैकः प्राञ्जलिर्भूत्वा चित्तं बोधाय नामयेत् ।
इयं विशिष्यते पूजा यस्यान्तोऽपि[3] न विद्यते ॥ इति ।

किं पुनः सर्वदुःखितजनानां सर्वदुःखमपनीय सर्वसुखसंपादनं 15 करिष्यामीत्युद्योगकरणादतिप्रसवत्पुण्यं न भवति ॥

ननु हिताहितप्राप्तिपरिहारयोः स्वयमेव सत्त्वा विचक्षणाः । तत्कथमस्योपयोग इति तच्चिन्तयेन परिहरन्नाह ।

---

1 Tipp. has: udyamāt prasthānacetasaḥ.
2 Cf. *Mhv.* I, 80, 4.
3 *Sic* Ms.

दुःखमेवाभिधावन्ति दुःखनिःसरणाशया ।
सुखेच्छयैव संमोहात् स्वसुखं घ्नन्ति शत्रुवत् ॥ २८
यस्तेषां सुखरङ्काणां पीडितानामनेकशः ।
तृप्तिं सर्वसुखैः कुर्यात्सर्वाः पीडाश्छिनत्ति च ॥ २९
5 नाशयत्यपि संमोहं साधुस्तेन समः कुतः ।
कुतो वा तादृशं मित्रं पुण्यं वा तादृशं कुतः ॥ ३०

दुःखान्निःसरणाभिप्रायाः प्राणातिपातादिभिरकुशलैः कर्मभिः क्षुधादिदुःखप्रतीकारमिच्छन्तः । दुःखमेव नरकादिप्रपातवेदना-स्वभावं । अभिधावन्ति तदभिमुखाः प्रवर्तन्ते । दुःखमेव प्रवि-
10 शन्तीत्यर्थः । शलभा इव दीपशिखामिति ॥ अत एव सुखे-च्छयैव सुखाभिलाषेणैव स्वसुखं घ्नन्ति शत्रुवत् । आत्मसुख-घाताय कथमात्मनैव शत्रवो भवन्ति । इति चेत् । संमोहा-द्विपर्यासवशात् हिताहितप्राप्तिपरिहारयोः परिज्ञानाभावात् ॥

अतो यः पुण्यात्माऽकारणवत्सलः । तेषां विपर्यस्तानां
15 सुखरङ्काणां सुखाभिलाषुकाणां सर्वशोऽलब्धसुखानां पीडितानां दुःखितानां । अनेकश इति । अनेकैर्दुःखशतैर्बहुधा बाधितानां । तृप्तिमाप्यायनं सर्वसुखैः कुर्यात् [13b] कायिकचैतसिकैः । यदि वा । अनेकशोऽनेकप्रकारं तृप्तिं सर्वसुखैः कुर्यात् । इति योजनीयं ॥ न सुखतृप्तिमात्रं जनयति । किं तर्हि सर्वाः पीडाः
20 समस्ता दुःखा वेदनाश्छिनत्ति च शमयति च ॥

न केवलं दुःखप्रशान्तिं सुखतृप्तिं च करोति । नाशयत्यपि संमोहं । अपरिज्ञानमपि निवर्तयति ।

अपथमिदमेष पन्था भयमत इत एत गात[1] मासादं ।
इति हेयोपादेयमार्गप्रकाशनात् ॥ यश्चैवं परव्यसनविवर्तनपरतन्त्रो
हितसुखविधानतत्परश्च सर्वभूतानां । साधुस्तेन समः कुतः ।
तेन महात्मना तुल्यः साधुः कुतः । नैव कुतश्चिद्विद्यते ।
अकारणपरमवत्सलस्वभावत्वात् । कुतो वा तादृशं मित्रं । 5
हितसुखोपसंहारप्रवणमानसं परमविश्वासस्थानं तादृशं तत्समं ।
सुहृत्कुतो नैव संभवति । पुण्यं वा तादृशं कुतः । एवं विहरतो
बोधिसत्त्वस्य यत्पुण्यमुपजायते तदपि न केन चित्पुण्येन समानं ॥

कृते यः प्रतिकुर्वीत सोऽपि तावत्प्रशस्यते ।
अव्यापारितसाधुस्तु बोधिसत्त्वः किमुच्यतां ॥ ३१ 10

पूर्वं भयसंकटव्यसनेषूपकृतमनेन । इत्युपकृते सति प्रत्युपकारं
करोति यः । सोऽपि तावत्प्रशस्यते । लोकेन स्तूयते साधुरय-
मिति । यः पुनरव्यापारितसाधुः । अनभ्यर्थितकल्याणोपनेता
बोधिसत्त्वः किमुच्यतां । किमपरमभिधीयतां । तस्य प्रशंसा
कर्तुमशक्येत्यर्थः[2] ॥ 15

दुष्टव्यवहारमपेक्ष्यापि[3] बोधिसत्त्वस्य पुण्यमाहात्म्यमुद्भाव-
यन्नाह ।

कतिपयजनसत्त्रदायकः
कुशलकृदित्यभिपूज्यते जनैः ।

---

[1] Metre : āryā.—gā, clearly ; ta, sec. manu.—Tib. : karta māsādam = agyid. lug-par ni ma byed cig.—*āsāda* is new with this meaning.

[2] Tipp. has : kiṁ ucyatāṁ kiṁ tasya māhātmyam ucyatām avāggocaratvāt.

[3] Confirmed by Tib.—Ms : apekṣyamapi.

क्षणमशनकमात्रदानतः
सपरिभवं दिवसार्धयापनात् ॥ ३२

5 प[रि]मितसत्त्वानामाहारपानमात्रदानसमादानमादिशन्[1] पुण्यकर्मायमिति पूज्यते [14a] सत्क्रियते जनैः सत्कर्मरतैर्लोकैः। तदपि दानं क्षणं न सकलमहः। तदर्धं वा। अपि तु मुहूर्तमेकं। अशनकमात्रदानत इति। कुत्सितमशनमशनकं[2]। अप्रणीतं भोजनं। तदेव केवलं तन्मात्रं[3]। तथाविधव्यञ्जनरहितं[4]।
10 तस्य दानतः त्यागतः। कथं सपरिभवं। क्रियाविशेषणमेतत्। सतिरस्कारं नमस्कार[ा]पुरःसरं हठात्सत्त्वागारं प्रविशतः चटचपेटादिना प्रत्येति यावत्। पुनः किंभूतात्। दिवसार्धयापनात्। प्रहरद्वयोपस्तम्भनात्। मध्याह्ने भुक्त्वा सायं पुनराहारान्वेषणात्[5] ॥

15 बोधिसत्त्वस्य पुनरेतद्विपरीतं दानं। इति प्रतिपादयन्नाह।

किमु निरवधिसत्त्वसंख्यया
निरवधिकालमनुप्रयच्छतः।
गगनजनपरिक्षयाक्षयं
सकलमनोरथसंप्रपूरणं ॥ ३३

---

[1] Ms.: °mātraṁ samānadānatodiçan; *na* is erased.—samādāna = nityakarman (Hem.); *Cf.* Senart, *Mhv.* III, 131, 13.

[2] This word is new.

[3] Tipp. has: mātreṇa vastrādidānavyavacchedaḥ.

[4] Old reading: tathāvidham.

[5] Tipp. has: tena ca prakarṣeṇa divasārdhaṁ yāpyate / madhyāhne........ karaṇe cāyaṁ lyuṭ. (Pāṇ. 3, 3, 117).

न विद्यतेऽवधिरियत्ता । इयद्भ्यः शतसहस्रलक्षकोटिसंख्येभ्यो दास्यामि ततः परं नेति । न सत्त्वानां गणनया ददाति । किं तु निरवधिसत्त्वसंख्यया ॥ नापि नियतकालं । अपि तु निर- 5
वधिकालं । कल्पशतसहस्रलक्षकोटिशतं यावद्दास्यामि ततः परं नेति सावधिकं न ददाति ॥ गगनेति । गगनमिव जनाः । गगनजनाः । यथाकाशमपर्यन्तं तथा जनोऽपीत्यर्थः । यदि वा गगनं च जनाश्च ते गगनजनाः । तेषां परिक्षयः पर्यवदानं । यावदाकाशधातुर्यावच्च सत्त्वा न परिनिर्वृताः तावदवधिकं । 10
यद्वक्ष्यति ।

आकाशस्य स्थितिर्यावद्यावच्च जगतः स्थितिः । इति ।

तावन्मम स्थितिर्भूयात्[1] ।

तस्मादक्षयं । न विद्यते क्षयः पर्यन्तोऽस्येति कृत्वा । अय-
मभिप्रायः । ग[14a]गनजनपरिक्षयावधि यद्दानं तद्वस्तुतोऽक्षय- 15
मेव । तेषां परिक्षयाभावात् ॥ नापि प्रतिनियतं वस्तु । अपि तु सकलमनोरथसंप्रपूरणं । यद्यस्याभिमतं तत्सर्वमनवद्यमभि-
प्रायाह्लादनकरं परमप्रेमगौरवसत्कारप्रियवचनपुरःसरं प्रमुदित-
मनसानुप्रयच्छतो बोधिसत्त्वस्य किं पुनः पूजा न युज्यते ।
तस्य सुतरां युज्यत इति बोध्यं । 20

यदुक्तं नारायणपरिपृच्छायां[2] । न तद्वस्तूपादातव्यं यस्मिन् वस्तुनि नास्य त्यागचित्तमुत्पद्येत[3] । न त्यागबुद्धिः क्रमेत ।

---

1 *Cf. infra* X, 55. 2 Cf. *Çikṣās.*, 21, 1-2, 6-12; and *infra ad* III, 21.
3 Çikṣās. has: °padyate.

यावत् । अयं ममात्मभावः सर्वसत्त्वेभ्य उत्सृष्टः परित्यक्तः । प्रागेव बाह्यानि वस्तूनि । यस्य यस्य सत्त्वस्य येन येन यदा कार्यं भविष्यति तस्मै तस्मै तत्तद्दास्यामि । यत्संविद्यमानं हस्तं हस्ता-र्थिकेभ्यो दास्यामि । यावत् । शिरः शिरोर्थिकेभ्यः परित्य-
5 क्ष्यामि । कः पुनर्वादो बाह्येषु वस्तुषु । यदुत धनधान्यजातरूप-रजतरत्नाभरणहयरथ[1]गजवाहनग्रामनगरनिगमजनपदराष्ट्रराष्ट्र-राजधानीपत्तनदासीदासकर्मकरपौरुषेयपुत्रदुहितृपरिवारेष्विति विस्तरः ॥

एवं च गुणरत्नसमुच्चयस्थाने परहितसुखविधानैकपरम-
10 महाव्रते बोधिसत्त्वे स्वात्महितकामैः स्वचित्तं रक्षितव्यं प्रयत्नतः[2] । इत्युपदर्शयन्नाह ।

इति सत्पतौ जिनस्य पुत्रे
कलुषं स्वे हृदये करोति यश्च ।
कलुषोदयसंख्यया स कल्पान्
15 नरकेष्ववसतीति नाथ आह ॥ ३४

इत्येवमुक्तक्रमेण सत्पतौ सर्वदा सुखदानपतौ जिनस्य पुत्रे सुगतस्य सुते । बोधिसत्त्व इत्यर्थः । कलुषं पापचित्तं स्वे हृदये आत्मचित्तसंताने करोत्युत्पादयति दुरात्मा यः स नरकेष्वा-वसति । इति नाथो बुद्धो भगवानाह ब्रूते ॥ उपाख्यानेऽप्युक्तम्

1 *Ibidem* : °rathahaya°.

2 Tipp: has: evaṁbhūte bodhisattve parārthaikarase prasādāprasadau sukhaduḥkhahetū iti yatnataḥ svikartavyaparihartavyāv iti darçayati.

इति कर्मत्वे प्राप्तेऽधिकरण[15a]विवक्षा[1] ॥ कियद्यावत् कलुषो-
दयसंख्यया कल्पान् । यावतः क्षणांस्तत्संताने[2] कलुषचित्तमुत्प-
द्यते । तावतः कल्पान् कलुषचित्तक्षणसंख्याकानरकेषु तिष्ठति ।
इति भावः ।

यदुक्तं प्रशान्तविनिश्चयप्रातिहार्यसूत्रे[3] । यावन्ति मञ्जुश्री-
र्बोधिसत्त्वो बोधिसत्त्वस्य[ान्तिके] प्रतिघचित्तान्युत्पादयति ।
अवमन्यनाचित्तानि [वा] । तावतः कल्पांस्तेन[4] संनाहः संन-
द्धव्यः । वस्तव्यं मया[5] महानरकेष्विति ॥

ननु तथागतस्य दुष्टचित्तेन रुधिरमुत्पादयतो नावीचौ
चित्तोत्पादक्षणसंख्यया कल्पानवस्थितिरुक्ता । न तथागतात्कश्चि-
दधिकतरः संभवति त्रैलोक्ये । तत्कथमिदमतिदुर्घटं नीयते ॥
सत्यं । न खलु यथाभूतमस्मिन्विषये वस्तुतत्त्वव्यवस्था । सर्वस्य
प्रवचनस्य नयनीतार्थतया व्यवस्थापनात् । न हि कश्चित्तथागते
सदेवकोऽपि लोको दुष्टचित्तमुत्पादयितुं क्षमते । अनल्पकल्प-
संख्ययाभ्यासेन सर्वसत्त्वेषु मैत्रचित्तस्य सात्मीभावात् । नास्य
काये शस्त्रं क्रमतीति मैत्रचित्तस्यानुशंसकथनात् । न च
कर्मप्लुतिरिह[6] वस्तुतो दर्शिता । कर्मावरणस्य बुद्धानां प्रहीण-
त्वात् । तस्माद्विनेयजनाभिसंधिना तदुपदर्शितं । न परमार्थतः ॥

बोधिसत्त्वापकारे तु बुद्धत्वमेव समूलोपघातमुपहतं भवेत् ।

---

1 Pāṇ. 1, 4, 48.—This clause deest in Tib. 2 Ms. kṣaṇaḥ / tat°.

3 Cf. Çikṣās., 85, 13. 4 Çikṣās. omits : "tena"; but see Tib.

5 Ms. has : °tavyaṁ tathā ; old reading and Tib. : °tavyaṁ mayā.

6 Tib.: las-kyi rnam-par smin-pa (=°āvaraṇa)—Cf. Karmaploti, in *Div. Av.*

तथा च सदेवकस्य लोकस्यार्थं उपहतो भवेत्[1]। यथागम-
मिदमुक्तं। परमार्थमिह भगवानेव जानाति[2]। इदमुक्तं च
श्रद्धाबलाधानावतारमुद्रासूत्रे[3]। यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा
कुलदुहिता वा गङ्गानदीवालुकासमान्[4] स्तूपान् [वि]निपात-
5 येद्दहेद्वा[5]। यश्चान्यः कुलपुत्रो वा कुलदुहि[15b]ता वा महा-
यानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य व्यापादखिलक्रोधचित्त-
मुत्पाद्याक्रोशयेत्[6] परिभाषयेत्। अयं ततोऽसंख्येयतरं पापं
प्रविशति। तत्कस्माद्धेतोः। बोधिसत्त्वनिर्जाता[7] हि बुद्धा
भगवन्तो। बुद्धनिर्जाताश्च स्तूपाः सर्वसुखोपधानानि च सर्वदेव-
10 निकायाश्च। बोधिसत्त्वमसत्कृत्य सर्वबुद्धा असत्कृता भवन्ति।
बोधिसत्त्वं सत्कृत्य सर्वबुद्धाः सत्कृता भवन्तीत्यादि ॥

यस्य पुनस्तत्र प्रसन्नं चित्तमुत्पद्यते। तस्य कियत्पुण्यफल-
मुपजायते। इत्याह।

अथ यस्य मनः प्रसादमेति
15 प्रसवेत्तस्य ततोऽधिकं फलं।
महता हि बलेन पापकर्म
जिनपुत्रेषु शुभं त्वयत्नतः[8] ॥ ३५

---

[1] Cf. *infra* IV, 5.

[2] Cf. *infra ad* I, 36, and V, 6.
The theory seems not very consistent—*Cf.* VI, 106.

[3] *Cf.* Çikṣās : 86, 6-11.

[4] Çikṣās. has : °vālikā°.

[5] *Ibidem* : daheta vā.

[6] *Ibidem* : utpādya k°.

[7] *Ibidem* : niryātā.—Tib. has : hkhruṅs-pa, and *infra* : hbyuṅba.

[8] Minaev has wrongly : "çubhatvaṁ yatnataḥ.—All Mss. except L, have ...balena pāpakam (unmetrical).

यस्य पुनः सुखात्मनो मनः प्रसादमुपयाति बोधिसत्त्वे ।
प्रसवेत्तस्य ततोऽधिकं फलं । तस्य प्रसन्नचित्तस्य प्रसवेदुपजायेत ।
ततोऽधिकं (फलं)[1] तस्मात्पूर्वकपापफलाद्बहुतरं पुण्यकर्मफलं
विपाकविशेषात्[2] । प्रसवेदुत्पद्येत ॥ यदि वा । तस्मादधिक-
विपाकफलाधायकं कर्मैव फलमुच्यते । अधिकतरफलजनकं 5
कर्मोपजायत इति यावत् ।

उक्तं च नियतानियतावतारमुद्रासूत्रे[3] । यद्येकमञ्जुश्रीर्दशसु
दिक्षु सर्वलोकधातुषु सर्वसत्त्वा उत्पाटिताक्षा भवेयुः परिकल्प-
मुपादाय । अथ कश्चिदेव कुलपुत्रो वा कुलदुहिता वा तेषां
सर्वसत्त्वानां मैत्रचित्तस्तान्यक्षीणि जनयेत् परिकल्पमुपादाय । 10
योऽन्यो वा[4] मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायाना-
धिमुक्तं बोधिसत्त्वं प्रसन्नचित्तः पश्येत् । अयं ततो ऽसंख्येयतरं
पुण्यं प्रसवतीति ॥ तस्मादस्मिन्नपि पुण्यक्षेत्रे शुभचित्तमेव
करणीयमात्मज्ञैः[5] ।

अपि च । इतोऽपि शुभचित्तमेव कर्तुमुचितं । 15
य[16a]स्मादसता बलेन परमक्रूरेण पापकं । पापमेव पापकं ।
कुत्सितत्वाद्वा । दुःकृतं कर्म । बोधिसत्त्वेषु क्रियते । तेषां
सकलकायवाङ्मनःप्रचारस्य[6] प्रसादजनकत्वात् । बोधिचित्तप्रभा-
वाच्च न बोधिसत्त्वेषु कस्यचिदपकारचित्तमुत्पद्यते ।

---

1 Deest in Tib.

2 New reading: viçoṣaṁ.—Tib.: puṇy-avipākaphalaviçeṣa.

3 *Cf.* Çikṣās. 87, 14, 18. (7, 1).

4 Çikṣāś.: yo vānyo...

5 Ātmajña, *Cf.* Kern (Jacobi) I, 522.—Tib.: mkhas-pa.

6 Ms.: pracārasyāpli.

एतदुक्तमार्यमञ्जुश्रीविमोक्षे। तद्यथा कुलपुत्र चिन्तामणि-
रत्नराजमुकुट[ाव]बद्धानां महानागराज्ञां नास्ति परोपक्रमभयं।
एवमेव बोधिचित्तमहाकरुणाचिन्तामणिरत्नराजमुकुटावबद्धानां
बोधिसत्त्वानां नास्ति दुर्गत्यपायपरोपक्रमभयमिति[1]॥

5 अतः किमर्थमनर्थोपार्जनं कटुकफलं तेषु प्रयत्नतः प्रार-
भ्यते॥ अत एव शुभं त्वयत्नतः। संग्रहवस्त्वादिभिः सर्वसत्त्व-
हितसुखकर्मकारित्वात् परिशुद्धकर्मकारितया। क्वचिदपि
स्खलिताभावाच्च। अप्रयत्नत एव प्रीतिप्रसादप्रामोद्यमुपजायते
तेषु। अतः कुशलं पुनरयत्नत एव प्रसूयते॥

10 सांप्रतमुत्पादितबोधिचित्तेष्वतिशयवतात्मना[2] मनःप्रसाद-
माविष्कुर्वन् शास्त्रकारस्तान्नमस्यन्नाह।

> तेषां शरीराणि नमस्करोमि
> यत्रोदितं तद्वरचित्तरत्नं।
> यत्रापकारोऽपि सुखानुबन्धी
> 15 सुखाकरांस्तां शरणं प्रयामि॥ ३६

तेषां पुरुषकुञ्जराणां शरीराणि आत्मभावान् नमस्करोमि
प्रणिपत्य वन्दे। यत्र येषु[3] संतानेषु उदितमुत्पन्नं तदुक्तानुशंसं
वरचित्तरत्नं। चित्तमेव रत्नं चिन्तामणिसदृशं। वरं श्रेष्ठं सर्व-
दारिद्र्यदुःखापहारित्वात्। तच्च तद्वरचित्तरत्नं चेति विग्रहः।
20 तदिति भिन्नं वा। इयं चाधिकगुणाधारस्य[4] सत्कृतिः॥

---

1 Hitherto not found in the Çikṣās. 2 Tib.: bdag-nyid-gyis çin-tu yaṅ ...... . 3 Ex conj.: yeṣām.—Tib.: de-rnams-Kyi. 4 Ex conj.—Ms.: iyañ cādhiyaguṇa°.

अपरमपि तद्विशेषणमाह। यथापकारोऽपीति। येषु परम-
कल्याणहृदयेषु बोधिसत्त्वेषु। अपकारोऽपि पराभवोऽपि [16b]
कृतः। तत्कर्तुः सुखानुबन्धी परंपरया सुखमावहतीति॥
अयमभिप्रायः। तत्रापकारः[1] कर्तुमशक्यः। संभवे वा कथं
चित्तदपकारमेव निमित्तं कृत्वा प्रवृत्तानां दुष्टाभिप्रायाणां   5
पुनः केन चिन्निमित्तेन तत्प्रसादसमुत्पादनात्। तत्रापकारो
निर्वाणे[2] सुखमनुबध्नाति। तद्यथा मैत्रीबलजातके[3] पञ्चका
नधिकृत्योक्तं। बोधिसत्त्वप्रणिधानाद्वा अपकारोऽपि सुखानु-
बन्धीत्युच्यते। यदक्ष्यति।

अभ्याख्यास्यन्ति मां ये च ये चान्येऽप्यपकारिणः।   10
तत्प्रकाशकास्तथान्ये वा सर्वे स्युर्बोधिभागिनः॥ इति[4]।

अथ वा। यत्रापकारोऽपि येषामपकारोऽपि महाकरुणा-
ध्याशयात्प्रियपुत्रेण कृत इव दुःखहेतुरपि सुखमेव जनयति।
यथा क्षान्तिपरिच्छेदे कथयिष्यामः[5]॥ एवं सर्वथा सर्वसुख-
हेतुत्वात् सुखार्थिनां रत्नाकर इव रत्नार्थिनामाश्रयणीया   15
बोधिसत्त्वा इत्युपदर्शयति। सुखाकरांस्तां शरणं प्रयामि।
सुखस्याकराः। सर्वसुखैकप्रभवत्वात्। तानुक्तक्रमेणापकारेऽपि
सुखहेतून्। शरणं प्रयामि। ते मम त्राणं भवन्त्विति भावः॥

॥ प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां बोधि-
चित्तानुशंसाविवरणं प्रथमः परिच्छेदः[6]॥   20

---

[1] Ms.: tatrāpakāraṁ....
[2] According to Tib.: nirvāṇa°.
[3] Cf. *Jātakamālā*, 51, 19.
[4] *Infra* III, 16.
[5] *Cf.* VI, 106, 107.
[6] Tipp. has: bodhicittānuçaṁsaparicchede smṛtiḥ.

## प्रज्ञाकरमतिकृता बोधिचर्यावतारपञ्जिकायां

## द्वितीयः परिच्छेदः ।

सांप्रतमेवं क्षणसंपत्समागमं दुर्लभमधिगम्य विदितबोधि-चित्तानुशंसः । बोधिचित्तग्रहणार्थं बुद्धबोधिसत्त्वानामुररीकृत्य वन्दनपूजनशरणगमनपापदेशनापुण्यानुमोदनबुद्धाध्येषणायाच- [17a] नाबोधिपरिणामनां[1] च कुर्वन्नाह ।

5 तच्चित्तरत्नग्रहणाय सम्यक्
पूजां करोम्येष तथागतानां ।
सद्धर्मरत्नस्य च निर्मलस्य
बुद्धात्मजानां च गुणोदधीनां ॥ १

तस्य समनन्तरप्रतिपादितानुशंसस्य चित्तरत्नस्य ग्रहणाय 10 स्वीकाराय । तदुत्पादयितुमित्यर्थः । तथागतानां बुद्धानां भगवतां पूजां करोमि । एषोऽहमिति बोधिचित्तग्राहकोऽयमात्मानं निर्दर्शयति । अयं बुद्धरत्नस्य निर्देशः ॥ सद्धर्मरत्नस्य चेति । आगमाधिगमलक्षणस्य । निर्मलस्येति । विकल्पापगतया

---

[1] *Cf.* Çikṣâs. 13, 12, where occur the same readings: °anumodana, °adhyeṣaṇa; but yâcana, °pariṇâmana—The text is of course incorrect; on these topics, of a capital importance in the Bodhisattva-ship, see, Ed. Chavannes, Revue des Religions, XXXVI, 1, (from Chinese sources), *Dharmasaṁgraha*, XIV (The Bodhic. is quoted by the Comm.), and my "*Etudes et Materiaux*," pp. 106, 236.

त्रिकोटिशुद्धस्य प्रकृतिप्रभास्वरस्य च । सर्वदा सर्वमलानाम-
स्थानत्वात् । क्लेशानामागन्तुकत्वात् । समस्तमलापहरणपटुत्वाच्च ।
अयं च धर्मरत्नस्य निर्देशः ॥ तदात्मजानां च । बुद्धसुतानां ।
गुणोदधीनां गुणरत्नसमुद्राणां । आर्यावलोकितेश्वरमञ्जुघोष-
प्रभृतीनां । अयं तु संघरत्नस्य निर्देशः ॥ इत्यादौ रत्नत्रयपूजा- 5
विधिः । पूजां करोमीति सर्वत्र संबन्धनीयं ॥ सम्यगिति ।
पूजाया एव विशेषणं । सम्यगविपरीतं यथा भवति । तीव्र-
चित्तप्रसादेन वा । ग्रहणस्य वा विशेषणं । सम्यग्ग्रहणाय ।
अतिशयप्रसन्नचित्तेन न परानुरोधादिना । यथा गृहीतं न
पुनर्भ्रंश्यति । इति ॥ पूजामेव कथयन्नाह । 10

यावन्ति पुष्पाणि फलानि चैव
भैषज्यजातानि च यानि सन्ति ।
रत्नानि यावन्ति च सन्ति लोके
जलानि च स्वच्छमनोरमाणि ॥ २

यत्परिमाणमेषामिति । यावन्ति निरवशेषाणि पुष्पाणि 15
फलानि चैव । आकाशधातुप्रसरावधीनि सर्वाण्यपीमान्यपरि-
ग्रहाणि । आदाय बुद्ध्या मुनिपुंगवेभ्यो निर्यातयाम्येष सपुत्रकेभ्य
इति सर्वत्र पूर्वेषु योजनीयं[1] । भैषज्यजातानि औषध[17b]प्र-
काराः । स्वच्छमनोरमाणीति रत्नानामपि विशेषणं ।

---

1 Cf. *infrā* Stanzas 5b and 6a.

महीधरा रत्नमयास्तथान्ये
वनप्रदेशाश्च विवेकरम्याः।
लताः सुपुष्पाभरणोज्ज्वलाश्च
द्रुमाश्च ये सत्फलनम्रशाखाः॥ ३

5 देवादिलोकेषु च गन्धधूपाः
कल्पद्रुमा रत्नमयाश्च वृक्षाः।
सरांसि चाम्भोरुहभूषणानि
हंसस्वनात्यन्तमनोहराणि॥ ४

महीधराः पर्वताः। रत्नमया रत्नस्वभावाः। विवेकरम्या
10 इति विवेकोपरम्या मनोहरा विवेकानुकूला इति यावत्।
सुपुष्पाभरणोज्ज्वलाश्चेति शोभनपुष्पाण्येवाभरणानि[1] मण्डनानि।
तैरुज्ज्वला अतिभ्राजिष्णवः। सत्फलनम्रशाखा इति। सन्ति च
शोभनानि वर्णगन्धरससंपन्नानि। तानि फलानि चेति। तैर्नम्रा
अवनता भूमिलग्ना इव शाखा येषां ते कल्पद्रुमाः कल्पवृक्षाः।
15 अम्भोरुहभूषणानि। अम्भोरुहाणि पद्मान्येव भूषणानि येषां
तानि तथा। हंसस्वनात्यन्तमनोहराणि। हंसानां स्वनैः रुतैर-
त्यन्तमनोहराणि रमणीयानि। तानि तथा।

अकृष्टजातानि च शस्यजाता-
न्यन्यानि वा पूज्यविभूषणानि।

---

[1] Ms. puṣpāṇy....

आकाशधातुप्रसरावधीनि
सर्वाण्यपीमान्यपरिग्रहाणि ॥ ५

अकृष्टान्येव हलविलेखनमन्तरेणैव जातानि प्रादुर्भूतानि। शस्यजातानि व्रीहिविशेषाः। अन्यानि वा पूज्यविभूषणानि। पूज्यानामाराध्यानां विभूषणानि शोभाकराणि। अन्यान्यपराणि। आकाशधातुप्रसरावधीनि। आकाशधातोः प्रसरोऽवकाशः। विस्तारो वा। तावदवधीनि तत्पर्यन्तानि। सर्वाण्यपीमानि। उक्तान्युक्तवस्तूनि। अपरिग्रहाणि। अममानि। न केन चित्स्वीकृतानीत्यर्थः।

आदाय बुद्ध्या मुनिपुंगवेभ्यो
निर्यातयाम्येष सपुत्रकेभ्यः।
गृह्णन्तु तन्मे वरदक्षिणीया
महाकृपा मामनुकम्पमानाः ॥ ६

आदाय बुद्ध्या गृहीत्वा मनोविज्ञानेन[1]। मुनिपुंगवेभ्यो मुनिवृषभेभ्यो निर्यातयामि प्रयच्छामि। सपुत्रकेभ्यः सबोधिसत्त्वगणेभ्यः। गृह्णन्तु तन्मे स्वीकुर्वन्तु तदेतत्सर्वं मम पूजोपहारवस्तु। वरदक्षिणीया अनुत्तरदक्षिणापात्राणि बुद्धबोधिसत्त्वाः। महाकृपाः सर्वस[18a]त्त्वहितसुखविधानैकमनसः। मां दीनदुःखितसत्त्वमनुकम्पमानाः करुणायमानाः। ममानुग्रहायेति

---

1 Tib. has only: yid-kyis.

यावत्॥ स्यादेतत्। किं पुनरेवं मनोमयपूजामात्रं विधीयते। यावता तत्तद्वस्तु मनोहरं साक्षादेव कस्मान्नोपनीयत इत्याशङ्क्याह।

अपुण्यवानस्मि महादरिद्रः
5 पूजार्थमन्यन्मम नास्ति किंचित्।
अतो ममार्थाय परार्थचित्ता
गृह्णन्तु नाथा इदमात्मशक्त्या॥ ७

अकृतपुण्योऽस्मि। अत एव महादरिद्रः। पुण्ये सर्वोपकरणसंपत्तिर्भवति। तदभावात् पूजार्थमन्यदुपकरणं मम नास्ति
10 किंचित्। अतो ममार्थाय मम पुण्यकामतया भगवन्तश्च परार्थचित्ताः परहितसुखाभिलाषिणो महाकारुणिकत्वात्। अतो गृह्णन्तु नाथा इदमुक्तं पूजोपकरणं मया निर्यातितं। आत्मशक्त्येति स्वसामर्थ्येन।

अयं पुनरात्मभावो ममायत्तोऽस्ति। तं निर्यातयामीत्याह।

15 ददामि चात्मानमहं जिनेभ्यः
सर्वेण सर्वं च तदात्मजेभ्यः।
परिग्रहं मे कुरुताग्रसत्त्वाः
युष्मासु दासत्वमुपैमि भक्त्या॥ ८

आत्मानं च प्रयच्छामि जिनेभ्यः। सर्वेण सर्वं च सर्वप्रका-
20 रेण। आत्मस्वीकारं परित्यज्य। तदात्मजेभ्योऽपि॥ मां प्रति-

गृह्णीत नरर्षभाः। युष्माकं दासत्वं दासभावं स्वीकरोमि। न जीविकादिलोभात्। अपि तु भक्त्या परमगौरवेण। श्रद्धा-विमलेन चेतसेत्यर्थः।

ननु कः पुनरत्र गुणोऽस्तीत्याह।

> परिग्रहेणास्मि भवत्कृतेन
> निर्भीर्भवे सत्त्वहितं करोमि।
> पूर्वं च पापं समतिक्रमामि
> नान्यच्च पापं प्रकरोमि भूयः॥ ९

भवत्कृतेन युष्मदीयेन महदाश्रयेण विगतभयः संसारे लोकानां हितमर्थं संपादयामि। महदाश्रयेऽपि नाकुशल-कर्मावृतस्य स्वहितकरणेऽपि सामर्थ्यमस्तीत्याह। पूर्वं चेत्यादि। पूर्वमपरिज्ञानात्कृतमकुशलकर्म समतिक्रमामि। विदूषणास-मुदाचारादिभिर्निर्हरामि[1]। समतिक्रामतीत्युक्ते समतिक्रमा-मीत्युक्तं [2]शाब्दव्यवहारेष्वनादरात्। अर्थप्रतिसरणता[18a] धा[तु]प्रधानत्वाच्च[3]। अपरं च पापं न पुनः करोमि। आयत्यां पुनरकरणसंवरं विदधे।

इति सर्वमात्मनिर्यातनाप्रभृतिपूजोपचारं निर्यात्य पुन-र्विशेषेण पूजां[4] विधातुमाह।

---

[1] *Cf.* Çikṣās. 160, 3 and foll.

[2] Çābda = çābdika = lexicograph, grammarian.

[3] After "dhā" an illegible syllable written in margin. Deest gramm. expl. in Tib. The expression arthapratisaraṇatā occurs in *Lalit. Vist.* p. 36, 7. cf. Kern, (Jacobi) I, 523.

[4] *Cf. Svayambhūp.*, Bibl. Ind., pp. 74 and foll.

रत्नोज्ज्वलस्तम्भमनोरमेषु
मुक्तामयोद्भासिवितानकेषु।
स्वच्छोज्ज्वलस्फाटिककुट्टिमेषु
सुगन्धिषु स्नानगृहेषु तेषु॥ १०

रत्नैरिन्द्रनीलादिभिरुज्ज्वलाः प्रभास्वरा ये स्तम्भाः तैर्मनोहराः कमनीयाः। तेषु स्नानगृहेषु स्नानं करोमीति योज्यं। पुनः किंभूतेषु। मुक्तामया[1] मौक्तिकरचनाखचिता उद्भासिन उद्भास्वरा वितानाः एव वितानकाः येषु। ते तथा। तेषु। स्वच्छाः सुनिर्मलाः। उज्ज्वला दीप्तिमन्तः। स्फाटिकस्येमे स्फाटिकाः। कुट्टिमाः भूमिरचनाविशेषा येषु तेषु सुगन्धिषु। कृष्णागुरुचन्दनादिधूपितवासितेषु। स्नानाय गृहाः। तेषु।

मनोज्ञगन्धोदकपुष्पपूर्णैः
कुम्भैर्महारत्नमयैरनेकैः।
स्नानं करोम्येष तथागतानां
तदात्मजानां च सगीतवाद्यं॥ ११

उदकं च पुष्पाणि च मनोज्ञगन्धानि च तानि। तैः पूर्णाः कुम्भा घटास्तैः। महारत्नमयैः। महान्ति वैदूर्याणि च रत्नानि च तानि तत्स्वभावैः। अनेकैः शतसहस्रकोटिभि.। सगीतवाद्यं सह मनोहरगीतनृत्तमुरजादिवाद्यैः।

प्रधूपितैर्धौतमलैरतुल्यै-
र्वस्त्रैश्च तेषां तनुमुन्मृषामि[2]।

---

[1] MS. muktāmaṇiyā.
[2] M. alone has the correct reading: unmṛjāmi.—unmṛçāmi?

ततः सुरक्तानि सुधूपितानि
ददामि तेभ्यो वरचीवराणि ॥ १२

सुधूपितैरगुरुप्रभृतिधूपैः। धौतमलैः प्रक्षालितकल्मषै-र्निर्मलैरित्यर्थः। अतुल्यैरप्रतिसमैः। वस्त्रैर्दुकूलैः। तेषां तथा-गतानां तदात्मजानां च। तनुं शरीरं। उन्मृषामि संमार्ज-यामि॥ ततस्तस्मादुन्मर्षणानन्तरं। सुरक्तानि शोभनरागैः सुष्ठु वा रक्तानि। शोभनधूपेन धूपितानि। ददामि तेभ्यो जिनेभ्यः। वरचीवराणि। अनुत्तराण्याच्छादनानि[1]।

दिव्यैर्मृदुश्लक्ष्णविचित्रशोभै-
र्वस्त्रैरलंकारवरैश्च तैस्तैः।
समन्तभद्राजितमञ्जुघोष-
लोकेश्वरादीनपि मण्डयामि ॥ १३

दिव्यैर्दिविभवैर्देवार्हैः। मृदूनि च सुकुमारस्पर्शानि श्[19a]लक्ष्णानि च सूक्ष्माणि। विचित्रा नानावर्णकृता शोभा येषां तैर्वस्त्रैः। अलंकारवरैश्च। विभूषणप्रधानैः। तैस्तैरिति। मुकुटकटककेयूरहारनूपुरादिभिः। समन्तभद्राजितमञ्जुघोषलो-केश्वरादीनपि बोधिसत्त्वान् मण्डयामि। अलंकरोमि।

सर्वत्रिसाहस्रविसारिगन्धै-
र्गन्धोत्तमैस्ताननुलेपयामि।

---

1 MS. has: anuttaramśochādanāni.

सूत्तप्तसून्मृष्टसुधौतहेम-
प्रभोज्ज्वलान् सर्वमुनीन्द्रकायान्॥ १४

सहस्रं चतुर्द्वीपिकानां तथा चन्द्रसूर्यमेरूणां प्रत्येकं काम-
देवानां ब्रह्मलोकानां च साहस्रचूडिको मतः[1]। स एव
5 सहस्रगुणिते द्विसाहस्रः[2]। तत्सहस्रं त्रिसाहस्रः[3]। शतकोटिः
चतुर्द्वीपिकानामित्यर्थः। एवं सर्वासु दिक्षु लोकधातुरनन्तो-
ऽपर्यन्तश्च। सर्वत्रिसाहस्राणि विसर्तुं शीलं येषां ते तथा।
तथाविधा गन्धाः परिमला येषां ते तथा। तैर्गन्धोत्तमैर्यक्ष-
कर्दमहरिचन्दनादिभिः। तान्मुनीन्द्रकायाननुलेपयामि। समा-
10 लभे। किंभूतान्। सूत्तप्तं पुटपाकादिना परिशोधितान्तर्मलं
सून्मृष्टं रोचनादिमणिसंमार्जितं[4]। सुधौतं क्षाराम्ललवणादि-
प्रक्षालितबहिर्मलं। तथाभूतं च तद्धेमं चेति। तस्य प्रभा द्युति-
रित्यर्थः। तद्वदुज्ज्वलान् द्युतिमतः। एतच्च यथालोकप्रसिद्धितः
कथितं। न तु तथागतकायशोभाया लौकिकं किं चिदुप-
15 मानमस्ति।

सांप्रतं माल्यपूजामुपक्षिपति।

मान्दारवेन्दीवरमल्लिकाद्यैः
सर्वैः सुगन्धैः कुसुमैर्मनोज्ञैः।

---

1 A regular pāda—Ms. has: sāhasraçoūtikāmataḥ.—Tib.: ston spyi-phud-du hdod-la. The reading cūḍika (ḍ = ch = t), is confirmed by cūḍa = klein, gering (W.K.F.), in *M. Vyut* and *Div.* (opposed to mahāsāhasra...)—Tib. phud = cūḍā—See CHILDERS, s. voc. culla, cūḷa.

2 Tib. adds: bar-ma cf. m. Vyut. 153, 2.

3 Ms.: tatsahasram tri°—*Cf.* SENART, Mhv. , 433; S. LEFMANN, *Lalitavistara*, p. 208; CHILDERS, s. voc. Sahassī.

4 = roṣaṇa°.

अभ्यर्चयाम्यर्च्यतमान्मुनीन्द्रान्
स्रग्भिश्च संस्थानमनोरमाभिः ॥ १५

मान्दारवं देवेषु पुष्पविशेषः । इन्दीवरमुत्पलं । मल्लिका वार्षिकी । एतत्प्रमुखैः सर्वैः शोभनगन्धैः पुष्पैर्मनोहारिभिः पूज्यतमान् मुनीन्द्रान् पूजयामि । स्रग्भिश्च मालाभिश्च ग्रन्थन- 5
रचनाविशेषकमनीयाभिः ॥

धूपपूजामाह ।

स्फीतस्फुरद्गन्धमनोरमैश्च
तान् धूपमेघैरुपधूपयामि ।

स्फीता मांसलाः । स्फुरन्तश्च दिगन्तव्या[19b ]पिनः । 10
बहुलगन्धोद्गारिणो वा । तादृशा गन्धा येषां धूपमेघानां ते तथा तैः । धूपा मेघा इवाम्बरतलावलम्बिबिम्बाः । उपमितं व्याघ्रादिभिरिति समासः[1] । धूपानां वा मेघास्तैर्मेघवदुद्गच्छ- द्भिरित्यर्थः । तानिति मुनीन्द्रानुपधूपयामि ॥ नैवेद्यपूजामाह ।

भोज्यैश्च खाद्यैर्विविधैश्च पेयै- 15
स्तेभ्यो निवेद्यं च निवेदयामि ॥ १६

भोज्यं यन्मुखमापूर्य भुज्यते । खाद्यं यत् कवड[ग्रः][2] छेद्य घृतपूरादि । पेयं यत्पीयत एव पानकादि । एभिर्विविधैर्नाना- प्रकारोपसंस्कृतैः । तेभ्यो मुनीन्द्रेभ्यो निवेद्यं च निवेदयामि ॥

---

[1] Pāṇ. 2, 1, 56.

[2] Doubtful: Ms. kavaḍacchedya.—Tib.: kham-du bcad-nas.

दीपपूजामाह ।

रत्नप्रदीपांश्च निवेदयामि
सुवर्णपद्मेषु निविष्टपङ्क्तीन् ।
गन्धोपलिप्तेषु च कुट्टिमेषु
5 किरामि पुष्पप्रकरान्[1] मनोज्ञान् ॥ १७

रत्नमयाः प्रदीपाः । तान् । निविष्टा पङ्क्तिर्माला येषां ते तथा । क्वेति सुवर्णपद्मेषु । सापेक्षत्वेऽपि गमकत्वात्समासः[2] । गन्धोपलिप्तेषु । चन्दनकुङ्कुमादिगन्धैश्चर्चितेषु ।

प्रलम्बमुक्तामणिहारशोभान्
10 आभास्वरान्दिग्मुखमण्डनांस्तान् ।
विमानमेघान् स्तुतिगीतरम्यान्
मैत्रीमयेभ्योऽपि निवेदयामि ॥ १८

प्रलम्बैर्मुक्तामणिहारैः शोभा येषां तान् विमानमेघान् विमानसमूहानालोककारिणः सर्वदिक्शोभाकरान् ।

15 सुवर्णदण्डैः कमनीयरूपैः
संसक्तमुक्तानि समुच्छ्रितानि ।
प्रधारयाम्येष महामुनीनां
रत्नातपत्राण्यतिशोभनानि ॥ १९

1 Sic L², M ; Min. has : °prakā°.
2 Deest in Tib.

कनकमयदण्डैः कान्तिमत्संस्थानैः। मुक्ताखचितानि रत्नमयानि छत्राणि। समुच्छ्रितानीति उच्छ्रितानि।

इदानीं पूजोपहारमुपसंहरन्नाह।

**अतः परं प्रतिष्ठन्तां पूजामेघा मनोरमाः।**
**तूर्यसंगीतिमेघाश्च सर्वसत्त्वप्रहर्षणाः॥ २०** 5

इतः प्रभृति। एते पूजामेघा[1] मया निर्यातिताः। अन्ये वा देवादिभिरुपनीताः कल्पं वा कल्पावशेषं वा प्रतिष्ठन्तां। प्रकर्षवृत्तिस्थिता भवन्तु। तूर्यसंगीतिमेघाश्च। तूर्याणि मुरजादिवाद्यानि। संगीतयः समेत्य गीतयः समुदायगीतानीत्यर्थः। अथ वा संगीतकानि नृत्तगीतवादितानि समुदितान्युच्यन्ते। 10
तेषां मेघाः। अनेकसमुदायाः। ते च सर्वसत्त्व[20a]प्रहर्षणाः। सर्वसत्त्वानां प्रमोदकारिणः। न पुनरश्रव्यश्रवणाः। प्रतिष्ठन्तामिति संबन्धः॥

सामान्येनाभिसंक्षिप्य सद्धर्मादिषु पूजामाह।

**सर्वसद्धर्मरत्नेषु चैत्येषु प्रतिमासु च।** 15
**पुष्परत्नादिवर्षाश्च प्रवर्तन्तां निरन्तरं॥ २१**

द्वादशाङ्गप्रवचनात्मकेषु सर्वसद्धर्मरत्नेषु। रत्नमिव रत्नं वस्तुतत्त्वालोककारित्वात्। परमनिर्वृत्तिहेतुत्वाच्च। स्तूपेषु भगवच्चैत्येषु। प्रतिमासु चेति। बुद्धबोधिसत्त्वविग्रहप्रतिकृतिषु। पुष्पवृष्टयो रत्नवृष्टयश्च। आदिशब्दाच्चन्दनचूर्णवस्त्रादिवर्षाः। निर- 20
न्तरमिति। आसंसारमनवच्छिन्नं।

[1] Cf. *Laṅkāv.*, p. 17, 7.

[1]अनुत्तरपूजामतिदिशन्नाह।

मञ्जुघोषप्रभृतयः पूजयन्ति यथा जिनान्।
तथा तथागतान्नाथान् सपुत्रान्पूजयाम्यहं॥ २२

मञ्जुघोषसमन्तभद्राजितलोकनाथप्रमुखा[2] दशभूमीश्वरा बोधिसत्त्वाः। यथा येनाध्याशयेन[3] तथागतान् पूजयन्ति। तथा तेनाधिमोक्षेणाहमपि तथागतान् सह पुत्रैर्बोधिसत्त्वगणैः पूजयामि॥

स्तुतिपूजामाह।

स्वराङ्गसागरैः स्तोत्रैः स्तौमि चाहं गुणोदधीन्।
स्तुतिसंगीतिमेघाश्च संभवन्त्वेष्वनन्यथा॥ २३

स्वराः सप्त गान्धारादयः। तेषामङ्गानि प्रभेदाः कामोदादयः। तेषां सागरवदतिबाहुल्यात् सागराः। तैः स्तोत्रैः। स्तुतय एव संगीतयः। स्तुतीनां वा संगीतयः समुदायाः। तासां मेघाः संभवन्तु। उपतिष्ठन्तां। एषु बुद्धबोधिसत्त्वेषु। अविपरीता यथा मयोपकल्पितास्तथैवेत्यर्थः॥

बुद्धधर्मसंघरत्नेषु प्रणामपूजामाह।

सर्वक्षेत्राणुसंख्यैश्च प्रणामैः प्रणमाम्यहं[4]।
सर्वत्र्यध्वगतान् बुद्धान् सहधर्मगणोत्तमान्॥ २४

---

1 *Cf.* Dharmasamgraha, XIV.

2 Cf. *supra*, p. 51, 12; lokeçvara—See Dh. S., XII.

3 adhyāçaya, *Cf.* SENART, Mhv. I, 436.

4 Here begins the classical formula of vandanā, *cf.* Dh. S., XIV (saptavidhānuttarapūjā).

यावन्ति दशसु दिक्षु बुद्धक्षेत्राणि[1]। तेषु यावन्तोऽणवः। तत्संख्यैः प्रणामैः। सर्वत्र्यध्वगतानिति। अतीतप्रत्युत्पन्नानागतान् तथागतान्। किंभूतान्। सहधर्मगणोत्तमान्। गणानामुत्तमो ऽग्रभूतो बोधिसत्त्वगणः। धर्मश्च गणोत्तम[20b]श्च ताभ्यां सह॥

तथागतस्तूपेषु प्रणाममाह।

**सर्वचैत्यानि वन्देऽहं बोधिसत्त्वाश्रयांस्तथा।**
**नमःकरोम्युपाध्यायानभिवन्द्यान्यतींस्तथा॥२५॥**

ऊर्ध्वतिर्यगधस्तासु[2] दिशासु विदिशासु च। सशरीराशरीरेषु स्तूपेषु प्रणमाम्यहमित्यर्थः। बोधिसत्त्वाश्रयानपीति[3]। जातकावदानजन्मादिस्थानानि॥ अभिवन्द्यानिति वृद्धान् वन्दनार्हान्॥ तदनेन पूजावन्दनाविधिरुक्तः।

अयं च पूजाविधिस्त्रिसमयराजे[4] कथितः। यथोक्तं। स्थलजा रत्नपर्वताः। जलजा रत्नपर्वताः। स्थलजजलजानि रत्नानि दशदिगवस्थितानि। अममान्यपरिग्रहाणि देयानीत्युक्तं। अनया च दिशा सर्वभैषज्यानि सर्वरसायनानि सर्वसलिलानि। अनवद्यानि अन्नमण्डलानि[5]। सर्वकाननमण्डलानि। विस्तृतेषु वा लोकधातुषु परमरसस्पर्शसंपन्ना भूपर्पटका अमृतलता। अकृष्टोप्ताः शालयः। सर्वोत्तरकुरुद्वीपेषु च परिशुद्धेषु च लोक-

---

1 The MS. L has the gloss: yatra tathāgataḥ sthitaḥ.

2 More correctly: adhastana.

3 Api (Tib.: daṅ) varia lectio.

4 = Çikṣās. 290, 13.—Prof. Bendall says: probably the same as the Trisamayavyūha (A.M.G. 309).

5 MS. śmaṇḍala.

धातुषु ये रमणीयतराः परिभोगाः॥ यथार्थरत्नमेघे[1] चाह।
स यानीमानि सूत्रान्तेषूदाराणि पूजोपस्थानानि शृणोति
तान्याशयतस्तीव्रेणाध्याशयेन बुद्धबोधिसत्त्वेभ्यः परिणामयति।
5 तथा स विविधानि पूजोपस्था[ना]न्यनुविचिन्तयति। इति॥

सांप्रतं रत्नत्रयशरणगमनपूर्वकं पापदेशनामाह[2]।

**बुद्धं गच्छामि शरणं यावदा बोधिमण्डतः।**
**धर्मं गच्छामि शरणं बोधिसत्त्वगणं तथा॥ २६**

त्राणार्थं शरणार्थं। गमनं तदाज्ञापरिपालनं। यो हि यं
10 शरणं गच्छति स तदाज्ञां नातिक्रामतीति भावः। बोधि-
मण्डत इति। मण्डशब्दोऽयं सारवचनं घृतमण्ड इति यथा[3]।
तथा च सति बोधिप्रधानं यावत्। यावत्सम्यक्संबोधिं नाधि-
गच्छामि। इत्यर्थः।

**विज्ञापयामि संबुद्धान् सर्वदिक्षु व्यवस्थितान्।**
15 **महाकारुणिकांश्चापि बोधिसत्त्वान् कृताञ्जलिः[4]॥ २७**

विज्ञापयामीत्यनेन बुद्धबोधिसत्त्वानामग्रतमात्मानं ख्या-
[21a]त्वा। अध्याशयेनैतद्वाच्यं इत्युपदर्शितं। कृताञ्जलिरिति
कायविज्ञप्तिरेषा। अञ्जलिः। करद्वयेन संपुटं कृत्वेत्यर्थः।

---

1 See Çikṣâs., *ibidem*.

2 The whole of this paragraph (down to II, 31) has been curiously adapted in *Svayambhûpurâṇa* (Bibl. Ind.), pp. 116, 3–117, 9. where we have: âbodan çaraṇaṁ yâmi svayambhûṁ jagadîçvaram. *Cf.* p. 59, n. 3.

3 *Cf.* Senart, *Légende du Buddha*, p. 200, and reference to Lal. Vist. 452, 3. (bodhivara); Kern, *Lotus*, pp. XVII, XLI, 155; *Etudes et Mat.* 207, n. 3. The Tib. "(byaṅ-chub) sñiṅ-po" is the exact equivalent of sâra.

4 *Svayambhûp.*: mahâkâruṇikâṁç câpi pañca tathâgatân api.

अनादिमति संसारे जन्मन्यत्रैव वा पुनः ।
यन्मया पशुना पापं कृतं कारितमेव वा ॥ २८
यच्चानुमोदितं किंचिदात्मघाताय मोहतः ।
तदत्ययं देशयामि पश्चात्तापेन तापितः ॥ २९

अनादिमतीति । पूर्वजन्मपरंपरासु । जन्मन्यत्रैवेति । 5
अस्मिन्नपि जन्मनि । न केवलं पूर्वत्र । पशुनेति । मोहबहुलतामात्मनो दर्शयति । त्रिविधं कर्म । कायवाङ्मनोभिस्त्रिभिः कृतं । त्रिभिरपि कारितमिति ॥ वाङ्मनोभ्यामनुमोदितमित्यपि । आत्मघातायेति । तत्पापकर्मफलस्य ममात्मन्येव विपाकात् । तदत्ययमिति । तदापत्तिं देशयामि प्रकाशयामि उत्तानी- 10
करोमि । न प्रच्छादयामि । पश्चात्तापेनेति । अकुशलकर्मणो नरकादौ दुःखविपाकश्रवणात् ।

अधुना यथाप्रधानमत्ययदेशनामाह ।

रत्नत्रयेऽपकारो यो मातापितृषु वा मया ।
गुरुष्वन्येषु वा क्षेपात्[1]कायवाग्बुद्धिभिः कृतः ॥ ३० 15

रत्नत्रय इति । अनुत्तरगुणत्वेन । मातेत्यादिना । उपकारित्वेन[2] । तत्रापकारस्य विस्तरतीव्रदुःखविपाकत्वात् ।

अनेकदोषदुष्टेन मया पापेन नायकाः ।
यत्कृतं दारुणं पापं तत्सर्वं देशयाम्यहं[3] ॥ ३१

---

[1] kṣepāt = tib. ñon-moṅs-sgo-nas = kleçāt. [2] *Cf.* V, 81.

[3] Compare the method of confession, or more exactly the Vidūṣaṇasamudācāra, illustrated in the Çikṣās. from the *Suvarṇaprabhāsottamasūtra*, (p. 160–162). Many stanzas are identical with ours.

अनेकदोषदुष्टेनेति। रागादिक्लेशदूषितेन। न स्वतन्त्रेणे-
त्यर्थः॥ पापकर्मणि संवेगमाह।

**कथं च निःसराम्यस्मात्परित्रायत सत्वरं।**

केन प्रकारेण। अस्मादशुभात्। सत्वरं शीघ्रं॥ केयं त्वरा
5 भवत इत्याह।

**मा ममाक्षीणपापस्य मरणं शीघ्रमेष्यति॥ ३३**[1]

यावत्पापक्षयं न करोमि। तावन्मम मृत्युर्भविष्यति न[2]।
अन्यथा दुर्गतिगमनभयात्। ननु चाकृतपापपरिक्षयस्य भवतो
मृत्योः कोऽवकाश इत्याह।

10 **कृताकृतापरीक्षोऽयं मृत्युर्विश्रम्भघातकः।**
**स्वस्थास्वस्थैरविश्वास्य आकस्मिकमहाशनिः॥ ३४**

इदं कृतमिदमकृतं तावत्तावदिति न परीक्षते मृत्युः।
विश्रम्भो विश्वासः। तेन घातकः। नापि नीरोगोऽहं युवा
बलवत्कायो वेति विश्वसनीयं। कुतः। आकस्मिकमहाशनि-
15 रिति। अचिन्तितवज्रपातसदृशः॥ यद्येवं पापाद्भयं किमर्थं
तर्हि तत्कृतमित्याह [22b]

**प्रियाप्रियनिमित्तेन पापं कृतमनेकधा।**
**सर्वमुत्सृज्य गन्तव्यमिति न ज्ञातमीदृशं॥ ३५**

---

[1] It is fairly probable that the stanza 32 of the Text-MSS. (omitted only in M of Minaev-edition, but wanting also in Tib. translation) has been interpolated; it runs as follows:

kathaṁ ca niḥsarāmy asmān nityodvigno'smi nāyakāḥ।
mā bhūn me mṛtyur acirād akṣiṇe pāpasaṁçaye॥

[2] The Tib. has: de-srid-du bdag hohi-bar ma gyur-cig çes-pa-ste। gzan-du-na ..—... na bhaved iti। anyathā (bhavet) durgati .... bhayam.

प्रिय आत्मा आत्मीयश्च। अप्रियस्तदपकारी। प्रियस्य हितसुखमप्रियस्य च तद्विपरीतमिच्छता कृतं पापमनेकधा। प्राणातिपातादत्तादानादिभेदेनानेकप्रकारं। ननु सर्वमेतच्च चिरेण परित्यज्य गन्तव्यं। तत्किमिति निरर्थकं पापकमुपचीयत इत्याह। सर्वमित्यादि। सर्वं प्रियमप्रियं वा उत्सृज्य 5 विहाय गन्तव्यं। एतत्तु न मया मुग्धेन परिभावितं॥ किमिदानीं परिग्रिष्टमवस्थितमित्याह[1]।

तत्तत्स्मरणतां याति यद्यद्वस्त्वनुभूयते।
स्वप्नानुभूतवत्सर्वं गतं न पुनरीक्ष्यते॥ ३७

यद्यदस्तीति सुखहेतुर्दुःखहेतुर्वाऽनुभूयते संवेद्यते। कथं 10 पुनरेवमित्याह। स्वप्नानुभूतवदिति यथा स्वप्नावस्थायामुपलब्धं विनष्टं न पुनरीक्ष्यते। तच्च स्मरणमात्रमेवावशिष्यते। तथान्यदपि सर्वं [2]प्रियादिसंगतमस्थिरमस्मिन्नेव जन्मनीत्युपदर्शयन्नाह।

इहैव तिष्ठतस्तावद्गता नैके प्रियाप्रियाः। 15
तन्निमित्तं तु यत्पापं तत्स्थितं घोरमग्रतः॥ ३८

तिष्ठत आसीनस्यैव मम पश्यतः। गता अनित्यतया क्षयिताः॥ यद्येवं तर्हि तदर्थं कृतं पापमपि तैः सह यास्यती-

---

[1] The stanza 36 of the Text-MSS. omitted by the Vṛttikāra, but not by the Tib. translator, runs as follows:

apriyā na bhaviṣyanti priyo me na bhaviṣyati।
ahaṁ ca na bhaviṣyāmi sarvaṁ ca na bhaviṣyati॥

[2] Tib.: mdza-ba-la-sogs-pa daṅ hgrogs-pa.

त्याह । तन्निमित्तमित्यादि । तेषां प्रियादीनां निमित्तं तदर्थं यत्कृतं पापं तत्पुरस्थित एव स्थितं मे । तन्मया वह चाक्रमी-त्यर्थः ॥ नन्वेवं पश्यन्नपि कथं मूर्च्छितो[1]ऽसीत्याह ।

एवमागन्तुकोऽस्मीति न मया प्रत्यवेक्षितं ।
5 मोहानुनयविद्वेषैः कृतं पापमनेकधा ॥ ३९

नाहं कस्य चित्परितः[2] । न मे कश्चित् । इत्येवं [न] मया प्रत्यवेक्षितं विचारितं । तेन कारणेन । अनुनय आसङ्गः । आत्मन्यात्मीये च । विद्वेषः प्रतिघः । तत्प्रतिकूलमाचरति ॥ चिरतरमतिदीर्घायुषो भवतः का मरणाशङ्का । तत्किमेवं 10 बिभेषि इत्याह ।

रात्रिंदिवमविश्राममायुषो वर्धते व्ययः ।
आयस्य चागमो नास्ति न मरिष्यामि किं न्वहं ॥ ४०

अहर्निशं । आयुषो वर्धते व्ययः । आयुःसंस्काराः क्षीयन्ते । अविश्राममिति । क्षणमपि न व्ययविच्छित्तिरस्ति । आयस्यागमन-15 मागमः । अनुप्रवेशः । स च आयस्य उपचयस्य लेशतोऽपि न संविद्यते । तदहमेवं किं नु न मरिष्यामि । अपि तु चिरमपि स्थित्वा जीवितं मरणपर्यवसानमिति[3] ॥ स्यादेतत् । यन्निमित्तं

[1] Ex conj.—The MS. has: mṛkhito, but Tib.: bslus.

[2] Na...paritaḥ = auf keine Weise.

[3] See Dhammapada, 148, Udānavarga, I, 35, and references apud Max Müller, transl. p. 42.

कृतं पापं तेऽपि ते[न][1] नरकादिषु त[ 22a ]त्फलदुःखानुभवकाले संविभागिनो भविष्यन्ति । तस्मिन्निति कातरभावमवलम्ब्य इत्याह । आस्तां तावत्परलोके ।

इह शय्यागतेनापि बन्धुमध्येऽपि तिष्ठता ।
मयैवैकेन सोढव्या मर्मच्छेदादिवेदना ॥ ४१ 5

इह अस्मिन्नेव भवे मरणान्तिकादिदुःखबाधायां स्वजनपरिजनमध्यगतेनापि । मर्मच्छेदादिवेदनेति । पिपासारोगाद्यसंतापादिदुःखं मयैवैकेन सोढव्यं । न तत्रान्यीयानपि भागोऽन्यस्य संभवति ॥ किं पुनर्नरकादावित्याह ।

यमदूतैर्गृहीतस्य कुतो बन्धुः कुतः सुहृत् । 10
पुण्यमेकं तदा त्राणं मया तच्च न सेवितं ॥ ४२

कालदूतैर्गृहीतस्याधिष्ठितस्य । गलपाशेन बद्धस्य । मुद्गरैराक्रोश्यमानस्य[2] । अटवीकान्तारगहनकण्टकविषमशिलाशकलैर्वितुद्यमानचरणस्य । अशरणस्य । कर्मानुभवभूमिं नीयमानस्य । कुतो बन्धुः कुतः सुहृत् । इति तत्र न के चित्सहाय्यास्त्राणं संभवन्ति । पुण्यमेकैकं तदा त्राणं स्यात् । मया तच्च न सेवितं । तत्र पुण्यं त्राणभूतं मया नोपार्जितं ॥ पुनरपि पापात्संवेगमाह । 15

---

1 According to the Tib.: de yaṅ...de daṅ lhan-cig-tu skal-ba len-par gyur-te.

2 M. Vyut. 281, 57.

अनित्यजीवितासङ्गादिदं भयमजानता ।
प्रमत्तेन मया नाथा बहु पापमुपार्जितं[1] ॥ ४३

अस्थायिनि जीविते । आसङ्गादाग्रहात् । इदमागामि नरकादिदुःखभयमजानता । अपश्यता । प्रमत्तेनेति । यौवन-
5 रूपधनाधिपत्यादिमदमत्तेन ॥ किं पुनरेवं संवेगवञ्जनो भवानित्याह ।

अङ्गच्छेदार्थमप्यद्य नीयमानो विशुष्यति ।
पिपासितो दीनदृष्टिरन्यदेवेक्षते जगत् ॥ ४४

अत्यल्पमिदं करचरणादिच्छेदजं दुःखं नरकदुःखात् ।
10 तथापि तत्रेयमवस्था भवति । विशुष्यति । सर्वात्मना शोषमुपयाति । पिपासितस्तृष्णार्तः । दीनदृष्टिरिति कृपणदृष्टिः । अन्यदेवेति विपरीतं[2] ॥ नरकदुःखख्यातिमयमाह ।

किं पुनर्भैरवाकारैर्यमदूतैरधिष्ठितः ।
महात्रासज्वरग्रस्तः पुरीषोत्सर्गवेष्टितः ॥ ४५
15 कातरैर्दृष्टिपातैश्च त्राणान्वेषी चतुर्दिशं ।

भैरवाकारैरिति भयंकररूपैः । अधिष्ठित आत्मसात्कृतः । म[22b]हात्रासनज्वरेण ग्रस्तो गृहीतः । पुरीषमुच्चारः ।

---

1 The MS. M of the Min. edition and Dev. 85 have: bahu duḥkham.— But Tib. sdig-pa.

2 Tib.: gzan-du-ni bzlog-par-ro. *Cf.* Viparītam idaṁ sarvaṁ pratibhāti sma, Mbh. 6. 3333, 3. 1736, 2126. (P.W. s. voc: sma).

तथोत्सर्गो विनिर्गमः। तेन वेष्टितो विस्मितः॥ कान्तैरिति दीनैः। चतुर्दिशं त्राणान्वेषी। कथमित्याह।

को मे महाभयादस्मात्साधुस्त्राणं भविष्यति[1]॥ ४६

साधुरकारणवत्सलः। त्राणं परित्राता।

त्राणशून्या दिशो दृष्ट्वा पुनः संमोहमागतः। 5

तदाहं किं करिष्यामि तस्मिन् स्थाने महाभये॥ ४७

एवमपि यदा कुत्र चिदपि त्राणं न पश्यति। तदा त्राणाभावात् पुनः संमोहमागतः। तदा तस्मिन् काले किं करिष्यामि। सर्वक्रियास्वसमर्थः सन् तस्मिन् स्थाने प्रतापना-दिनरकभूमौ[2]॥ तस्मादिदानीमेव प्रतीकारानुष्ठानं युक्तमि- 10 त्याह।

अद्यैव शरणं यामि जगन्नाथान् महाबलान्।

जगद्रक्षार्थमुद्युक्तान् सर्वत्रासहरान् जिनान्॥ ४८

जगतां नाथान् सर्वाश्रयनिर्वृतिस्थानभूतान् नायकान्। महाबलानिति सर्वत्राप्रतिहतसामर्थ्यान्। जगद्रक्षार्थमुद्युक्तानिति 15 सर्वसत्त्वपरित्राण[ार्थ]मुद्युक्तान्॥ एवमपि[3] त्राणानाश्रित्य भयो-पशमो न स्यात्। तदा किं शरणगमनेनेत्याह। सर्वत्रास-हरानिति। सर्वभयसमापहर्तॄन्॥ धर्मसंघशरणगमनमाह।

---

[1] Minaev has: kariṣyati, but the MSS. M and L[3] of his edition: bhaviṣyati.

[2] *Cf.* Mhv. I 9, 9 15, 7, 12.

[3] Sic. Ms. secunda manu, with nā in margin.—Tib.: de-la brten-nas yaṅ = tam (tān) āçrityāpi....Fairly probable.

तैश्चाप्यधिगतं धर्मं संसारभयनाशनं ।
शरणं यामि भावेन बोधिसत्त्वगणं तथा ॥ ४९

तैर्बुद्धैर्भगवद्भिः । अधिगतं[1] साक्षात्कृतं । धर्मं निर्वाण-
मित्यर्थः[2] । संसारभयनाशनं सर्वक्लेशप्रतिपक्षत्वात् । भावेनेति
5 परमप्रसादेन न माथाशाठ्येन[3] विचिकित्सया वा । बोधिसत्त्व-
गणमिति संघं[4] । तथेति भावेन ॥ इदानीं यथाप्रधानं बोधि-
सत्त्वेभ्य आत्मनिर्यातनं[5] कुर्वन्नाह ।

समन्तभद्रायात्मानं ददामि भयविह्वलः ।
पुनश्च मञ्जुघोषाय ददाम्यात्मानमात्मना ॥ ५०

10 समन्तभद्राय बोधिसत्त्वाय । आत्मानं ददामि निर्यात-
यामि । भयविक्लवो नरकादिभयव्याकुलः । पुनश्च मञ्जुघोषाय
मञ्जुनाथाय । आत्मनेति न परप्रेरणया । स्वयमेव प्रसन्नचित्त
इत्यर्थः ।

तं [23a] चावलोकितं नाथं कृपाव्याकुलचारिणं ।
15 विरौम्यार्तरवं भीतः स मां रक्षतु पापिनं ॥ ५१

आर्यावलोकितेश्वरं । कृपया व्याकुलं चरितं शीलमस्येति
कृपाव्याकुलचारिणं इति तस्यैव विशेषणं । विरौमि । आरवं
करोमि । आर्तरवमिति क्रियाविशेषणं । दुःखदीनकातरस्वरं ।
भीतः त्रस्तः पापकर्मफलात् । स भगवानवलोकितः । मां
20 रक्षतु पापिनं कृतपापं मां त्रायतां ।

---

[1] MS. adhikṛtam; Min. and Text-MSS.: adhigatam.

[2] A well-known identification.

[3] MS. gādhyena.

[4] *Cf.* Mhv. II. 293.

[5] *Alias* °niryātanā.

आर्यमाकाशगर्भं च क्षितिगर्भं च भावतः ।
सर्वान् महाकृपांश्चापि त्राणान्वेषी विरौम्यहं ॥ ५२

आर्यमाकाशगर्भं च बोधिसत्त्वं । क्षितिगर्भं च बोधिसत्त्वं विरौमीति परेण संबन्धः । सर्वान् महाकृपांश्चापि । येऽपि न नामग्रहणेनोद्ग्राहितास्तानपि परमकारुणिकान् परदुःखदुःखिनः । 5

यं दृष्ट्वैव[1] च संत्रस्ताः पलायन्ते चतुर्दिशं ।
यमदूतादयो दुष्टास्तं नमस्यामि वज्रिणं ॥ ५३

यस्य दर्शनमात्रेण यमदूतादयः । आदिशब्दादन्येऽपि यक्षराक्षसादयो दुष्टा भीताः सन्तः पलायन्ते दूरमपगच्छन्ति । तं नमस्यामि नमस्करोमि । वज्रिणमिति । वज्रमस्यास्तीति 10 वज्रपाणिं बोधिसत्त्वं[2] ॥ तदनेन शरणगमनादिना पापक्षयार्थमाश्रयबलमुपदर्शितं[3] ॥ यदुक्तं चतुर्धर्मकसूत्रे[4] । तत्राश्रयबलं बुद्धधर्मसंघशरणगमनमनुत्सृष्टबोधिचित्तता च । स बलवत्संनिश्रयेण[5] न शक्यते पापेनाभिभवितुं । इति ॥

पुनरन्यथात्वशङ्कां[6] निराकर्तुमाह । 15

अतीत्य युष्मद्वचनं सांप्रतं भयदर्शनात् ।
शरणं यामि वो भीतो भयं नाशयत द्रुतं ॥ ५४

---

1 Min. has: dṛṣṭvaivaṁ.  2 *Cf. infra* Chap. X, 11.

3 The Āçrayabala is the fourth dharma by which the bodhisattva can overcome the accumulated sins. (*cf.* Çikṣās., 160, 5).

4 = Çikṣās, p. 160, 9; see *infra* V, 98.

5 Çikṣās. has: subalavat°. but Tib.: de stobs daṅ ldan-pa-la brten-nas.

6 Tib.: yaṅ ggan du dogs-pa.

अतिक्रम्य युष्मदाज्ञां । सांप्रतमिदानीं । भयदर्शनात् ।
तदतिक्रमे[1] यस्मादनिष्टफलसंभवदर्शनात् । सो युष्मान् शरणं
यामि भीतः । अनिष्टफलादुत्रस्तः । तस्मात्पुनरन्यथात्वदाज्ञा न
कर्तव्या । अतो भयं नाशयत । पूर्वकृतपापाद्भयमपनयत । द्रुतं
5 शीघ्रं । ममेत्यध्याहार्यं ॥ नन्वे[23b]वमपि कः प्रत्येष्यति त्वद्-
वचनादित्याशङ्क्य पुनरपार्थे दृढतामाह ।

इत्वरव्याधिभीतोऽपि वैद्यवाक्यं न लङ्घयेत् ।
किमु व्याधिशतैर्ग्रस्तश्चतुर्भिश्चतुरुत्तरैः ॥ ५५

इत्वरो गत्वरो नश्वरोऽचिरस्थायीत्यर्थः । लघुर्वा । स चासौ
10 व्याधिश्चेति । तस्माद्भयेन । वैद्यवाक्यं न लङ्घयेत् । वैद्योपदेशं
नातिक्रमेत् । मायं व्याधिर्मम वृद्धिमुपगच्छेत् ॥ किमु किं
पुनः । व्याधिशतैर्ग्रस्तो लङ्घयेत् । चतुर्भिश्चतुरुत्तरैरिति ।
चतुरधिकैश्चतुर्भिः शतैरित्यर्थः[2] । शतमकालमृत्यूनां । एकं
कालमरणमित्येकोत्तरं शतं मृत्यूनां । ते च प्रत्येकं वातपित्त-
15 श्लेष्मकृतास्तत्संनिपातकृताश्चेति चतुरुत्तराणि चत्वारि शतानि
भवन्ति । इति कारणभेदात्कार्यभेदः । कार्यभेदाच्च कारणभेद-
व्यवस्था ॥ ननु तथापि किमत्र भयकारणं यत्त्रासीत्याह[3]

एकेनापि यतः सर्वे जम्बुद्वीपगता नराः ।
20 नश्यन्ति येषां भैषज्यं सर्वदिक्षु न लभ्यते ॥ ५६

---

1 Old reading: kramya.

2 *Cf.* JÄSCHKE, *Tib. Dict.*, p. 302, s. voc. nad.

3 Tib.: de-lta-na yaṅ gaṅ ẓig med pa de-la cii-phyir hjigs-par byed ce-na | de cig-gis kyaṅ ẓes-bya-ba—Ms. has: yan nāsti pratītyāha.

एकेनापि व्याधिना कुपितेन । [1]यस्मात्सर्वे जम्बुद्वीपगता नराः । प्राणिनो गच्छन्ति म्रियन्ते ॥ अन्यच्च । येषां व्याधीनां भैषज्यमौषधं चिकित्सार्थं क्वचिदपि न प्राप्यते ॥ अत्र काशिराजपद्मजातकमुपनेयं[2] । तद्यथानुश्रू[य]ते । बोधिचर्यां चरन्नयमेव भगवानतीतेऽध्वनि पद्मो नाम काशिराजो बभूव । तस्मिन् समये सर्वे जम्बुद्वीपका मनुष्या महता रोगेण विकलीभूता म्रियन्ते च । तैरिदमालोचितं । अयमेवास्माकं स्वामी राजा परमकारुणिकः प्रतीकारं विधास्यतीत्यस्यैवात्मदुःखं निवेदयामः ॥ ते चैवमवधार्य मिलित्वा । भो महाराज भवति स्वामिनि परमहितैषिणि संविद्यमानेऽपीयमवस्थास्माकमिति तस्मिन् राजनि दुःखमाविष्कृतवन्तः । स च राजा करुणापरवशहृदयस्ते[ 24ᵃ ]षां दुःखमसहमानः शीघ्रममीषां रोगपीडामपनयतेति वैद्यानाज्ञापयामास । तेऽपि तथेति प्रतिश्रुत्य चिकित्साशास्त्राणि व्यवलोक्य [3]सद्योरोहितमत्स्यमांसादन्यद्भैषज्यमलभमानास्तथैव राज्ञः प्रत्युक्तवन्त इति विस्तरः ॥ इदमेव जातकं भवोपलक्षणं दर्शितं ॥

**तत्र सर्वज्ञवैद्यस्य सर्वशल्यापहारिणः ।**
**वाक्यमुल्लङ्घयामीति धिग्मामत्यन्तमोहितं ॥ ५७**

---

1 Tipp. has: yata iti yeṣu vyādhiṣu | yeṣāṁ ca vyādhīnām.

2 Quotation, for once, not borrowed from the Çikṣās., but cf. the Avadāna çataka, Nr. 31. where the king is called "Padmaka."—See Prof. Speyer 'Akad. van Wetenschappen at Amsterdam, Versl. en Meded. Afd. Lett. IV. R. III, 370 foll.

3 Cyprinus rohita. Tib. has: ro-hi-ta.—sadyomāṁsa: hphral-gyi ça.—Feer, p. 116, 2: "ils se mirent à découper les chairs (de ce poisson) encore vivant."

कायिकमानसिकानेकप्रत्योङ्कारिणः। आत्मानं जुगुप्सते। धिग्मामत्यन्तमोहितमिति। एवं जानन्नपि यदि तथागताज्ञाया वैमुख्यमासेवे। तदा मम मोहस्य पर्यन्तो नास्ति। कुत्सनीयो-ऽस्मीत्यर्थः॥ किं पुनरेवमित्याह।

5 अत्यप्रमत्तस्तिष्ठामि प्रपातेष्वितरेष्वपि।
किमु योजनसाहस्रे प्रपाते दीर्घकालिके॥ ५८

पर्वतादिप्रपातेषु। अल्पतरेषु। यत्रास्थिभङ्गमात्रं मरण-मात्रं वा दुःखं स्यात्। किमु योजनसाहस्र इति। योजन-सहस्रपरिमाणमस्येत्यण्[1]। अनेकयोजनसहस्रपरिमाणे। अवी-10 च्यादिकप्रपात इत्यर्थः। दीर्घकालिक इति यत्रानन्तकल्पा-दिभिरायुषः क्षयः॥

सद्यो मरणमहृद्वेव किमकाण्डे कातरतया सुखासिकां जहासीत्याशङ्कामपनुदन्नाह।

अद्यैव मरणं नैति न युक्ता मे सुखासिका।
15 अवश्यमेति सा वेला न भविष्याम्यहं यदा॥ ५९

अवश्यमिति निश्चितमेतत्॥ तथापि भयमयुक्तमित्याह।

अभयं केन मे दत्तं निःसरिष्यामि वा कथं।
अवश्यं न भविष्यामि कस्मान्मे सुस्थितं मनः॥ ६०

---

[1] Pāṇ. 5, 1, 27.

अभयं मा भैरिति केन सत्पुरुषेण मम दत्तं येन निर्भयो निःसरिष्यामीति भावः ॥ यदि वा निःसरणोपायोऽपि[1] यदि भवेत् तथापि भयमयुक्तं । तदपि नास्ति । निःसरिष्यामि वा कथं ततो दुःखात् ॥ अवश्यं न भविष्यामीति । सर्वजीवितं मरणपर्यवसानमित्युक्तं भगवता[2] ॥ 5

इत्थमपि न युक्ता मे सुखासिका इत्याह । [24b]

**पूर्वानुभूतनष्टेभ्यः किं मे सारमवस्थितं ।**
**येषु मेऽभिनिविष्टेन गुरूणां लङ्घितं वचः ॥ ६१**

अभिनिविष्टेनेति आसक्तेन । गुरूणामिति बुद्धबोधिसत्त्वकल्याणमित्राणां ॥ तस्मादिदमहर्निशं मम मनसि कर्तुमुचितमित्याह । 10

**जीवलोकमिमं त्यक्त्वा बन्धून् परिचितांस्तथा ।**
**एकाकी क्वापि यास्यामि किं मे सर्वैः प्रियाप्रियैः ॥ ६२**

जीवलोकं सत्त्वलोकं । इमं मनुष्यादिसभागतालक्षणं[3] । एकाकीत्यसहायः । क्वापीत्यनिश्चितस्थानं ॥ 15

**इयमेव तु मे चिन्ता युक्ता रात्रिंदिवं सदा ।**
**अशुभान्नियतं दुःखं निःसरेयं ततः कथं ॥ ६३**

---

1 Api, not translated in Tib.  2 *Cf.* p. 62, n. 3.

3 Sabhāgatā, *cf.* SENART, *Mhv.* I, 595.—Tib.: mi-la-sogs-pa rigs mthun-pai mthsan-ñid yin-te.—mi-rigs-menschengeschlecht.

अशुभादिति अकुशलात्कर्मणः । तत इत्यशुभात् ॥ सांप्रतं कृतकर्मफलसंबन्धनिश्चयो[1] महताभिनिवेशेन पुनरत्ययदेशना-मारभत इत्याह ।

[2]मया बालेन मूढेन यत्किंचित्पापमाचितं ।
5 प्रकृत्या यच्च सावद्यं प्रज्ञप्त्यावद्यमेव च ॥ ६४
तत्सर्वं देशयाम्येष नाथानामग्रतः स्थितः[3] ।
कृताञ्जलिर्दुःखभीतः प्रणिपत्य पुनः पुनः ॥ ६५
अत्ययमत्ययत्वेन प्रतिगृह्णन्तु नायकाः ।

बालेनेति अजानता । मूढेनेति मोहान्धेन । यत्किंचिदिति
10 कायेन वाचा मनसा वा । प्रकृतिसावद्यं प्राणातिपातादिदशा-कुशलस्वभावं । प्रज्ञप्तिसावद्यं यद्भगवता गृहीतसंवराणामेव प्रज्ञप्तमकालभोजनादिरूपं ॥ देशयामीति वाग्विज्ञप्तिमुत्थाप-यति । कृताञ्जलिरिति कायविज्ञप्तिः । प्रणिपत्य [पुनः] पुनरिति अतिशयवच्चित्तसंवेगमुपदर्शयति ॥ [4]अति यतत्यनेन
15 नरकादिष्वित्यत्ययः । अशुभं कर्म । तमत्ययत्वेन दोषत्वेन प्रति-गृह्णन्तु जानन्तु पश्यन्तु विदन्तु यथाकृतं मया[5] । अनावरण-

---

1 "Having got a firm persuasion of the dependence of the fruit on the Karman formerly done"; Cf. 22, 1.

2 Comp. *Svayambhūp.* 117, 7 and *Çikṣās.* pp. 161 and foll.

3 *Svayambhūp.*: Svayambhuvo 'grataḥ sthitaḥ [çambhuva a°].

4 Yatati khede, *Dhātup.* Tib. çin-tu ltuṅ-bar-byed-pas ltuṅ bao.—(ati patati).

5 Cf. *Çikṣās.* 162, 16 (Atyayaṁ pratigṛhṇantu...) 163, 12 (na cchādayāmi tat pāpam...).

चित्तेन । न प्रच्छादनाच[1] ममास्तीति भावः ॥ पुनःशक्ति-
तयज्ञामपाकर्तुं पुनरकरणसंवरं कुर्वन्नाह । न भद्रकमित्यादि ।

[2]न भद्रकमिदं नाथा न कर्तव्यं पुनर्मया ॥ ६६

यदार्यैकान्तं विज्ञप्रशस्तं न भवति तदभद्रकं गर्हितं अनार्यं कर्मेत्युच्यते । तदद्यप्रभृति जानता पश्यता बुद्धिपूर्वकं 5 संचिन्त्य पुनर्मया न कर्तव्यं । आयत्यां पुनरकरणसंवरमापद्ये इत्यर्थः । एतच्च चित्तस्कन्धप्रवर्तनप्रस्तावे व्यक्तीकरिष्यते[3] ॥

॥ इति प्रज्ञाकर[25a]मतिविरचितायां बोधिचर्यावतार-पञ्जिकायां द्वितीयः परिच्छेदः ॥

---

1 Commonly: pracchādanam.

2 Min. has: abhadrakam; but MSS. L[3] M. and Tipp.: na bhadrakam. —*Svayambhūp.*: na bhadrakam idam nātha na....

3 See *infra* V, 98, 99.





# प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां बोधिचित्तपरिग्रहः तृतीयः परिच्छेदः ।



अधुना पापदेशनानन्तरं[1] पुण्यानुमोदनामाह ।

अपायदुःखविश्रामं सर्वसत्त्वैः कृतं शुभं ।
अनुमोदे प्रमोदेन[2] सुखं तिष्ठन्तु दुःखिताः ॥ १

नरकादिगतौ दुःखमनुभवन्तो हि परिश्रान्ताः सुकृतवि-
5 पाकमधिगम्य प्रतिलब्धसुखा विश्राम्यन्ति कियत्कालं । अनुमोदे
प्रसादेनेति । संप्रहर्षयामि प्रसन्नचित्तः ॥ अनुमोदनापि त्रिविधा
मनसा कायेन वाचा च । तत्र प्रसन्नचित्तः संप्रहर्षयति मनसा ।
कायेन रोमहर्षाश्रुपातगात्रकम्पादिकमनुभवन् । अनुमोदते
वाचा च संप्रहृष्टचेतसस्तथाविधामेव वाचमुच्चारयन् । साधुकृतं

---

1 The third anuttarapūjā, according to Dh. saṁgraha XIV. See pp. 44, *n*. 1. 56, 1. The stanzas 1–3, 4, 5, are quoted in *Svayaṁbhūp.* pp. 117, 19–118, 5; 118, 10; 118, 18. With variants: ad 4: caturdikṣu sthitān buddhān... dharmapradīpān,...ad 5: jināu çrīçambhunāthaṁ ca yācayāmi...Follows the exact specification of each "formule" (punyānumodanā,...) as in the Bodhic. Mss.—All these canonical verses (cf. *Bouddh. Et. et Mat.* p 106 and foll.) are parts of the method of repentance (or confession) as attested by Chinese authorities; see Chavannes, quoted in loco and the Tib.: Sdig-pa-thams-cad bçags-par gter-chos (Schlagintweit, *Buddh. in Tib.*; the clauses translated p. 127, 2-5=our st. 1 and 4; the last one has been misunderstood).

2 So all the MSS. of the text. According to the Commentary: "prasādena," a reading probably influenced by the gloss "prasannacittaḥ" (cf. *infra* 79, 17).

सुकृतं कुशलमिति ॥ सुखं तिष्ठन्तु दुःखिता इति । यदर्थं तैस्तत्कर्म कृतं तदपि तेषां समृध्यत्विति भावः ।

लौकिकं कर्मानुमोद्य लोकोत्तरमनुमोदमानः प्राह ।

संसारदुःखनिर्मोक्षमनुमोदे शरीरिणां ।
बोधिसत्त्वत्वबुद्धत्वमनुमोदे च तायिनां[1] ॥ २

दुःखनिर्मोक्षमिति । श्रावकबोधिः प्रत्येक[बुद्ध]बोधिर्वा[2] । चित्तं वा तदर्थमुत्पादितं तथोच्यते[3] । [4]तदा बोधिचयगतमपि तद्भावः । शरीरिणामिति । प्राणिनां ॥ बोधिसत्त्वत्वबुद्धत्वमिति । बोधिसत्त्वत्वं भगवतां हेत्ववस्थां । बुद्धत्वं फलावस्थामिति । तायिनामिति[5] । स्वाधिगतमार्गदेशकानां । यदुक्तं तायः स्वदृष्टमार्गोक्तिरिति[6] । तद्विद्यते येषामिति । अथ वा । तायः संतानार्थः[7] । आसंसारमप्रतिष्ठितनिर्वाणतयावस्थायिनां ॥ [बोधिसत्त्वानां] पुण्यानुमोदनां कुर्वन्नाह ।

चित्तोत्पादसमुद्रांश्च सर्वसत्त्वसुखावहान् ।
सर्वसत्त्वहिताधानाननुमोदे च शासिनां[8] ॥ ३

---

1 Tib.: skyob-pa-rnams-kyi byaṅ-chub daṅ rgyal-sras-sa-la.

2 Tib.: raṅ-saṅs-rgyas-kyi.    3 Tib.: de-la de skad ces-byao.

4 From a second hand; old reading: "tathā."—Tib.: dei-thse.—The tipp. has: nirmokṣo bodhidvaye ... (then a lacune)—cf. *infra* IV 6, cittasadgrāhaḥ. Tib.:—gnas-pa de aṅ bzuṅ-no.

5 On "tāyin," see *Lotus*, in fol. 16a; Nāmasaṃgīti, 144, 10, Childers, s. voc. tādi; Kern, *Saddh. puṇḍ.*, 25; Senart, *Mhv.* II, 543.

6 I do not know from what source this gloss is quoted.—"Sva" deest in Tib.—*cf.* p. 3, 5.

7 See the classical definition: saṃtānapālanayoḥ.

8 Tib. omits "çāsinām."

चित्तोत्पादाः प्रतिक्षणभाविनोऽपर्यन्तागाधतया समुद्रा इव समुद्राः । तान् किंभूतान् सर्वसत्त्वसुखावहान् । सर्वसत्त्वानां सुखमावहन्तीति । तद्धेतुकनित्य[ 25b ]सुखभावानित्यर्थः । सर्व-सत्त्वहिताधानानिति हितविधायकान् । शासिनामिति ।
5 शासनं शासः बुद्धत्वोपायाभ्यासस्तदर्थत्वादुपचारात्[1] । तद्विद्यते येषामिति शासिनो बोधिसत्त्वाः । तदुक्तं ।

उपायाभ्यास एवायं तदर्थ्याच्छासनं मतमिति[1] ।

अथ वा । शासितुं शीलं येषामिति शासिनः । बोधि-सत्त्वा हि दानादिभिः संग्रहवस्तुभिः सत्त्वान् संगृह्य सन्मार्गे-
10 ऽवतारयन्ति ।

एतावतानुमोदना[2] कथिता ॥ अध्येषणां[3] कथयन्नाह ।

**सर्वासु दिक्षु संबुद्धान् प्रार्थयामि कृताञ्जलिः ।**
**धर्मप्रदीपं कुर्वन्तु मोहाद्दुःखप्रपातिनां ॥ ४**

धर्मप्रदीपं कुर्वन्त्विति । अज्ञानतमोवृतानां सत्त्वानां मार्गा-
15 मार्गविशेषपरिज्ञानविकलानां धर्मदेशनात्मकमालोकं कुर्वन्तु । एतावता चाध्येषणा कथिता ॥ [4]याचनामुपदर्शयन्नाह ।

**निर्वातुकामांश्च जिनान् याचयामि कृताञ्जलिः ।**
**[5]कल्पाननन्तांस्तिष्ठन्तु मा भूदन्धमिदं जगत् ॥ ५**

कृतकृत्यतया परिनिर्वाणं गन्तुमनसः । अपर्यन्तकल्पान्

---

1 From unknown sources.—cf. *Madh vṛtti* initio. 2 Tib.: rjes-su yi-raṅ-ba.
3 Tib.: bskul-ba. 4 Tib.: gsol-ba.
5 Lª M.: kalpān analpāṁs...; Tib.: graṅs-med,—cf. *supra* I, 7.

क्षितये याचयामि । मा भूदन्यमिति । पूर्ववन्मार्गाज्ञाननिषे-
तनं मा भूत् । अनेनापि याचना प्रोक्ता ॥ याचनानन्तरमिदानीं
[1]परिणामनामाह ।

एवं सर्वमिदं कृत्वा यन्मयासादितं शुभं ।
तेन स्यां सर्वसत्त्वानां सर्वदुःखप्रशान्तिकृत् ॥ ६     5

एवमुक्तक्रमेण सर्वमिदं पूजापापदेशनापुण्यानुमोदनादि
कृत्वा विधाय यन्मयासादितं प्राप्तं शुभं सुकृतं । तेन शुभेन
स्यां भवेयं सर्वसत्त्वानां समस्तप्राणभृतां सर्वदुःखप्रशान्तिकृदिति
निःशेषव्यसनप्रशमनसमर्थो भवेयं ॥ इति सामान्येन परिणमय्य
पुनर्विशेषेणाह ।     10

ग्लानानामस्मि भैषज्यं भवेयं वैद्य एव च ।
तदुपस्थायकश्चैव यावद्रोगापुनर्भवः[2] ॥ ७

तेनेति सर्वत्र यथायोगं संबन्धनीयं । ग्लानानामिति
व्याधिपीडितानां । भैषज्यमित्यौषधं । वैद्यश्चिकित्सकः । तदु-
पस्थायकः[3] तस्य ग्लान[स्य] परिचारकः[4] । [ 26a ] रोगापुनर्भव     15
इति यावद्व्याधिनिवृत्तिः स्यात्[5] ।

---

1 Tib. : yoṅs-su bsṅo-ba.

2 *Sic* Min.; M. has : rogaḥ punarbhave; L² rogo punarbhavaḥ.—Tib. : nad-sos gyur-gyi bar-du ni.

3 Tib : nad-*g*yog.

4 There is no trace of a lacuna in the MS.—Tib. nad-pa dei rim-gro byed-pa.—See Jäschke, s. voc.

5 Corrected in margin : nivṛttir na syāt. A preferable reading suggesting the conjecture : yāvad rogapunarbhavaḥ (Cf. *infra* 85, 8) ;—but not confirmed here by Tib.

क्षुत्पिपासाव्यथां हन्यामन्नपानप्रवर्षणैः ।
दुर्भिक्षान्तरकल्पेषु भवेयं पानभोजनम् ॥ ८

क्षुद्बुभुक्षा । पिपासा तृष्णा । तयोर्व्यथा । ताभ्यां वा व्यथा । तां हन्यां निवर्तयं । अन्नपानप्रवर्षणैः प्रबन्धाहारपान-
5 संपादनैः । दुर्भिक्षान्तरकल्पेष्विति ।

कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः ।

[इति] । तत्र दशवर्षायुषि प्रजायामन्तरकल्पपर्यन्ते दुर्भिक्षेण[1] संवर्तः प्रादुर्भवति वर्षान् सप्त मासान् सप्त दिवसानपि सप्तैव । यदुक्तं ।

कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण विनिर्गमः[2] ।
10 दिवसान् सप्त मासांश्च वर्षां[श्चै][व][3] यथाक्रमं ॥ इति ।

तत्रान्नपानाभावादन्योन्यमांसास्थिभक्षणमेवाहारः । तदपि केचिदल्पभाग्यतया आहारवैकल्याच्च म्रियन्ते । तत्र भवेयं पान-भोजनं ।

दरिद्राणां च सत्त्वानां निधिः स्यामहमक्षयः ।
15 नानोपकरणाकारैरुपतिष्ठेयमग्रतः ॥ ९

---

1 MS. durbhikṣaç ca. There are three saṁvartas (tejo°, apo°, vāyo°); "previous to the destruction by water, cruelty prevails ... men are cut by ... weapons; to that by fire, licentiousness; men are cut off by disease; and previous to that by wind, ignorance; men are cut off by famime" (SP. HARDY, *Manual*, 28, and *M. Vyut.* 253, 64–70).

2 Thus Tipp.—Tib: mu-ge dag-gis thsar phyin-byed.

3 Tipp. has: varṣāṇi ca.—Better reading, cp. *M. Vyut.* 253, 60.

दरिद्राणामिति सत्त्वविशेषणं । धनमक्षयमिति । आकल्प-माभुज्यमानोऽपि यो न क्षीयते । नानोपकरणाकारैरिति । शयना-सनवसनभोजनाभरणविलेपनप्रभृति यदभिलषन्ति सत्त्वास्ते-तेषूपकरणविशेषाकारैरहमेवोपतिष्ठेयं प्रत्युपस्थितो भवेयं । तेषां दरिद्राणां सत्त्वानामग्रतः पुरतः ।

इदं च परिणामनमार्यवज्रध्वजसूत्रे[1] विस्तरेण प्रतिपादितं । तत्रेदमुक्तं । स तानि कुशलमूलानि परिणामयन्नेवं परिणाम-यति । अनेनाहं कुशलमूलेन सर्वसत्त्वानां लयनं भवेयं सर्वदुः-खस्कन्धविनिवर्तनतया । सर्वसत्त्वानां त्राणं भवेयं सर्वक्लेशपरि-मोचनतया । सर्वसत्त्वानां शरणं भवेयं सर्वभयारक्षणतया । सर्वसत्त्वानां गतिर्भवेयं सर्वभूम्यनुगमनतया । सर्वसत्त्वानां परा-यणं भवेयमत्यन्तयोग[ 26b ][क्षेम]प्रतिलम्भनतया[2] । सर्वसत्त्वा-नामालोको भवेयं वितिमिरज्ञानसंदर्शनतया । सर्वसत्त्वाना-मुल्का भवेयमविद्यातमोऽन्धकारविनिवर्तनतयेत्यादिविस्तरः ॥

॥ इदमुक्त्वा पुनरिदमाह । तथाध्याशयतः परिणमयति[3] न वचनमात्रेण । तथोदग्रचित्तः परिणमयति । हृष्टचित्तः परिण-मयति । प्रसन्नचित्तः परिणमयति । प्रमुदितचित्तः स्निग्ध-चित्तः परिणमयति । मैत्रचित्तः प्रेमचित्तोऽनुग्रहचित्तो हित-चित्तः [ सुखचित्तः ] परिणामयतीति विस्तरः ॥

---

1 = Çikṣās. 29, $_{18-21}$, 218, $_{8}$, 274, $_{8}$;—and *infra ad* III, 21, VII, 46.

2 Tib : çin-tu grub-pa daṅ bde-ba thob-par...

3 The Çikṣās. has : pariṇāmayati.

इदानीमात्मभावादिपरित्यागं कुर्वन्नाह ।

आत्मभावांस्तथा भोगान् सर्वत्र्यध्वगतं शुभं ।
निरपेक्षस्त्यजाम्येष सर्वसत्त्वार्थसिद्धये[1] ॥ १०

आत्मभावानिति सर्वगतिच्युत्युपपत्तिषु सर्वकायान्[2] ।
5 निरपेक्षः सर्वप्रकारेण निरासङ्ग इत्यर्थः । त्यजामि उत्सृजामि
ददामीत्यर्थः । भोगानिति उपभोग्यवस्तूनि । [3]हयगजरथ-
प्रासादाद्याश्रयस्रक्चन्दनवस्त्राभरणकन्यादीनि । सर्वत्र्यध्वगतं
शुभमिति सर्वत्रैधातुकसंगृहीतं पुण्यानेञ्ज्यस्वभावं[4] । यदि वा
दानशीलादिप्रसूतं भावनामयं च । त्र्यध्वगतमतीतानागतप्रत्यु-
10 त्पन्नं । स्यादेतत् । अनागतस्यासत्स्वभावस्य कोऽयमुत्सर्गो नाम ।
सत्यं । किं तु तत्संभवकाले तत्रासङ्गनिवारणार्थमेवमुच्यते ।

---

1 Bhogapuṇyotsarga, *cf.* Çikṣās. 17, 3, and *infra ad* IV, 49.

2 Ātmabhāva-lus ; cf. p. 42, 16. The word "âme" has in French the same meaning (body, life) Bossuet, *Sermons* III p. 449, 7 (Garnier). "Ne voyez vous pas qu' ils jettent leurs biens et qu'ils sont prets de donner leurs âmes ?"—A different meaning *Bodhic.* IX, 18 (261, 6) see *ibid.* p. 108, *n* 4 ; M. Müller ad *Vadjacchedikā*, 13.

3 °prāsādādyāçraya° ; confirmed by Tib. : Khaṅ-bzaṅs-la sogs-pai gnas daṅ.—Cp. Çikṣās. 27, 12.

4 The "ānemjya" is curiously enough looked upon as analogous to the "çubha." On this word, whose spelling considerably differs in various MSS., see Senart, *Mhv* I, 399 ; Childers s. voc. ānejja, ānañja (Addenda, saṅkhāro) ; Bendall, Çikṣās. 223, n. 1, 237, 1,. who refers to H. Warren, *Buddhism*, 179-180. M. Kern writes to me the following lines : " Je ne veux pas cacher mon opinion que l'étymologie de ce mot en sanscrit bouddhique est tout-à-fait autre que celle des scholiastes palis ; ānejya et āniñja n'ont rien de commun, sauf le son, avec iñj-iṅg. Ce sont des taddhitas formés du vieux mot védique (et par là méconnu) anedya, sanscrit : anindya. Il est clair que āniñjehi vihārehi immédiatement apres divyehi v° (Mhv I, 34, 11) donnerait un contre sens si le mot était dérivé de iñj. Vous avez bien vu qu'il est à peu près synonyme de çubha."

इहाग्नीनेव तत्परित्यागात् । आत्मनश्च निरपेक्षमर्थार्थं च ।
एतदेवाह । निरपेक्ष इति । तद्विपाकस्य चानपेक्षः ॥
किमर्थमनेनानुष्ठीयत इत्याह । सर्वसत्त्वार्थसिद्धय इति । सर्व-
सत्त्वानां त्रैधातुकवर्तिनामभ्युदयनिःश्रेयसलक्षणार्थनिष्पत्तये ॥

अतीतानागतशुभोत्सर्गस्त्यागोऽयमतिसूक्ष्मेऽभिहितः[1] । यदुक्तं । 5
कुशलानां च चित्तचैतसिकानामनुस्मृतिः । अनुस्मृत्य [27a] च
बोधिपरिणामना । इदमतीतकौशल्यं । या अनागतानां कुशल-
मूलानां निध्यप्तिबोधेरामुखीकर्मसमन्वाहारः[2] । ये मे उत्पत्स्यन्ते
कुशलाश्चित्तोत्पादास्ताननुत्तरायां सम्यक्संबोधौ परिणाम-
यिष्यामि । इदमनागतकौशल्यमिति विस्तरः ॥ ॥ सर्वत्यागाधि- 10
मुक्तिं परिपूर्य[3] परित्यागचित्तवेगात्तेन[4] कायप्रयोगेणोत्सृष्टसर्व-
परिग्रहः । [सर्व]परिग्रहमूलात्सर्वदुःखाद्विमुक्तो मुक्त इत्युच्यत
इति विस्तरः ॥

ननु चात्मार्थमपि किं चिद्रक्षितुमुचितमिति मात्सर्यं
निराकुर्वन्नाह । 15

**सर्वत्यागश्च निर्वाणं निर्वाणार्थि च मे मनः ।**
**त्यक्तव्यं चेन्मया सर्वं वरं सत्त्वेषु दीयतां ॥ ११**

---

1 This passage is quoted in Çikṣās. 33, 13-34, 2, and again 282.

2 °Karaṇa°, from a second hand;—The Çikṣās. has: yo 'nāgatānāṁ ...... nidhyaptibodher. See notes of BENDALL on *nidhyapti* and *āmukhī-kṛ*, pp. 19, 20, 33, 15 190, 13; *Samādhirāja*, 13, 21 and *infra ad* V, 21 "nidhyaptacitta." Tib.: gaṅ ma-oṅs-pai dge-bai rtsa-ba ṅes-par-sems-çiṅ byaṅ-chub-la mṅon-du phyogs-pai las sems-pa ste.

3 Paripūrye is written in margin; read with Çikṣās.: paripūrye tyāga°.

4 Çikṣ. has: vegāpannena, but Tib.: ...çugs-kyis lus-kyi spyod-pa des...

सर्वेषां सामवात्मभावादीनां निर्वाणं मोक्षः । तदर्थि च मे मनः । तदर्थि च मम चित्तं । त्यक्तव्यं चेदिति । निर्वाणसमये यदि सर्वमात्मभावादि अवश्यं परित्यज्य यातव्यं मया तदा वरं सत्त्वेषु दीयतां । किमनेन मात्सर्यहेतुना विधृतेनेति[1] भावः ॥

5 [2]तस्मादिदमिहानुरूपमित्याह ।

[3]यथासुखीकृतश्चात्मा मयायं सर्वदेहिनां ।

यथाकाममंगमकारितायां नियुक्तो मयायमात्मा कायः । सर्वदेहिनां सर्वसत्त्वानां कृते ॥ एतदेव दर्शयन्नाह ।

घ्नन्तु निन्दन्तु वा नित्यमाकिरन्तु च पांसुभिः ॥ १२

10 क्रीडन्तु मम कायेन हसन्तु विलसन्तु च ।

दत्तस्तेभ्यो मया कायश्चिन्तया किं ममानया ॥ १३

कारयन्तु च कर्माणि यानि तेषां सुखावहं ।

दण्डादिभिस्ताडयन्तु वा । अवर्णवादैर्जुगुप्सन्तु । आकिरन्तु च पांसुभिः धूलिभिरवकिरन्तु ॥ दत्तस्तेभ्यो मया काय इति

15 सर्वः सर्वेण मया तेषां परित्यक्तः[4] । किं मम समविषमचिन्तया ॥ कारयन्तु कर्माणीति । अनवद्यानि । एतदेवाह ।

अनर्थः कस्य चिन्मा भून्मामालम्ब्य कदा चन ॥ १४

अनिष्टं कस्य चित्प्राणिनो मा भूत् । मामाश्रित्य कदा चन । इह परत्र वा ।

---

1 Tib.: rgyu hdis bsuṅ-la ci-zig.

2 Tib.: de-lta-bas na hdi-dag-la hdi hthsam-pa yin-no.

3 Minaev has: yathā sukhī°.

4 Ms. has: sarvaṁ ... parityaktam.

येषां क्रुद्धाप्रसन्ना[1] वा मामालम्ब्य मतिर्भवेत् ।
तेषां स एव हेतुः स्यान्नित्यं सर्वार्थसिद्धये[2] ॥ १५

येषां क्रुद्धा येषामप्रसन्ना वा मतिश्चित्तं भवेत् । तेषां क्रुद्धाप्रसन्नमतीनां । स एव हेतुः स्यात् । क्रुद्धाऽप्रसन्ना मतिरेव । पुंसां तु तच्छब्दस्य हेतुसमानाधि[27a]करणतया । सर्वार्थसिद्धय इति । आत्मपराभ्युदयनिःश्रेयसनिष्पत्तये ।

अभ्याख्यास्यन्ति मां ये च ये चान्येऽप्यपकारिणः ।
उत्प्रासकास्तथान्येऽपि[3] सर्वे स्युर्बोधिभागिनः ॥ १६

अभ्याख्यास्यन्तीति मिथ्यारोपितदोषेण दूषयिष्यन्ति । अन्येऽपि ये कायिकं मानसिकं वाऽपकारं करिष्यन्ति । उत्प्रासका इति उपहासकाः विडम्बकारिणो वा । तथान्येऽपीति । उदासीनाः प्रसन्नाश्च । सर्वे भवेयुर्बुद्धत्वभागिनः ।

अनाथानामहं नाथः सार्थवाहश्च यायिनां ।
पारेप्सूनां च नौभूतः सेतुः संक्रम एव च ॥ १७

अनाथानामिति त्राणाद्यन्वेषिणां । सार्थवाहश्च यायिना-

---

1 Minaev has: yeṣāṁ kruddhā pra°.—On this important topic of the doctrine, see Chap. VI, 47 and foll.

2 Minaev has: sa eva teṣāṁ hetuḥ ... sarveṣṭasiddhaye;—but L[3]: teṣāṁ sa eva ...; M. L[3]: sarvārtha°.

3 Minaev and Text-Mss.: anye vā. This çloka is quoted *suprā ad* I, 35, with the same reading: anye vā; but the ṭipp. has: tathānye'pi udāsīnaprasannāḥ.

मिति सार्थवाहो मार्गप्रपन्नानां । पारेप्सूनामिति नद्यादीनां पारिमकूलं[1] गन्तुकामानां ।

दीपार्थिनामहं दीपः शय्या शय्यार्थिनामहं ।
दासार्थिनामहं दासो भवेयं सर्वदेहिनां ॥ १८

5 दीपार्थिनामिति अन्धकारावस्थितानां । शय्यार्थिनामिति शयनाभिलाषिणां । दासार्थिनामिति उपस्थानार्थं ये भृत्य-कर्मकरादीनिच्छन्ति[2] ।

चिन्तामणिर्भद्रघटः सिद्धविद्या महौषधिः ।
भवेयं कल्पवृक्षश्च कामधेनुश्च देहिनां ॥ १९[3]

10 चिन्तामणिरिति चिन्तितफलदाता रत्नविशेषः । भद्रघट इति यद्यदभिलषितमभिसंधायास्मिन् हस्तं प्रक्षिपेत् तत्सर्वं संपद्यते । सिद्धविद्येति सिद्धमन्त्रः । यद्यत्कर्म तया क्रियते तत्सर्वं सिध्यति । महौषधिरिति यदेकैव सर्वोपद्रवपीडाप्रशमन-हेतुः । कल्पवृक्षेति कल्पितार्थसंपादनो वृक्षविशेषः । काम-
15 धेनुरिति या वाञ्छितदोहं दुह्यते ।

पृथिव्यादीनि भूतानि निःशेषाकाशवासिनां ।
सत्त्वानामप्रमेयाणां यथा भोगान्यनेकधा[4] ॥ २०

---

1 Not P.W.; but Childers: pārimo, and *Mhv.* I. 574.

2 Same ideas *Çikṣâs.* 23, 7. 35, 7.

3 Cp. *Çikṣâs.* 155, and n, 3.

4 M. Kern prefers a reading: bhogya; bhoga being rather doubtful as an adjective.

एवमाकाशनिष्ठस्य सत्त्वधातोरनेकधा ।
भवेयमुपजीव्योऽहं[1] यावत्सर्वे न निर्वृताः ॥ २१

पृथिव्यादीनीति । पृथिवी वसुंधरा । आदिशब्दादापस्तेजो
वायुरिति चत्वारि महाभूतानि । तानि यथा शयनाशनवस्त्र-
फलमूलाद्याधारतया । तथा पानावगाहनादिहेतुतया[2] । एव- 5
मन्यत्रापि योज्यं । अनन्ताकाशधातुव्यापिनामसंख्यानां सत्त्वानां
परिभोगमुपयान्ति । एवमेवाहमपि सर्वसत्त्वानामने[28a]कप्रका-
रेणोपभोग्यो भवेयं । यावत्सर्वे न निर्वृता इति यावत्सर्वे न
संसारदुःखविनिर्मुक्ताः ॥

तस्मादेषामात्मभावादीनामुत्सर्गः कार्यो बोध्यर्थिना ॥ एतच्च 10
ज्ञानमतिविस्तरेण शिक्षासमुच्चये प्रदर्शितं[3] । तद्यथा । तत्रैव
बोधिसत्त्वप्रातिमोक्षे कथितं । पुनरपरं शारिपुत्र बोधिसत्त्वः
सर्वधर्मेषु परकीयसंज्ञामुत्पादयति । न कं चिद्भावमुपादत्ते ।
तत्कस्य हेतोः । उपादानं हि भयमिति ॥ ॥ इत्युक्त्वा तत्रैव
पुनरिदमुक्तं । तथा चित्तशूराः खलु पुनः शारिपुत्र बोधिसत्त्वा 15
भवन्ति । यावत्हस्तपरित्यागी भवति । पादपरित्यागी नासा-
परित्यागी शीर्षपरित्यागी अङ्गप्रत्यङ्गपरित्यागी । यावत्सर्वस्व-
परित्यागीति ॥

एवं नारायणपरिपृच्छायामप्यभिहितं[4] । न तद्वस्तूपादातव्यं

---

1 Cp. *Gaganagañjasūtra* quoted Çikṣās. p. 270, 18.

2 Tipp. has: tathā dhāraṇayānāvagāhaçitatāpāpanodādiprakāreṇa.

3 See Çikṣās. 18, 17. 20, 18.

4 See Çikṣās. 21, 14, 5–6 and *supra* I, 33. According to Prof. Bendall, "ativ° refers to that fearfully long passage beginning at *Çikṣās.* 22, 5–33, 10.—tadyathā = *exempli gratia*."

यस्मिन् वस्तुनि नास्य त्यागचित्तमुत्पद्येत । न त्यागबुद्धिः क्रमतेति यावत् । अपि तु खलु पुनः कुलपुत्र बोधिसत्त्वेन [महासत्त्वेनैवं] चित्तमुत्पादयितव्यं । अयं ममात्मभावः[1] सर्वसत्त्वेभ्य उत्सृष्टः परित्यक्तः । प्रागेव बाह्यानि वस्तूनीति विस्तरः ।

5 तथाऽऽर्याक्षयमतिसूत्रेऽपि देशितं[2] । अयं मया कायः सर्वसत्त्वानां किंकरणीयेषु क्षपयितव्यः । तद्यथेमानि चत्वारि महाभूतानि पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुश्च नानामुखैः नानापर्यायैः नानारम्बणैः नानोपकरणैः नानापरिभोगैः सत्त्वानामुपभोगं गच्छन्ति । एवमेवाहमिमं चतुर्महाभूतसमुच्छ्रयं कायं
10 नानामुखैः नानापर्यायैः नानारम्बणैः नानोपकरणैः [28b] नानापरिभोगैर्विस्तरेण सर्वसत्त्वानामुपभोग्यं करिष्यामीति विस्तरः ॥

तच्चित्तरत्नेत्याद्यारभ्य[3] सर्वमिदं पूर्वकं बोधिचित्तसंवरग्रहणाय प्रयोगो वेदितव्यः । तदेवं पूजादि विधायात्मभावादिदानमुत्सृज्य प्रतिपन्नबोधिचित्तानुशंसः क्षणसंपदं परम-
15 दुर्लभामवेत्य[4] श्रद्धामूलं दृढमुपस्थाप्य सत्त्वाननाथानपरायणान् करुणायमानः स्वसुखनिरपेक्षः परदुःखदुःखी तत्समुद्धरणाग्र्याभिप्रायो कुशलमेव तदुपायं समुत्पन्नसंशयश्च बहुश्रुतानाह ।

1 Ms. has: mayātmabhāvaḥ.

2 Çikṣās. 21, 22, with readings: ayam eva mayā...tadyathāpi nāmemāni bāhyāni catvāri...satvānāṁ nānopabhogaṁ gacchanti, evam evāham imaṁ kāyam...sarvasatvānām upabhogyaṁ kariṣyāmi.

3 *supra* II, 1.

4 See Çikṣās. 5, 12. Tipp. has: kṣaṇasaṁpado durlabhatāṁ bodhicittotpādasya mahānuçaṁsatām avagamya tac cittetyādinā pūjām ātmabhāvādidānaṁ ca vidhāya prayogasaṁpanno yathā gṛhītam ityādinā bodhicittaṁ utpādayati.

यदात्मनः परेषां च भयं दुःखं च न प्रियं ।
तदात्मनः को विशेषो यत्तं रक्षामि नेतरं ॥ इति[1] ।

तेनात्मनः सत्त्वधातोश्च

दुःखान्तं कर्तुकामेन सुखान्तं गन्तुमिच्छता ।
श्रद्धामूलं दृढीकृत्य बोधौ कार्या मतिर्दृढा ॥ इति[2] । 5

सम्यक्संबोधिचित्तमुत्पादयितुमुपक्रमते ।

**यथा गृहीतं सुगतैर्बोधिचित्तं पुरातनैः ।**
**ते बोधिसत्त्वशिक्षायामानुपूर्व्या[3] यथा स्थिताः ॥ २२**

येनाशयेन सर्वसत्त्वानां सर्वदुःखप्रहाणार्थं । यदि वा यथा गृहीतं तदेव[4] भगवन्तो जानन्ति ॥ बोधिचित्तमिति बोधि- 10
र्बुद्धत्वं सर्वावरणप्रहाणात्[5] सर्वधर्मनिःस्वभावताधिगमः । एतच्च सप्रपञ्चं[6] प्रज्ञापरिच्छेदे वक्ष्यामः । तत्र चित्तमध्याशयेन तत्प्राप्तये मनसिकारः । बुद्धो भवेयं सर्वसत्त्वहितसुखसंपाद- नायेत्यर्थः[7] ॥

---

1 This stanza occurs *infra* VIII, 96; read: yadā mama .., with the printed text and Çikṣās. 2, 10.

2 This passage (since 87, 1) occurs in Çikṣās. 2, 10-14. *Cf. ibidem* 5, 13.

3 Minaev has: anupūrvyā.

4 Ms. has: gṛhītamita eva...; and in margine, after mi, the syllabe ti." Tib.: yaṅ na ji-ltar bzuṅ-ba de ñid bcom-ldan-hdas-kyis mkhyen-pao.

5 "By the abandoning of the two āvaraṇas (kleça°, jñeya°)."

6 Tib: spros-pa daṅ bcas-par = saprapañcam = vistareṇa.

7 The ṭipp. has: bodhicittaṁ parārthāya samyaksaṁbodhikāmatā.

इति पूर्वार्धेन बोधिचित्तोत्पादं प्रतिपाद्य शिक्षासंवरग्रहणं प्रतिपादयन्नाह । ते बोधिसत्त्वेत्यादि । बोधिसत्त्वशिक्षा उत्पादितबोधिचित्तेन बोधिसत्त्वेन सदा करणीयं । तत्रेत्यर्थः । आनुपूर्व्येति । अनु[29a][1] + + + + + + + + + +

---

1 Here a lacune of ten leaves in our Ms. See in the Appendice the Tibetan translation of the missing fragment (III. 22b—IV. 46).

# प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां बोधिचित्ताप्रमादश्चतुर्थः परिच्छेदः ।



[40a] नाय । न तु क्लेशप्रभोः । न तत्रेतरप्रभुवत्समाचारो[1] दृश्यते । कुतः पुनरेवमिच्छया लभ्यत इत्याह ।

> क्वासौ यायान्मन्मनःस्थो निरस्तः
> स्थित्वा यस्मिन्मद्वधार्थं यतेत ।
> नोद्योगो मे केवलं मन्दबुद्धेः 5
> क्लेशाः प्रज्ञादृष्टिसाध्या वराकाः ॥ ४६[2]

मम चित्तान्निर्वासितः । असौ क्लेशरिपुः कुत्र गत्वावस्थानं कुर्यात् । यत्रावस्थितिं कृत्वा मम वधाय यत्नमारभेत । नैव तत्स्थानमुत्पश्यामि । निर्मूलितस्य पुनस्तत्रागमायोगादिति भावः । अहमेव तु केवलमनुत्साही । अपटुबुद्धिप्रचारत्वात् । क्लेशाः 10 पुनरिमे निर्मूलत्वात्परमार्थतत्त्वदर्शनमात्रप्रहेयास्तपस्विनः[3] । एतदेव प्रसाधयन्नाह ।

> न क्लेशा विषयेषु नेन्द्रियगणे नाप्यन्तराले स्थिताः
> नातोऽन्यत्र कुत्र स्थिताः पुनरिमे[4] मथ्नन्ति कृत्स्नं जगत् ।

---

1 Ms.: samādhāro; Tib. spyod-pa.

2 Metre Çālinī.

3 = tib. ñon-moṅs = kleça, vyasana, etc.; *infra* (p. 90, 15) varāka = brdsun-pa = alīka.

4 Minaev has: punar ime, but M.: amī; Cp. *infra* 90, 19.

मनोज्ञादिविषयदर्शनेऽपि केषांचित्संवृतेन्द्रियाणां क्लेशानुत्पत्तेः परमाणुशो विचारेऽपि तददर्शनात्। न विषयेषु। नापि चक्षुरादीन्द्रियगणे पूर्ववत्। धर्मचिन्तायामवस्थायामिन्द्रियसद्भावेऽप्यनुपलब्धेः। नापि विषयेन्द्रिययोरन्तराले मध्ये तिष्ठन्ति।

5 दृश्यानामनुपलब्धेरेव[1]। न चैतेभ्योऽन्यस्मिन् स्थाने क्वचिदवस्थिता स्थिताः[2]। अतो निर्मूलतया तत्त्वशून्या आगन्तुका एव। [3]अभूतपरिकल्पमात्रप्रसूतत्वात्॥ तथाभूता अपि जगद्ध्वंसं नयन्ति॥ तथा च किमत्र समुचितमस्त्याह।

**मायैवेयमतो विमुञ्च हृदय त्रासं भजस्वोद्यमं**
**10 प्रज्ञार्थं किमकाण्ड एव नरकेष्वात्मानमाबाधसे[4]॥४७**

यथा हि माया वस्त्वाकारतया तदाकारशून्यापि मन्त्रौषधप्रभावादिदंप्रत्ययतया[5] मन्त्रेण[6] तत्त्वरहितापि प्रतिभासते। तथाऽमी अपि क्लेशा विपर्यासनिमित्ता अयोनिशो मनस्कारसमुद्भूता इदंप्रतीत्यतामात्रतो[7] निस्तत्त्वा एव प्रकाशन्ते। अतो

15 विमुञ्चेति हृदय त्रासं क्लेशेभ्यः। के नामामी वराकाः[8] परमार्थतो विचार्यमाणाः[9]। अतो भजस्वोद्यमं। उत्साहं कुरुष्व।

---

1 Cp. *Nyāyabindu* 104, $_{10}$.

2 Tib.: ṅes-pa med do.

3 But Tib.: yaṅ-dag-pa yin-pai.

4 Metre Çārdūlavikrīḍita.

5 Idampratyayatā, this word occurs frequently, for instance in the *Madhyamakavṛtti* (p. 3, $_{13}$, 50, $_{7}$ of the *Buddhist Text S.* edition), and in Chap. IX of this book. Cf. *Études et Matériaux*, p. 395.; CHILDERS, s. voc. idappaccayā.

6 Not translated in Tib. and improbable. Ex conj.: ° pratyayatāmātreṇa (de rkyen hdi tsam gyis). (Cp. *Sarvadarçanas.* 21, $_{1}$, *Bhāmatī*, (1891) 354, $_{7}$).

7 Tib.: rkyen-hdi-dag-tsam-gyis.

8 = brdzun-pa = alīka.

9 The "paramārthato vicārāsahatvam" of every thing is one of the essential tenets of the Mādhyamika philosophy. Cp. Chap. IX., *Bhāmatī* 383, $_{17}$, etc.

प्रज्ञार्थं तत्त्वप्रविचयाधिगमाय। किमकाण्ड एव निष्प्रयोज[40b]नमेव नरकेषु संघातादिषु क्लेशवशगततयात्मानमाबाधसे[1] । पीडयसि ॥

इदानीं प्राक्तनमर्थमशेषमुपसंहरन्नाह ।

एवं विनिश्चित्य करोमि यत्नं
यथोक्तशिक्षाप्रतिपत्तिहेतोः ।
वैद्योपदेशाचलतः कुतोऽस्ति
भैषज्यसाध्यस्य निरामयत्वं[2] ॥ ४८

एवं समनन्तरसकलपरिच्छेदप्रतिपादितमर्थं विनिश्चित्य दृढीकृत्य । अनन्तरमायासभावतां[3] वा । करोमि यत्नं । किमर्थं । यथोक्तशिक्षाप्रतिपत्तिहेतोः । यथोक्तशिक्षा बोधिसत्त्वस्य तेषु तेषु सूत्रान्तेषु याः करणीयतया प्रतिपादिताः । इहैव वा शास्त्रे संक्षेपेण तत्र तत्रोपदर्शितास्तासां शिक्षणार्थं ।

[4]उक्तानि च भगवता सूत्रान्तेषु बोधिसत्त्वशिक्षापदानि । यथोक्तमार्यरत्नमेघे । कथं च कुलपुत्र बोधिसत्त्वो बोधिसत्त्वशिक्षासंवरसंवृतो भवति । इह बोधिसत्त्व एवं विचारयति । न प्रातिमोक्षसंवरमात्रकेण[5] मया शक्यमनुत्तरां सम्यक्संबोधिमभि-

---

1 Abstract in °tā (vaçaga°) is new.

2 Cp. II, 55, V, 109.

3 Tib.: anantarapratipāditaṃ mayā

4 91,$_{14}$—93,$_{9}$ = *Çikṣās.*, 17,$_{8-19}$.

5 Mr. Kern has given the true etymology and meaning of the important and difficult word prātimokṣa, *Manual*, p. 74, n. 5.

संवोढुं । किं तर्हि यानीमानि तथागतेन तेषु तेषु सूत्रान्तेषु बोधिसत्त्वसमुदाचारा बोधिसत्त्वशिक्षापदानि प्रज्ञप्तानि तेषु[1] मया शिक्षितव्यमिति विस्तरः ॥ तस्मादस्मद्विधेन मन्दबुद्धिना दुर्विज्ञेयो विस्तरोक्तत्वाद् बोधिसत्त्वस्य संवरः । ततः किं युक्तं ।

5 मर्मस्थानान्यतो विद्याद्येनानापत्तिको भवेत् ।

कतमानि च तानि मर्मस्थानानि[2] । यदुत ।

आत्मभावस्य भोगानां त्र्यध्ववृत्तेः शुभस्य च ।
उत्सर्गः सर्वसत्त्वेभ्यस्तद्रक्षाशुद्धिवर्धनं ॥ इत्युक्तं[3] ।

एष बोधिसत्त्वसंवरसंग्रहो यत्र बोधिसत्त्वानामभ्यासविशेषेऽप्या-
10 पत्तयो व्यवस्थाप्यन्ते ॥

यथोक्तं बोधिसत्त्वप्रातिमोक्षसूत्रे[4] । यो बोधिसत्त्वेन मार्गः परिगृहीतः सर्वसत्त्वानां कृते[5] दुःखक्षयगामी । स चेद्बोधिसत्त्वस्य तं मार्गं परिगृह्यावस्थितस्य [41a] अपि कल्पकोटेरत्ययेन एकं [6]सुखचित्तमुत्पद्येत । अन्ततो निषद्याचित्तमपि[7] । तत्र बोधि-

---

1 teṣu, twice in *Çikṣās.*

2 The *Çikṣās.* adds: yāni hi sūtrānteṣu mahāyānābhiratānām arthāyoktāni.

3 "Ityuktaṁ" is wanting in the *Çikṣās.*—On these metrical quotations (Cp. *infra ad* V, 1, 54, 80), which seems collectively to form the skeleton, the mūlasûtra, of the Çikṣāsamuccaya, see Prof. BENDALL's Introduction.—See V, 106.

4 °sūtra wanting in Çikṣās.

5 *Çikṣās.*: kṛtena.—Çikṣās.-Ms. has duḥkhakṣa...gāmī (C.B.). Tib., in both works: zad-par-hgyur-bai lam.

6 Tib.: hdug-pa tsam-gyi bde-ba hdod-pai sems cig.

7 Ms. has: niçadyā°; the Ms. of the *Çikṣās.*: niṣadyā.—Niṣadyā is given from Lexx. only in P.W.; but see APTE and *M. Vyut.* 261, 31, *Mhv.* II, 398, 20, 403, 1 (C.B.).—Tib. (see n. 6) = niṣadyā-mātrasukhecchācittam ekam.

यत्नेन एवं चित्तमुत्पादयितव्यं । सर्वसत्त्वानामात्ययिकं परित्यज्य
एतदपि मे बहु[1] यन्निषीदामीति ।

अत एवाह । वैद्योपदेशादिति । यथा वैद्योपदेशम-
कुर्वाणस्य । भैषज्यं साध्यं करणीयं यस्य भैषज्येन वा साध्यस्य
रोगिणः कुतोऽस्ति निरामयत्वं नीरोगता । तथा सर्वज्ञमहा- 5
वैद्योपदिष्टशिक्षाप्रतिपत्तिमकुर्वतः कुतो निरामयत्वं । कर्म-
क्लेशोपजनितजात्यादिदुःखमहाभयादिमुक्तिः ।

[2]तदेवं समात्तसंवरस्य सामान्यमापत्तिलक्षणमुच्यते । येनापत्ति-
लक्षणेन युक्तं वस्तु स्वयमप्युत्प्रेक्ष्य परिहरेत् । न चापत्तिप्रति-
रूपकेष्वनापत्ति[प्रति]रूपकेषु च संमुह्येत् । बोधिसत्त्वः सर्वसत्त्वानां 10
वर्तमानानागतसर्वदुःखदौर्मनस्योपशमाय वर्तमानानागतसर्वसुख-
सौमनस्योत्पादाय च निःशाठ्यतः कायवाङ्मनःपराक्रमैः प्रयत्नं
न करोति[3] । तत्प्रत्ययसामग्रीं नान्वेषते । तदन्तरायप्रतीकाराय
न घटते । अल्पदुःखदौर्मनस्यं बहुदुःखदौर्मनस्यप्रतीकारभूतं
नोत्पादयति । महार्थसिद्ध्यर्थं वाऽल्पहानिं [न] करोति[4] । 15
क्षणमप्युपेक्षते । सापत्तिको भवति । संक्षेपतोऽनापत्तिः स्वशक्त्य-

---

[1] *Çikṣâs.* (printed text) me varjayan niṣīdāmi ; but Mr. Bendall informs me that the Ms, which is broken here probably had the same reading as ours ; also that his Tib. Version reads : bdag ḥdi ltar ḥdug-pa ni sems-can thams cad-la gnod skyur-ro, thus giving no equivalent for bahu—See *infra* the *Additions*—Tib. : hdug-pa gaṅ yin pa de yaṅ m[aṅ po] yin-no.

[2] From *Çikṣâs.* 15, 1-12—Ms. : samādātuṁ saṁvarasya.

[3] Confirmed by Tib.—*Çikṣâs.* has : prayatnaṁ karoti / yadi tu [ta]tpratya-ya°.

[4] Cp. *Dhp.* v. 166.

विषयेषु कार्येषु । तत्र निष्फलतया शिक्षाप्रशंसाभावात्[1] । प्रकृतिसावद्यतया[2] वान्यत्क्रियत एव । यत्र तु[3] स्वशक्त्यगोचरेऽपि [4]योगसामर्थ्यादापत्तिः स्यात्तच्च चिन्त्यं । सामान्यपापदेशनान्तर्भा-वात्ततो शुद्धिः ॥[5] एतत्समासतो बोधिसत्त्वशिक्षाशरीरं । विस्तर-
5 तस्त्वशेष[41b]कल्प[ा]पर्यवसाननिर्देशं[5] ।

अथ वा संक्षेपतो द्वे बोधिसत्त्वस्यापत्ती । यथाशक्त्या[6] युक्ता-युक्तमसमीक्ष्यारभते । न निवर्तते । उपेक्षते वा । सापत्तिको भवति । निरूप्य यथार्हमतिक्रामत्यन्तशश्चण्डालदासेनापि चोदितः सापत्तिको भवति[7] । [8]यः पुनरेतदभ्यासार्थं व्युत्पादमिच्छति
10 तेन[9] शिक्षासमुच्चये तावच्चर्यामुखमात्रशिक्षणार्थमभियोगः कार-णीयः । [10]शिक्षणारम्भस्यैव महाफलत्वात् ॥ यथोपवर्णितं प्रशान्त-विनिश्चयप्रातिहार्यसूत्रे ॥

इति बोधिसत्त्वशिक्षा समासतो यथोपदेशतः कथितेति ॥

इति प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां
चतुर्थः परिच्छेदः[11] ॥

---

[1] *Çikṣās.*: çikṣyā°.
[2] *Ibid.*: tvanyad.
[3] *Ibid.*: Yatra ova°.
[4] *Ibid.*: tyāga°. Tib. brtson-pa-ni çugs-kyis.
[5] Cp. *infra* V, 97.
[6] *Çikṣās.*: Yathāçakti.
[7] Ends the quotation, *Çikṣās.* 15, 18.
[8] From *Çikṣās.* 16, 1-2, where the correction: vyutpāditam, suggested by the non-occurrence of the form *vyutpādā.* (Tib. bye-brag-tu rtogs-pa).
[9] *Ibid.*: tenātra.
[10] *Ibid.*: Çikṣaṇa°.
[11] *Sic.* Tib.—Mss. of the Text: bodhicittāpramādo nāma caturthaḥ...-Tipp.: caturthe smṛtiḥ.

# प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां संप्रजन्यरक्षणं पञ्चमः परिच्छेदः ।

एवमात्मभावादीनामुत्सर्गं[1] रक्षां च प्रतिपाद्य पुनर्विस्तरेण रक्षाशोधनवर्धनानि प्रतिपादयितुमुपक्रमते । उत्पादितबोधिचित्तेन हि बोधिसत्त्वेनोत्सृष्टस्यापि चात्मभावस्य रक्षाशोधनवर्धनानि कार्याणि[2] । यस्मात् ।

> [3]परिभोगाय सत्त्वानामात्मभावादि दीयते । 5
> अरक्षिते कुतो भोगः किं दत्तं यन्न भुज्यते ॥
> तस्मात् सत्त्वोपभोगार्थमात्मभावादि पालयेत्[3] ।
> कल्याणमित्रानुत्सर्गात्[4] सूत्राणां च सदेक्षणात्[5] ॥

तथात्मभावादिपरिपालनादि शिक्षारक्षणादेव स्यात् । अन्यथा [6]नरकादिविनिपातगमनात् तन्न स्यात् । अत इदमभिधीयते । 10

**शिक्षां रक्षितुकामेन चित्तं रक्ष्यं प्रयत्नतः ।**
**न शिक्षा रक्षितुं शक्या चलं चित्तमरक्षता ॥ १**

शिक्ष्यते उपादीयते गृहीतसंवरेणेति । विहितेषु करणीयता । प्रतिषिद्धेष्वकरणं शिक्षा ॥ तां रक्षितुं परिपालयितुं । कामेन ।

---

1 Ātmabhāva = Tib: lus-po.

2 Cp. *supra ad* IV, 48 (*Çikṣās.* 17, 18, and Chap. VI (Ātmabhāvarakṣā) VII (Bhogapuṇyarakṣā).—puṇyavṛddhi, *infra* V, 101, 102.

3 = Çikṣās. 34, 11.

4 *Ibidem*, 34, 12; Cp. V, 103.

5 *Ibidem*, 41, 10. Cp. *Supra*, p. 92, n. 3.

6 Tib: sems-can-dmyal-ba.

रक्षिता बोधिसत्त्वेन । आत्मचित्तं रक्षितव्यं [42a] । प्रयत्नत
इति कथयिष्यमाणात् ॥ अथ शिक्षारक्षणाधिकारे किमिति
चित्तं रक्ष्यत इत्याह । न शिक्षेति । अन्यथा शिक्षैव रक्षितु-
मशक्या चञ्चलमनायत्तं चित्तमरक्षता । चित्तस्य चञ्चलतायां
5 शिक्षायाः स्थैर्यायोगात् ॥

अतोऽपि चित्तमेव रक्षणीयमित्याह ।

अदान्ता मत्तमातङ्गा न कुर्वन्तीह तां व्यथां ।
करोति यामवीच्यादौ मुक्तश्चित्तमतङ्गजः[1] ॥ २

अपरिकर्मिता मत्तवरवारणा न जनयन्ति तां पीडामिह-
10 लोके । परलोके ऽवीच्यादौ यां करोति स्वच्छन्दचारितयावस्थितं ।
चित्तमेव मतङ्गज एव[2] । तथागताज्ञाङ्कुशेन कथं चिद्
वशीक्रियमाणत्वात् ॥

तस्यायत्तीकरणे गुणमाह ।

बद्धश्चेच्चित्तमातङ्गः स्मृतिरज्ज्वा समन्ततः ।
15 भयमस्तंगतं सर्वं कृत्स्नं कल्याणमागतं ॥ ३

यदि बद्धः कथं चिद्भवेत् । स्मृतिर्वक्ष्यमाणलक्षणा[3] । सैव
रज्जुर्बन्धनोपायत्वात् । समन्ततः सर्वथा तत्पक्षे प्रचारनिरोधात्
तदा भयमस्तंगतं प्रत्यस्तमितं सर्वमशेषं । सर्वं कल्याणं

---

1 See Çikṣās. 118, 12 and *infra* V, 40.
2 Ms. mataṅgajameva.
3 Cp. *infra* ad V, 23; Çikṣās. Chap. VI.

Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ... Rs. 5 4

Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and Index; Vol. III, Fasc. 1 @ /12/ each ... ... 12 0

Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2

Ma'āsir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... 2 4

Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... 0 6

Niẓāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each ... 1 8

Riyāẓu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14

Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14

Ditto (English) Fasc. 1–14 @ /12/ each ... ... 10 8

Ditto Index ... ... ... ... 1 0

Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barnī (Text) Fasc. 1–7 @ /6/ each... 2 10

Tārīkh-i-Fīrūzshāhī, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... 2 4

Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0

Wis o Rāmīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14

Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each ... 6 6

Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ... 0 12

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... ... 50 0
2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784–1883 ... 3 0

   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., J.A.S.B., 1878) ... ... 4 0

   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... 2 0

   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... 4 0

   Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... ... ... ... ... 4 0
5. Anis-ul-Musharrahīn ... ... ... ... ... 3 0
6. Catalogue of Fossil Vertebrata ... ... ... ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion 3 8
8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... 32 0
9. Jawāmiu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... 2 0
10. Khizānatu-l-'ilm ... ... ... ... 4 0
11. Mahābhārata, Vols. III and IV, @ 20/ each ... ... 40 0
12. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
13. Sharaya-ool-Islam ... ... ... ... 4 0
14. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 &
15. Ditto Grammar " " ... ... ... 8 &
16. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... 3 0
17. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... 1 0
18. Memoir on maps illustrating the Ancient Geography of Kaśmir by M. A. Stein Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 [illegible]

---

Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... 29 [illegible]

Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 [illegible]

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treas [illegible] Asiatic Society," only.

20-6-1901.

Books are supplied by V.-P.P.

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1031.



# बोधिचर्यावतारपञ्जिका।

# PRAJÑĀKARAMATI'S COMMENTARY

TO THE

# BODHICARYĀVATĀRA OF ÇĀNTIDEVA.

EDITED WITH INDICES

BY

LOUIS DE LA VALLÉE POUSSIN,

PROFESSOR OF SANSKRIT IN THE UNIVERSITY OF GHENT.

FASCICULUS II.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, [illegible], PARK STREET.

1903.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,
46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWI, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| Title | Rs. | As. |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... | 0 | 6 |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–5 Vol. IV, Fasc. 1–5 @ /6/ ... | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–3 ... | 1 | 2 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1–2 ... | 0 | 12 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | 6 | 0 |
| Çatapatha Brāhmaṇa, Fasc. 1–6 ... | 2 | 4 |
| Catasahasrika Projnaparamita, (Text) Fasc. 1–4 @ /6/ each ... | 1 | 8 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... | 19 | 14 |
| Catasahasrika-prajna-pārimita Part I Fasc. 1–3 @ /6/ ... | 1 | 2 |
| Çlokavartika, (English) Fasc. 1–3 ... | 2 | 4 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–17 @ /6/ each ... | 5 | 4 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4, Vol. III, Fasc. 1–4 @ /6/ each ... | 5 | 10 |
| Çri Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... | 1 | [illegible] |
| Dan Kriya Kaumudi, Fasc. 1 ... | 0 | [illegible] |
| Gadadhara Paddhati Kālasāra Vol I. Fasc. 1–4 ... | 1 | [illegible] |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... | 1 | [illegible] |
| Kāla Viveka, Fasc. 1–4 ... | 1 | [illegible] |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each ... | 4 | [illegible] |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... | 10 | [illegible] |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... | 3 | [illegible] |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each ... | 2 | [illegible] |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... | 4 | [illegible] |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–9 & Vol. II, Fasc. 1–7 @ /6/ each ... | 6 | [illegible] |
| Manuṭikā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... | 1 | [illegible] |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... | 4 | [illegible] |
| *Mīmāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each ... | 4 | 1[illegible] |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... | 1 | [illegible] |
| Nyāyavārtika, (Text) Fasc. 1–5 @ /6/ ... | 1 | [illegible] |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | 5 | [illegible] |
| Nityacarapaddhati Fasc. 1–6 (Text) @ /6/ ... | 2 | [illegible] |
| Nyayabinduṭikā, (Text) ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–3 @ /6/ each ... | 3 | 6 |
| Padumawati, Fasc. 1–4 @ 2/ ... | 8 | 0 |

अभ्युदयनिःश्रेयसलक्षणं । आगतं संप्राप्तं । देवस्येव् वृष्टो निष्पन्नाः शालय इति यथा[1] ॥

ननु बहवस्तु मृगव्यालादयोऽप्युपद्रवकारिणः सन्ति । तेभ्यः कथं चित्तस्य वशीकरणाद्भयं न भविष्यतीत्याह ।

व्याघ्राः सिंहा गजा ऋक्षाः सर्पाः सर्वे च शत्रवः । 5
सर्वे नरकपालाश्च डाकिन्यो राक्षसास्तथा ॥ ४
सर्वे बद्धा भवन्त्येते चित्तस्यैकस्य बन्धनात् ।
चित्तस्यैकस्य दमनात् सर्वे दान्ता भवन्ति च ॥ ५

सुबोधं ॥ कुतः पुनरेवमित्याह ।

यस्माद्भयानि सर्वाणि दुःखान्यप्रमितानि च । 10
चित्तादेव भवन्तीति कथितं तत्त्ववादिना ॥ ६

सर्वे [क्ले][ते] कर्माक्षेपवशादनिष्टदायका भवन्ति । कर्म च चित्तमेव चेतना कर्मेति वचनात्[2] । वाक्कायकर्मणोरपि चित्तमेव समुत्थापकं । तदन्तरेण तयोरनुत्पत्तेः । चेतयित्वा कर्मेति वचनात्[2] । तस्मात्सर्वमिह कर्मनिर्मितमेव । तच्च चित्तान्नान्यत्[3] । 15 तदाह ।

---

[1] Quoted *ad* III, 22.

[2] Quoted *infra ad* IX, 73, p. 305, 18 of the printed text; *Madh. vṛtti* XVII, 2: cetanā cetayitvā ca karmoktaṁ paramarṣiṇā. See the first words of the Bodhicittavivaraṇa—GOGERLY quoted by CHILDERS s. voc. citta. (*Dh. sṁ* §§ 4, 5).

[3] *Sic*: but Tib: de yaṅ sems las gźan ma med-pai phyir-ro. = tac ca cittād ananyatvāt.

कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत्[1]।
चेतना मानसं कर्म तज्जे वा[42b] क्कायकर्मणी॥ इति।

न चानपकारचित्तस्य के चिदपकारिणो नाम[2]। यस्मात्।

निवृत्तपापचित्तस्य नास्ति लोके भयं द्विषः।
5 सुखहानिर्न तस्यास्ति यस्य चित्तं वशे स्थितं॥

अत इदमुक्तं।

चित्तस्य दमनं साधु चित्तं दान्तं सुखावहं। इति[3]॥

तत्त्ववादी भगवान् वस्तुतत्त्वकथनशीलत्वात्। तेनेदं तत्त्वं कथितं प्रकाशितं। सर्वं चित्तप्रसूतमिति। अतः सर्वत्र चित्तमेव 10 प्रधानं॥

इत्थमेवैतन्नान्यथा। इति प्रसाधयन्नाह।

शस्त्राणि केन नरके घटितानि प्रयत्नतः।
तप्तायःकुट्टिमं केन कुतो जाताश्च ताः स्त्रियः॥७

नरकपालानां कुन्तासिमुसलादीनि। असिपत्त्रवनसमुद्भूतानि 15 वा। केन कृतानि। न तत्र कश्चित्कर्तास्ति ईश्वरादिः। तत्कर्तृत्वस्यान्यत्र निषिद्धत्वात्। इहापि निषेत्स्यमानत्वात्[4]॥ तप्तलोहमयी च भूमिः केन घटिता। ताश्च स्त्रियः कुतः कारणसामग्रीतो जाता याः पारदारिकैः शाल्मलीवृक्षस्याधस्ता-

---

1 Tib : de ni sems-pa dan des byas.—This Stanza is quoted IX, 73 (p. 305, 18).
2 Cp. *supra ad* I, 34, 36.
3 Quoted Chap. IX, (312, 6) and notes in loco (*cp. Dhammapada*, 25).
4 Cp. Chap. IX, 119–126.

दुपरि च दृश्यन्ते। स च ग्रात्मलिर्वा। अतो नान्यत्कारणमत्र चित्तादुपकल्पनीयं। यदुक्तं।

सत्त्वलोकमथ भाजनलोकं
चित्तमेव रचयत्यतिचित्रं।
कर्मजं हि जगदुक्तमशेषं 5
कर्म चित्तमवधूय च नास्ति॥ [1]इति॥

तस्माच्चित्तमेवात्र कारणं नान्यदित्यत आह।

**पापचित्तसमुद्भूतं तत्तत्सर्वं जगौ मुनिः।**
**तस्मान्न कश्चित्त्रैलोक्ये चित्तादन्यो भयानकः॥८**

पापकर्मोपस्कृतं चित्तमेव तेषां कारणं भगवान् कथितवान्। 10 नापरं किं चित्॥ यत एवं तस्मान्न त्रिजगति पापचित्तादपरः कश्चिद्भयहेतुरस्ति। तस्माच्चित्तमेव वशीकर्तव्यं॥ यदुक्तमार्यरत्नमेघे[2]। चित्तपूर्वंगमाः सर्वधर्माः। चित्ते परिज्ञाते सर्वधर्माः परिज्ञाता भवन्ति॥ अपि च

चित्तेन नीयते[3] लोकः [43a] चित्तं चित्तं न पश्यति[4]। 15
चित्तेन चीयते कर्म शुभं वा यदि वाशुभं॥

चित्तं भ्रमतेऽलातवत्। चित्तं विभ्रमते तरङ्गवत्[5]। चित्तं दहते दवाग्निवत्। चित्तं रोहयते[6] महाम्बुवदिति च। एवं

---

1 Quoted *ad* IX. 73 (p. 305, 20) and *Pañcakramaṭ*, 40, l. 39.

2 Quoted *Çikṣās*. 121, 12. Cp. *Dhammapada* 1.

3 Ms: citte vacīyate; but Tib. confirms the reading of the *Çikṣās*.—Cp. *Laṅkāv.* 52, 15: cittena cīyate karma manasā ca vidhīyate.

4 Cp. IX, 17. 5 Mss. turaṅga; but Tib: rlabs.

6 *Çikṣās.*: harate (Tib: bskyed).

व्युपपरीक्षमाणश्चित्ते सूपस्थितस्मृतिर्विहरति। न च चित्तस्य वशं गच्छति। अपि तु चित्तमेवास्य वशं गच्छति। चित्तेनास्य वशीभूतेन सर्वे धर्मा वशीभवन्तीति॥

स्यादेतत्। दानपारमितादिषु कथमिव चित्तं प्रधानं[1]। सा
5 हि सर्वसत्त्वानां दारिद्र्यापनयनलक्षणेत्याह।

अदरिद्रं जगत्कृत्वा दानपारमिता यदि।
जगद्दरिद्रमद्यापि सा कथं पूर्वतायिनां॥ ९

दारिद्र्यं हि नाम सास्रवसुखभोगबुभुक्षया चित्तकार्पण्यं उपकरणवैकल्यं वा। तदपनीय जगतो यदि दानपारमिता-
10 परिपूरिर्भवतीत्युच्यते[2]। तदा सा कथं। न कथं चिदपि। पूर्वतायिनां पूर्वमभिसंबुद्धानां भगवतां युज्यते। कुतः। जगद्दरिद्रमद्यापि। नाद्यापि यावज्जगद्दारिद्र्यमुपशाम्यति॥ यद्येवं नेष्यते। कथं तर्हि सा भवतीत्याह।

फलेन सह सर्वस्वत्यागचित्ताज्जनेऽखिले[3]।
15 दानपारमिता प्रोक्ता तस्मात्सा चित्तमेव तु॥ १०

सर्वस्वं बाह्याध्यात्मिकं सर्वं वस्तु दानं[4] दानफलं च सर्व-

---

1 Cp. *supra* 98, 10.

2 Paripūri, Cf. *M. Vyut.* 244, 71; Senart, *Mhv.* I. 373.

3 So. L[3]. M. and Tib.: sems-kyis; Dev. 85, B. 90: °svatyāgacittaṁ.; Min.: sarvasvam.—It is worth remark that the "puṇya" produced by the "puṇya-dāna" is only to be desired, for the welfare of beings. (Çikṣās. 147, 17). the doctrine of Manu IV, 32.

4 So Tib. and Ms.

सत्त्वेभ्यः परित्यजतोऽभ्यासेन प्रकर्षगमनात्[1] यदापगतमात्सर्य-मलं निराशङ्कतया चित्तमुत्पद्यते। तदा दानपारमिता निष्पन्नेत्युच्यते। तस्मात् सा चित्तमेव नान्या दानपारमिता॥ शीलपारमिता तु सुतरां चित्तमेवेत्यत आह।

मत्स्यादयः क नीयन्तां मारयेयं यतो न तान्। 5
लब्धे विरतिचित्ते तु शीलपारमिता मता॥११

प्राणातिपातादिसर्वावद्यविरतिचित्तमेव हि शीलं। न पुन-स्तदाश्रयभूतबाह्यविषयनिवृत्तिस्वभावं। यदि पुनर्वधादि-विषयवस्तुस्वभावेन तद्वधाद्यभावाच्छीलं स्यात्। तदा ते मत्स्या-दयः[2] [43b] क नीयन्तां यत्र तेषां दर्शनं न स्यात्। अन्यथा 10
तद्वधाद्युपक्रमे शीलं न स्यात्। न चैवं। तस्मात्तेषु विद्यमाने-ष्वपि लब्धे विरतिचित्ते निवृत्तिमनसिकारे[3] शीलपारमिता मता संमता तत्स्वभावविदां। तस्मात्सा चित्तमेव॥ क्षान्ति-पारमितापि न चित्ताद्भिन्नेत्याह।

कियतो मारयिष्यामि दुर्जनान् गगनोपमान्। 15
मारिते क्रोधचित्ते तु मारिताः सर्वशत्रवः॥१२

परापकारादिसंभवेऽपि चित्तस्याकोपनता क्षान्तिः। अन्यथा

---

1 On this expression and the connected one: prakarṣaparyanta°, see Nyāyabinduṭīkā, 14, 22; and Chap. ix of this book.

2 Tib. adds: gźan-gyi bdog-pa daṅ bud-med daṅ chaṅ-la-sogs-pa: parasvaṁ ca striyaç ca madyādi ca.

3 Tib.: sems ldog-par yid-la byed-pa.

यदि सर्वशत्रूणां तद्विनिपातनेन[1] वैरनिर्यातनं कृतवतः केन-
चिद्वैराभावादुपशान्तवैरस्य न कश्चिदपकारी स्यात् । इति
मर्षणं क्षान्तिः ।[2] तदेतदशक्यानुष्ठानं । शत्रवो हि गगनसम-
त्वादपर्यन्ताः[3] । तेषां मारणमशक्यं । तस्मात् क्रोधादिनिवृत्ति-
5 चित्तमेव तेषामुपायेन मारणमिव । तत्कृतापकारस्यागणनात्[4] ।
जन्मान्तरवैरासंभवाच्च[5] । मारितप्रायास्ते ॥ अथाशक्यताया-
मप्युपायेन प्रवृत्तौ दृष्टान्तोपदर्शनेन शक्यतामाह ।

भूमिं छादयितुं सर्वां कुतश्चर्म भविष्यति ।
उपानच्चर्ममात्रेण छन्ना भवति मेदिनी ॥ १३

10 कण्टकाद्युपघातरक्षणार्थं पृथ्वी छादयितुमुचिता । न चैत-
च्छक्यं । तावतश्चर्मणोऽभावात् । भावेऽपि छादनस्याशक्यत्वात् ।
उपायेन पुनः शक्यं । उपानच्चर्मणा केवलेन सर्वा भूमि-
श्छादिता भवति ॥ दृष्टान्तोक्तमर्थं प्रकृते योजयन्नाह ।

बाह्या भावा मया तद्वच्छक्या वारयितुं न हि ।
15 स्वचित्तं वारयिष्यामि किं ममान्यैर्निवारितैः ॥ १४

शत्रुप्रभृतयो भावा मया वारयितुमशक्याः । तद्वत्
मेदिनीचर्मच्छादनवत् । अपकारक्रियायाः । अतः स्वचित्तमेव
शक्यं वारयिष्यामि । अन्यवारणस्यापार्थकत्वात् । स्वचित्त-

---

1 Hitherto only: "das zur Fehlgeburt bringen." (W.K.F.).
2 Ms. tad etad; Tib.: dei thse de...
3 See *supra* I, 33.
4 Agaṇana is new; cp. W.K.F. s. voc. gaṇanā, agaṇayant.
5 There an application of the principle, *supra* p. 98 n. 2.

वारणादेव तत्सिद्धेः । तस्मात्सा चित्तमेव ॥ वीर्यपारमिता तु कुशलोत्साहस्वभावाऽतिविस्पष्टं चित्तमेवेत्याह[44a] ।

सत्यापि वाक्छरीराभ्यां मन्दवृत्तेर्न तत्फलं ।
यत्पटोरेककस्यापि चित्तस्य ब्रह्मतादिकं ॥ १५

वचनकायचरितस्यापि चित्तस्य कुशलपक्षे मन्दप्रचारस्य न 5
तादृशं फलमुपजायते । यादृशं ध्यानादिविषये पटुप्रवृत्तेरेकाकिनोऽपि चित्तस्य फलं ब्रह्मभूयादिकं । तस्मात् सा चित्तमेव ॥
ध्यानं तु चित्तैकाग्रतालक्षणं चित्तादन्यथा वक्तुमशक्यमित्याह ।

[1]जपास्तपांसि सर्वाणि दीर्घकालकृतान्यपि ।
अन्यचित्तेन मन्देन वृथैवेत्याह सर्ववित् ॥ १६ 10

मन्त्राद्यावर्तनलक्षणा वचनव्यापारा जपाः । तपांसि चेन्द्रियदमनलक्षणाः कायिकाः । तान्यतिबहुकालमभ्यस्तान्यपि । अन्यत्र सक्तचित्तेन मिद्धाद्युपहतचित्तेन[2] वा । [3]समाधपाटवविकलेनेत्यर्थः । वृथैव निष्फलमेव । अत्यर्थमल्पफलत्वात् । अभिमतार्थेऽनुपयोगाद्वा । पुण्योऽप्यपुण्य एव पुण्यकार्याकरणाद्यथा । इत्याह 15
भगवान् सर्वज्ञः । तस्माद् ध्यानपारमितापि चित्तमेव ॥ प्रज्ञा तु निर्विवादा चित्तमेवेत्याह ।

---

1 See J.R.A.S., 1895, p. 485 and *Ādikarmapradīpa*, in (*Études et Mat.*, p. 203):
tathā coktaṁ *Vidyādharapiṭake* । japās tapāṁsi ..... । anyacittena mandena sarvaṁ bhavati niṣphalam. (Cf. *Çikṣās*. 142, 12).

2 As observed by KERN (*Saddh. puṇḍ*, p. 319) "middha is a would-be Sanskrit form, it ought to be mṛddha from Vedic mṛdhyati."

3 So Ms.; But Tib.: bsam-gtan-la gsal: = dhyānapāṭava°; or samādhi°.

दुःखं हन्तुं सुखं प्राप्तुं ते भ्रमन्ति मुधाम्बरे[1]।
यैरेतद्धर्मसर्वस्वं चित्तं गुह्यं[2] न भावितं ॥ १७

पञ्चगतिसंसारजात्यादिदुःखं प्रहातुं तत्प्रहाणे निर्वाणसुखमधिगन्तुं ते सत्त्वा मुधा निरर्थका एव भ्रमन्ति अम्बरे काशीपुष्पमिव[3] निष्फलं संसारे। यदनुष्ठितं क्वचिदपि न लग्नमिति तदेवमभिधीयते पञ्चाग्निसेवाग्निरोलुञ्चनादिव्रतं। के पुनरेवं भ्रमन्ति। यैः संसारभयभीरुभिः सुखार्थिभिश्च धर्मसर्वस्वं सर्वलौकिकलोकोत्तरधर्मनिदानभूतं चित्तं बालानामगोचरस्वभावतया गुह्यं न भावितं तत्त्वचित्ततया[4] पुनः पुनः स्थिरीकृतं ॥

तस्मादियमतितरां चित्तमेव। यथोपवर्णितमार्यगण्डव्यूहे[5]। स्वचित्ताधिष्ठानं सर्वबोधिसत्त्वचर्या। स्वचित्ताधिष्ठानं सर्वसत्त्व[परि]पाकविनयः[6] ॥ पेयालं ॥ तस्य मम कुलपुत्र एवं भवति स्वचित्तमेवो[44b]पस्तम्भयितव्यं [सर्व]कुशलमूलैः। स्वचित्तमेव परिस्यन्दयितव्यं[7] धर्ममेघैः। स्वचित्तमेव परिशोधयितव्यमावरणीयधर्मेभ्यः[8]। स्वचित्तमेव दृढीकर्तव्यं वीर्येणेत्यादि[5] ॥

इति चित्तस्वभावतां सर्वत्र प्रतिपाद्योपसंहरन्नाह।

---

1 *Sic* Dev., Burn.; Minaev has : °ti adhāmbare.

2 Minaev has : cittaguhyaṁ.

3 *Kāsa : Moringa pterygosperma (W.K.F.); Tib. : me-tog ka-çibzin-du.

4 *tatvacitta*tatva [ta] yā : the italicised syllables marqued in Ms. as suspect; the syllabe [ta], supplied in margine. Tib. : de-kho-na-nyid-kyi sems-kyis = tattva-tva-cittena.

5.5 = *Çikṣās.* 122, $_{10-14}$.

6 Cf. *Lal. Vist.* 217, $_{5}$.

7 *Çikṣās.* has : evābhiṣyandayitavyam; Tib. : yoṅs-su.

8 *ibid.* āvaraṇīya dh°. See supra, p. 16 n. 1.

तस्मात्स्वधिष्ठितं चित्तं मया कार्यं सुरक्षितं ।
चित्तरक्षाव्रतं मुक्त्वा बहुभिः किं मम व्रतैः ॥ १८[1]

एवमुत्पादितबोधिचित्तेन शिक्षारक्षणे यत्नवता मनसि कर्तव्यं । स्वधिष्ठितं स्मृत्या सुरक्षितं संप्रजन्येन वक्ष्यमाणरीत्या मया स्वचित्तं कर्तव्यं तदेकाग्रमानसेन । अत्रैव सर्वेषामन्तर्भावात् । अतश्चित्तरक्षणमेव प्रधानं व्रतं । तद्विहाय किमन्यैर्व्रतैर्बहुभिरपि मम प्रयोजनं । न किंचित्तद्रक्षितस्य निष्फलत्वात् ।

[2]एतावती चेयं बोधिसत्त्वशिक्षा यदुत चित्तपरिकर्म[3] एतन्मूलत्वात्सर्वसत्त्वार्थानां[2] ।

तद्यथा धर्मसंगीतिसूत्रे कीर्तितं[4] । मतिविक्रमबोधिसत्त्व आह । योऽयं धर्मो धर्म इत्युच्यते । नायं धर्मो देशस्थो न[5] प्रदेशस्थोऽन्यत्र स्वचित्ताधीनो धर्मः । तस्मान्मया स्वचित्तं स्वाराधितं स्वधिष्ठितं सुपरिजितं[6] सुसमारब्धं सुनिगृहीतं कर्तव्यं । तत्कस्य हेतोः । यत्र चित्तं तत्र गुणदोषाः[7] । [8]तद्बोधिसत्त्वो दोषेभ्यश्चित्तं निवार्य गुणेषु प्रवर्तयति । तदुच्यते । चित्ताधीनो धर्मो धर्माधीना बोधिरिति[4] ॥

---

1 Quoted *infra ad* V, 58.
2-2 from *Çikṣās.* 121, 10-11. See *infra* V, 58.
3 Tib: sems yoṅs su-sbyaṅ-ba.
4-4 See *Çikṣās.* 112, 4-8.
5 Tib. deça = yul ; pradeça = phyogs.
6 This word is wanting in *Çikṣās.*
7 Tib. adds: yatra na cittam tatra na guṇadoṣāḥ.
8 *Çikṣās.* has :' tatra.

एवं चित्तायत्ततां सर्वत्र निश्चित्य चित्तदृढतायामुदाहरणमाह ।

यथा चपलमध्यस्थो रक्षति व्रणमादरात् ।
एवं दुर्जनमध्यस्थो रक्षेच्चित्तव्रणं सदा ॥ १९

5 असमाहितजनमध्ये पुनरुपघातभयात्तद्गतमनसा यथा व्रणं रक्षति कश्चिदप्रमत्तः । एवं तथा श्रिचारक्षणकामः । अकारणवैरिबालजनमध्ये संवसन् तत्परश्चित्तं व्रणमिव रक्षेत् [45a] सर्वकालं ॥ यथाप्रसिद्धित इदमुदाहरणं । न तु पुनर्मनागपि सादृश्यमस्तीत्याह ।

10 व्रणदुःखलवाद्भीतो रक्षामि व्रणमादरात् ।
संघातपर्वताघाताद्भीतश्चित्तव्रणं न किं ॥ २०

ईषन्मात्रं दुःखं दुःखलवो व्रणकृतः । तस्माद्भीतो रक्षामि व्रणं । प्रकृतानुरोधे रक्षतीति पाठो युक्तः[1] । आदरात् तात्पर्येण । संघातनरकप्रभवादनेकवर्षसहस्रानुभूयमानदुःखात्[2]
15 पर्वताघातात्पर्वतो व्याप्तिप्रहारात् । भीतः । चित्तव्रणं न किं रक्षेदिति प्रकृतेन संबन्धः । यदि वा । अहं तु किं न रक्षामीति परिणामेन योजनीयं । अथ वा । एवमुत्पादितबोधिचित्तेन मनसा चिन्तयितव्यमित्यवतार्यते । तदा रक्षामीति[3] ॥ कः पुनरेवं सति गुणः स्यादित्याह ।

---

[1] Ms.: °rodhaṁ...yuktaṁ.; This clause is wanting in Tib.

[2] Cp. *Mhv.*—(See hdon-pa) I, 13, 11.

[3] Tib.: dei-thse bsruṅ-bar-bya o zes gdon ciṅ sbyar-bar-bya o =......iti pāṭho yojanīyaḥ.

अनेन हि विहारेण विहरन् दुर्जनेष्वपि ।
प्रमदाजनमध्येऽपि यतिर्धीरो न खण्ड्यते ॥ २१

यस्मादेव[॰] मनसिकारेण विहरन् वनिताजनमध्येऽपि प्रासादपृष्ठे अयमनिवार्योऽतिशयेन कामरागेषु । तेनेदमुक्तं यतिर्धीर इति । अस्मिन्मनसिकारे निश्चप्रचित्तः[1] । न खण्ड्यते । शिचारक्षणमनसिकारान्न स्खलति । पुनरेवं करणीयमित्यचार्थे दृढमभिनिवेशं दर्शयन्नाह ।

लाभा नश्यन्तु मे कामं सत्कारः कायजीवितं ।
नश्यत्वन्यच्च कुशलं मा तु चित्तं[2] कदाचन ॥ २२

चीवरपिण्डपातादयो नश्यन्तु विलयं यान्तु मम कामं यथेष्टं । सत्कारो गौरवेणासनदानपादवन्दनादिपूजा । कायो जीवितं च । सर्वमेतन्नश्यतु । अन्यदपि यत्किंचित्सुखसौमनस्य-निमित्तं । तदपि नश्यतु । कुशलं पुनर्मम चित्तं मा कस्मिंश्चिदपि काले नङ्क्षीदिति ॥ अत्र पुनरादरमुत्पा[द]यितुं शास्त्रकार आह ।

चित्तं रक्षितुकामानां मयैष क्रियतेऽञ्जलिः ।
स्मृतिं च संप्रजन्यं च सर्वयत्नेन[3] रक्षत ॥ २३

अञ्जलिं कृत्वा प्रार्थयामि[4] । किमर्थं । स्मृतिं च संप्रजन्यं

[1] This word is new; cf. *supra ad* III, 10; *Çikṣās*. 19, 2). ; 15?, 2.—Tib. yid-la byed-pa hdi-la ṅes-par sems-pao.—(ṅes-pa = niçcita.)

[2] *Sic* L[8]. M.; Minaev has: mā tac cittam—Tib.: sems ni nams-kyaṅ...... :

[3] Minaev has: sarvaṁ yatnena.—saṁprajanya = Tib. çes-bzin.

[4] This pregnant meaning of the word añjali is to be noted, cf. *supra* III, 4.

च । न केवलां स्मृतिं । नापि केवलं[45b] संप्रजन्यमिति परस्परापेक्षया चकारद्वयं ।[1] तत्र स्मृतिरार्यरत्नचूडसूत्रेऽभिहिता । यया स्मृत्या सर्वक्लेशानां प्रादुर्भावो न भवति । यया स्मृत्या सर्वमारकर्मणामवतारं न ददाति । यया स्मृत्या उत्पथे 5 कुमार्गे वा न पतति[2] । यया स्मृत्या दौवारिकभूतया[3] सर्वेषामकुशलानां चित्तचैतसिकानां धर्माणामवकाशं न ददाति । इयमुच्यते सम्यक्स्मृतिरिति[1] ॥

संक्षेपतः पुनरियं स्मृतिरुच्यते । विहितप्रतिषिद्धयोर्यथायोगं स्मरणं स्मृतिः[4] । यच्चाह । स्मृतिरालम्बनासंप्रमोष इति[5] ॥

10 [6]संप्रजन्यं तु प्रज्ञापारमितायामुक्तं । चरंश्चरामीति प्रजानाति । स्थितः स्थितोऽस्मीति प्रजानाति । [7]निषण्णो निषण्णोऽस्मीति प्रजानाति । शयानः शयितोऽस्मीति प्रजानाति । यथा यथाऽस्य[8] कायः स्थितो भवति तथा तथैनं[9] प्रजानाति ॥ पेयालं ॥ सोऽतिक्रामन् वा [प्रतिक्रामन् वा] संप्रजानचारी[10]

---

1.1 = Çikṣās. 120, 7–10.

2 *Sic* Ms.; from a second-hand na nayati.

3 Cp. *infra* V, 33 (BENDALL).

4 I have not found this quasi-metrical definition (See *infra ad* V. 54, *in fine*) of the Smṛti in the *Çikṣās.*—from which Prajñākaramati derived all his materials.

5 Cp. for the meaning, *Çikṣās.* 128, 15; and *infra* V, 29.—Yac cāha = Tib.: gaṅ-gi phyir..... zes bstan-pa yin-no = (yasmāt .....iti deçitam).

6 See *ibid.*, 120, 11–16. 7 Here the *Çikṣās.* has: çayānaḥ çayita iti prajānāti.

8 *ibid.*: ...yathā cāsya.

9 *ibid.*: tathaiva.—*enam* (or *eva*) is wanting in Tib.

10 So Ms.; the *Çikṣās.* has °jānacārī, °jānancārī; Prof. BENDALL reads: jānaṁç carī, and writes to me: °jānacārī is out of the question; °janyacārī might do; I prefer my reading which allows for the utter ignorance of *sandhi* on the part of scribes.

भवति। आलोकिते विलोकिते संमिञ्जिते[1] प्रसारिते संघाटीपटपात्रचीवरधारणे अशिते पीते खादिते निद्राक्लम-[प्रति]विनोदने आगते गते स्थिते निषण्णे सुप्ते जागरिते भाषिते तूष्णीभावे प्रतिसंलयने संप्रजानचारी भवतीति[2] ॥

इदमेव वक्ष्यति। 5

एतदेव समासेन संप्रजन्यस्य लक्षणं।

यत्कायचित्तावस्थायाः प्रत्यवेक्षा मुहुर्मुहुः ॥ इति[3] ॥

कः पुनरनयोर्व्यतिरेके दोषः। येनैते यत्नेन रक्षणीये कथिते इत्याह।

व्याध्याकुलो नरो[5] यद्वन्न क्षमः सर्वकर्मसु। 10
तयाभ्यां व्याकुलं[6] चित्तं न क्षमं सर्वकर्मसु ॥ २४

रोगोपहतसामर्थ्यो यथा पुरुषः सर्वकर्मसु गमनभोजनादिष्वकर्मण्यो[46a]भवति। तथा स्मृतिसंप्रजन्याभ्यां विकलं चित्तं सर्वकर्मसु ध्यानाध्ययनादिलक्षणेषु ॥ अनयोः समुदायाभावे दोषमुक्त्वा प्रत्येकमभावे कथयितुमाह। 15

असंप्रजन्यचित्तस्य श्रुतचिन्तितभावितं।
सच्छिद्रकुम्भजलवन्न स्मृताववतिष्ठते ॥ २५

---

[1] See SENART, *Mhv.*, I, 418, and *Divyâv.* 473, 6 (BENDALL).

[2] Ends the quotation from *Çikṣâs.*

[3] See *infra* V, 108, and *Çikṣâs.* 118. 13—BURNOUF, *Lotus*, 342.

[4] Tib: °ākulā narāḥ (mi-dag).

[5] Tib.: nad-kyis dkrugs-pai... । be-bzin rmoṅs-pas sems [dkru]gs-pa ।...... ॥

न विद्यते संप्रजन्यं यस्मिंस्तदसंप्रजन्यं। तच्चित्तं यस्य तस्य। श्रुतचिन्ताभावनामयप्रज्ञापरिनिष्ठितं[1] वस्तु न स्मरणमधिवसति। तन्मूलं च सर्वं कल्याणं। किमिव। यथा सच्छिद्रकुम्भे सुखप्रक्षिप्तमुदकमधस्ताद्गच्छति नावतिष्ठते॥ इदमपरं तद्व्यतिरेके 5 दूषणमाह।

अनेके श्रुतवन्तोऽपि श्राद्धा यत्नपरा अपि।
असंप्रजन्यदोषेण भवन्त्यापत्तिकश्मलाः॥ २६

बहवोऽपि बहुश्रुताः। तथा श्रद्धावन्तो यत्नपराः शिक्षायामादरकारिणः। असंप्रजन्यदोषेणापत्तिकलुषिता भवन्ति। काय10 चित्तप्रचाराप्रत्यवेक्षणात्॥ अपरमपि तदभावे दूषणमाह।

असंप्रजन्यचौरेण स्मृतिमोषानुसारिणा[2]।
उपचित्यापि पुण्यानि मुषिता यान्ति दुर्गतिं॥ २७

असंप्रजन्यमेव संप्रजन्याभावः क्लेशस्वभावश्चौरः कुशलधनापहरणात्। तेन स्मृतिमोषानुसारिणा। रक्षपालभूताया 15 स्मृतेः प्रमोषमभावमनुसृत्य। मुषिता विलुप्तकुशलधनाः सन्तः। उपचित्यापि पुण्यानि कुशलधनानां संचयं कृत्वापि। दुर्गतिपरायणा भवन्ति॥ कुतः पुनरेवमित्युक्तमेवार्थं स्पष्टयन्नाह।

क्लेशतस्करसंघोऽयमवतारगवेषकः।
प्राप्यावतारं मुष्णाति हन्ति सद्गतिजीवितं॥ २८

---

1 See *supra*, p. 5, n. 1.

2 Cp. *M. Vyut.* 9, ३, ९.

तस्कराश्चौराः। तेषां संघातः। अवतारगवेषकः पिशाचवदवतारमार्गप्रेक्षी छिद्रान्वेषणतत्पर इत्यर्थः। प्राप्यावतारं प्रवेशमार्गमासाद्य मुष्णाति। ततो हन्ति शोभनगतये जीवितप्रतिलम्भं। कुशलपाथेयाभावात् ॥

स्मृतिमधिकृत्याधु[46b]ना प्राह। 5

**तस्मात्स्मृतिर्मनोद्वारान्नापनेया कदाचन।**
**गतापि प्रत्युपस्थाप्या संस्मृत्यापायिकीं व्यथां॥२९**

यतः स्मृतेरभावे दूषणमेवं स्यात् तस्मादिदमत्र दोषं पश्यता। स्मृतिरालम्बनासंप्रमोषलक्षणा[1]। मनोद्वारान्मनोगृहप्रवेशमार्गात्[2]। नापनेया नापसार्या सदावस्थापयितव्येत्यर्थः। 10
अथ कदाचित्प्रमादतस्ततोऽपगच्छेत्। तदा गतापि पुनर्निवर्त्योपस्थाप्या। तत्रैवारोपयितव्या। कथं। संस्मृत्य मनसि निधाय आपायिकीं नरकादिदुर्गतिव्यथां ॥

तत्र द्वादशेमाः स्मृतयो निष्फलस्पन्दवर्जनाय[3] तथागताज्ञा[न]तिक्रमानुपालनविपाकगौरवस्मृतिप्रभृतयः शिक्षासमुच्चये[4] 15
प्रदर्शिताः। तत एव विवेकेनावधार्याः।

सापि स्मृतिस्तीव्रादादरात्समुत्पद्यते। आदरोऽपि शमथ-

---

[1] Cp. *supra*, 108, 9.
[2] Manogṛha = cittanagara, *Çikṣās.* 123; *infra* V, 33.
[3] Ms.: niṣphalāsy°; See *infra* V, 38, 54; *Çikṣās.* 44, 19, 116, 12, n. 4, and *M. Vṛtti.* xvii, 4.
[4] p. 118, 4.

माहात्म्यमवगम्य[ा]तापेन[1] जायते । एतच्च यथावसरं वक्ष्यामः[2] ॥

केषां चित्पुनरन्यथापि स्मृतिरुत्पद्यते । तदुपदर्शयन्नाह ।

**उपाध्यायानुशासिन्या भीत्याप्यादरकारिणां ।**
**धन्यानां गुरुसंवासात्सुकरं जायते स्मृतिः ॥ ३०**

आचार्योपाध्यायसंनिधौ । तदन्यतमाराध्यसब्रह्मचारिसंनिधौ वा संवसतां । तदनुशासिन्या । भीत्या तद्भयेनापि । [3]आदरः कार्येषु सर्वभावेनाभिमुख्यमवज्ञाप्रतिपक्षो धर्मः[3] । तत्कारिणां यत्नवतां सुकृतिनां तदनुशासनीं[4] हिताहितविधिप्रतिषेध-नियमनमनुरटतामकष्टेनैव स्मृतिरुत्पद्यते ॥ इत्थमपि विहरन् स्मृतिमनधिकारबहुलविहारी भवतीति कारिकाद्वयेन दर्शयन्नाह ।

**बुद्धाश्च बोधिसत्त्वाश्च सर्वत्राव्याहतेक्षणाः ।**
**सर्वमेवाग्रतस्तेषां तेषामस्मि पुरः स्थितः ॥ ३१**
**इति ध्यात्वा तथा तिष्ठेत्त्रपादरभयान्वितः ।**
**बुद्धानुस्मृतिरप्येवं भवेत्तस्य मुहुर्मुहुः ॥ ३२**

---

1 Cp. *Çikṣās.* 119, $_{1\cdot3}$. Tib.: khoṅ·du chud-nas ltuṅ-blaṅs-ba-las skye... Notwithstanding the readings of the Çikṣās. and of our text (*infra* stanzas *ad* V, 54), our reading is confirmed by Çikṣās. 119, $_{15}$, and foll. (and Tib. *in loco*) "idaṁ çamathamāhātmyam......avagamya tadabhilāṣeṇātāpo bhāvayitavyaḥ। tena tīvra ādaro bhavati çikṣāsu।" (Cf. *infra* 42, $_{1\cdot2}$).

2 See *infra ad* V, 54.

3.3 = *Çikṣās.* 119, $_{2}$.

4 Cp. *Çikṣās.* 122, $_{15}$; 2, $_{6}$; 36, $_{2}$, $_{5}$; *M. Vyut.* 16, $_{3}$; *infra* V, 74, 103, where occurs the form anuçāsinī.

सर्वदा बुद्धबोधिसत्त्वानां समस्तवस्तुविषयाप्रतिहतज्ञान[47a]-चक्षुषां सर्वमेव वस्तुजातं पुरतोऽवस्थितमेव। अहमपि तेषां पुरोऽवस्थित एव। सर्ववस्तुवत्। इति मनसि निधाय तथैव संयतात्मा तिष्ठेत्। त्रपादरभयान्वितः। अप्रतिरूपे कर्मणि त्रपा लज्जा। शिक्षायामादरः। तदतिक्रमे भयं। बुद्धबोधि- 5 सत्त्वेष्वेव वा त्रपादयः॥ एवं सत्यपरोऽपि विशेषः स्यादित्याह। बुद्धेत्यादि। तदेवं विहरतस्तस्य प्रतिक्षणमकामत एव बुद्धानुस्मृतिरपि स्यात्[1]॥

संप्रजन्यस्योत्पत्तिस्थैर्ययोः स्मृतिरेव कारणमिति कथयन्नाह।

संप्रजन्यं तदायाति न च यात्यागतं पुनः। 10
स्मृतिर्यदा मनोद्वारे रक्षार्थमवतिष्ठते॥ ३३

यदा स्मृतिर्मनोगृहद्वारि क्लेशतस्करसंघातानुप्रवेशनिवारिणी दौवारिकवदवस्थिता भवति। तदा संप्रजन्यमयत्नत एवोत्पद्यते। उत्पन्नं च सुस्थिरीभवति॥ एवं तावदनयोरन्वयव्यतिरेकाभ्यां गुणदोषावभिधाय अनर्थविवर्जनार्थं निष्फलस्यन्द- 15 वर्जनमाह[2]।

पूर्वं तावदिदं चित्तं सदोपस्थाप्यमीदृशं।[3]
निरिन्द्रियेणेव मया स्थातव्यं काष्ठवत्सदा॥ ३४

---

[1] Cf. *Dharmasaṃgraha*, LIV.
[2] See *supra* p. 111. n. 3.
[3] But Tib.: re-sig dan-por hdi-hdrai sems। de ni skyon-bcas çes byas-nas। (skyon-bcas = jñātvā sadoṣam idṛçam).





प्रथमं तावत् इदं चित्तमित्यध्यात्ममपि चिन्तयति। सर्वकालमीदृशमुत्क्रमयुक्तमुपस्थापयितव्यं। ततः परं निष्फलचक्षुर्वर्जनार्थमपगतकरणीयानामेव निष्फलरूपादिविषयप्रपञ्चसर्वविकल्पोपसंहारात्। मया स्थातव्यं। किमिव। काष्ठवत्। चक्षु-
5 रादिव्यापारशून्यत्वात्॥ इदमेव व्यनक्ति।

निष्फला नेत्रविक्षेपा न कर्तव्याः कदा चन।[1]
[2]निध्यायन्तीव सततं कार्या दृष्टिरधोगता॥३५॥

ईषन्मुकुलितपक्ष्मयुगला नासाग्रविनिवेशिता युगमात्रव्यवलोकिनी[3] वा कार्या दृष्टिः॥ प्रथमारम्भिणः संतताभ्यासेन
10 क्लेशस्य परिहारार्थमाह।

दृष्टिविश्रामहेतोस्तु दिशः पश्येत्कदा चन।
[4]आभासमात्रं दृष्ट्वा च स्वागतार्थं विलोकयेत्॥३६॥

दृष्टिचित्तपरिखेदपरित्यागाय [47b]। कदा चित्कर्हि चित्। दिशो व्यवलोकयेत्। अथ कदाचित्कश्चित्तत्समीपमा-
15 गच्छेत् तदा तस्य प्रतिच्छायामात्रं[5] विदित्वा स्वागतवादेन

---

1 Cp. Manu, IV. 177: na netracapalo...

2 So. M, Dev., Burn.; L[2]. °ttīva; Minaev has[5]: °yatīva. Tib.: ńes-par sems-pas rtag-tu ni | mig ni ... = sthiracittena satatam....

3 See Childers, s. voc. Yuga; *M. Vyut.* 163, 15.

4 Ābhāsa, cp. *Çikṣās.* 129, 8.—Tib.: hga-zig mig-lam snańgyur na | bltas-nas ońs-pa legs ses brjod = Kadā cit cakṣurmārge ābhāse bhūte dṛṣṭvā svāgatam iti vadet.

5 Tib.: dei ońs-pai sar tsam...(?)—dei ońs-pai = tasya āgacchataḥ; sar = andha.

संतोषणार्थं विलोकयेत्[1] । अन्यथा तत्र तदनवलोकनेनाकुशलं प्रसवेत् ॥ मार्गेऽपि [2]तथादृष्टेर्गच्छत उपघातपरिहारार्थमाह ।

मार्गादौ भयबोधार्थं मुहुः पश्येच्चतुर्दिशं ।
दिशो विश्रम्य[3] वीक्षेत परावृत्यैव पृष्ठतः ॥ ३७

भयहेतुचौरादिप्रतिपत्त्यर्थं । चतुर्दिशमिति क्रमेण । अन्यथात्मभावस्य रक्षा कृता न स्यात् । सर्वदिग्व्यवलोकनं तु क्रियमाणमौद्धत्योपघातपरिहारार्थं स्थित्वा कर्तव्यं[4] । पृष्ठतो व्यवलोकनं परावृत्य पश्चान्मुखीभूय ॥ असमाधानस्य च रक्षणायाह ।

[5]सरेदपसरेद्वापि पुरः पश्चान्निरूप्य च ।
एवं सर्वास्ववस्थासु कार्यं बुद्ध्वा समाचरेत् ॥ ३८

सरेत्पुरः । अपसरेत्पश्चात् । प्रपाताद्युपघातं निरीक्ष्य च । एवमित्युक्तक्रमदिशा[6] स्वपरहितप्रयोजनमवगम्य[7] प्रतिपत्तिसारो भवेत् ॥

इदानीं संप्रजन्यकारितां शिक्षयितुमाह ।

कायेनैवमवस्थेयमित्याक्षिप्य क्रियां पुनः ।
कथं कायः स्थित इति द्रष्टव्यं पुनरन्तरा ॥ ३९

---

[1] Cp. *infra* V, 80: ṛju paçyet sadā sattvān.

[2] Tib.: de-ltar lta-ba-na = tathā dṛṣṭvā = tathā-dṛṣṭer.

[3] Minaev: diço'paçramya; L[2]: viçramya; B. viçrāmya; M viçrābhya.— Tib.: ṅal-sos.—Schiefner: ṅal gso-ba = nach Ermüdung ausruhen.

[4] See *Çikṣās*. 106, 15, 118, 9, 198, 10.

[5] So Burn.; Minaev: saced... Tib.: hgro am yaṅ...

[6] Tib.: ...rim-pai zuṅ-gyis.

[7] Prayojana = dgos-pa = kārya.

चतुर्णामीर्यापथानामन्यतमस्मिन्नीर्यापथे । कायेनैवमिति
स्थितेन निषण्णेन वाऽवस्थेयमिति । तदनन्तरं स्वाध्यायादिक्रिया-
मारभ्य पुनरन्तराले व्यवलोकयितव्यं कथं कायः स्थित इति
तस्मिन्नेवेर्यापथे । उत भिन्न ईर्यापथे । भिन्ने पुनः पूर्ववद्व-
5 स्थाप्यः ॥ कायप्रत्यवेक्षामभिधाय चित्तप्रत्यवेक्षणामाह ।

निरूप्यः[2] सर्वयत्नेन चित्तमत्तद्विपस्तथा ।
धर्मचिन्तामहास्तम्भे यथा बद्धो न मुच्यते ॥ ४०

धर्मस्य स्वपरहितलक्षणस्य चिन्तैव महास्तम्भो बन्धनायत्ती-
करणहेतुत्वात् । तस्मिन् बद्धोऽपि पुनः पुनर्निरूपणीय इत्याह ।

10 कुत्र मे वर्तत इति प्रत्यवेक्ष्यं तथा मनः ।
समाधानधुरं नैव क्षणमप्युत्सृजेद्यथा ॥ ४१

क्व पुनरिदं मनो [48a] मम वर्तते । पूर्वस्मिन्नालम्बने
अन्यत्र वा गतं । गतमवगम्य ततो निवर्त्य तत्रैव योजयितव्यं ।
स्वरसवाहितायामुपेक्षणीयं । इति शमथधुरमेकमपि क्षणं यथा
15 न परित्यजति तथा धारयितव्यं ।

[3]एतावता शीलं हि समाधिसंवर्तनीयमित्युक्तं भवति ॥
यथोक्तं चन्द्रप्रदीपसूत्रे

---

1 See *Çikṣās.* 51, 8, 53, 18.

2 Minaev has: nirūpya—cp. *Çikṣās.* 118, 12: cittamattadvipasya çamatha-stambhe nityabaddhasmṛtiḥ.

3 See. *Çikṣās.* 121, 1-5.

क्षिप्रं समाधिं लभते निरङ्गण[1]
विशुद्धशीलस्य हि आनुशंसा इति[2] ।

अतोऽवगम्यते । ये के चित्तसमाधिहेतवः प्रयोगास्ते शीले अनुगता[3] इति ॥ तस्मात्समाध्यर्थिना स्मृतिसंप्रजन्यशीलेन भवितव्यं । तथा शीलार्थिनापि समाधौ यत्नः कार्य इति ॥[4]   5

समाधानपरित्यागावकाशमाह ।

भयोत्सवादिसंबन्धे यद्यशक्तो यथासुखं ।
दानकाले तु शीलस्य यस्मादुक्तमुपेक्षणं ॥ ४२

अग्निदाहादिभयं । तथा रत्नत्रयपूजादिकृत उत्सवः[5] । समधिकतरः सत्त्वार्थादिर्वा[6] । तत्संभवे यदि स्थातुमशक्तः । तदा   10
कामचार इत्यनुज्ञातं । सापत्तिको न भवतीत्यर्थः ॥ कुतः पुनरयमनियमो लभ्यत इत्याह । दानेत्यादि । शीलं यद्यपि दानात्प्रकृष्टं । तथाप्यवरशिक्षायां शिक्ष्यमाणस्य तदनन्तरमेवोत्तरशिक्षावस्थितस्याभ्यासपाटवाभावात् कथं चित्तावकाशं ततो

---

[1] Ms. lābhāta.—Niraṅgaṇa, cp. BURNOUF, *Lotus* 865, RHYS DAVIDS, *J.R.A.S.*, 1898, p. 191 (BENDALL).

[2] Ms. has: ānu°; *Çikṣās.* : °smina ānu° çaṁsa; Prof. BENDALL reads: °çīle'sminnānuçaṁsa. See KERN, *Lotus*, p. 336. ānṛçaṁsa = guṇa (= pālī-ānisaṁsa); "not limited to Buddhist writings as we see from the inscription at Bassac in Camboja, st. 18."

[3] *Çikṣās.* : çīlāntargatā iti—but Tib. rjes-su-soṅ-pa.

[4] Ends quotation from *Çikṣās.*

[5] Ms. : kṛtanutsavaḥ.

[6] So Ms. : possibly corrupt.—See *Çikṣās.* 167, 2.—(Tib. has here de-bas... : tato ... ).

निवर्तमानस्यापि नापत्तिः ॥ दानकालो कालो न शीलस्य ॥ अत एवोक्तं। यद्यप्यल्प इति। एतावन्मात्रेणेदमुदाहरणं। यथोक्तं[1]। तत्रैकस्यां शिक्षायां निष्पाद्यमानायामशक्तस्येतरशिक्षानभ्यासादनापत्तिः।

5 आर्याक्षयमतिसूत्रेऽप्येवमवोचत्[2]। दानकाले शीलोपसंहारस्योपेक्षे[48b]ति विस्तरः। न चातः शिथिलेन भवितव्यं ॥[1]

यत्र कुशलपक्षसंचारेऽपि न चित्तसमाधानविघातः स्यात्तन्नोपादेयमित्याह।

यद्बुद्ध्वा कर्तुमारब्धं ततोऽन्यन्न विचिन्तयेत्।
10 तदेव तावन्निष्पाद्यं तद्गतेनान्तरात्मना ॥ ४३[3]

स्वयमेव तु युक्त्यागमाभ्यां कल्याणमित्रवचनाद्वा यथाबलमवधार्य यत्किंचित्कर्म कर्तुमारब्धं ध्यानाध्ययनादिकं। प्रथमतस्तदेव तावन्निष्पत्तिं नेयं तन्निम्नेन मनसा। न पुनस्तदनिष्पन्नमेव परित्यज्य परमारम्भणीयं॥ किं पुनरेवं स्याद्यदि न
15 स्यादित्याह[4]।

एवं हि सुकृतं सर्वमन्यथा नोभयं[5] भवेत्।
असंप्रजन्यक्लेशोऽपि वृद्धिं चैवं गमिष्यति ॥ ४४[3]

---

1 *Çikṣās.* 11, 7, where occurs instead of niṣpādyamānāyām : çikṣaṇāyām.— See *ibid.* 167, 1-2; and *infra* V. 84.

2 Ms. : sūtre hy... ; but Tib. has : kyaṅ, (=api) and *Çikṣās.* : api. *Çikṣās.* has : na cātra...

3 Cp. *infra*, VII. 47, 48.

4 So Ms. ; but Tib. : yady evaṁ na syāt ko doṣaḥ.

5 Minaev has : ...no bhayaṁ bhavet.

यश्चाद्येवमनुतिष्ठतः सर्वं सुश्लिष्टं कृतं स्यात् । तद्विपर्यये पुनर्दुःश्लिष्टमुभयं पूर्वं चान्तं पश्चात्कौकृतं[1] च स्यात् । चलप्रवृत्ते-रसंप्रजन्यं स्यात् । प्रवेशे वृद्धिः स्यात् ॥

इत्थमपि निष्फलं वर्जयेदित्याह ।

नानाविधप्रलापेषु[2] वर्तमानेष्वनेकधा । 5
कौतूहलेषु सर्वेषु हन्यादौत्सुक्यमागतं ॥ ४५

अनेकप्रकारेऽसंबद्धाभिधानेऽपरोपाधिके[3] प्रवर्तमाने । आश्चर्य-वस्तुषु च समस्तेषु स्वयमपि तत्क्रियायां दर्शनश्रवणाय वा[क्]चि-त्तस्य[4] तारतम्यं निवारयेत् ॥

अपरमपि निष्फलवर्जनाय प्रातिमोक्षोद्दिष्टमाचरेत् । 10
इत्याह ।

मृत्मर्दनतृणच्छेदरेखाद्यफलमागतं ।
स्मृत्वा ताथागतीं शिक्षां भीतस्तत्क्षणमुत्सृजेत् ॥४६[5]

भूमिफलकादिषु नखदण्डादिना रेखाकर्षणलेखनादि । निष्प्रयोजनमागतमापतितं विवर्जयेत् । भगवताच निवृत्ति- 15

---

1 Tib. : sṅar khas-blaṅs-pa daṅ phyis dam-bcas-pa.

2 On the saṁbhinnapralāpa, see Çikṣās. 73, 15.

3 Tib. : gzan-dag-gis byas-pa-la hjug-pa : para-kṛta-pravartamāna.

4 Tib. : raṅ-gis kyaṅ bya-ba de-la blta-ba daṅ mñan-pai phyir ṅag-daṅ sems suga-pa-las bzlog-par-byao I .—ṅag = vākya, etc.

5 Minaev has : tatkṣaṇād bhīta utsṛjet ;—but cp. *infra* 120, 1.—Cp. *Manu*, IV. 50, 55, 70 ; *Pātimokkha*, ed. Min., p. 12.

राज्ञमेति संस्मृत्य । तदतिक्रमविपाकफलभयात् । तत्क्षणमिति न तत्र कालपरिलम्बं कुर्यात् ॥

संक्लेशसमुदाचारे संप्रजन्यकारितां यदेत्यादिभिः सप्तभिः श्लोकैः शिक्षयितुमाह ।

5 यदा चलितुकामः स्याद्वक्तुकामोऽपि वा भवेत् ।
स्वचित्तं प्रत्यवेक्ष्यादौ कुर्याद्धैर्येण युक्तिमत्[1] ॥ ४७

प्रथमत एव स्वचित्तं निरूप्य । उक्तं । असंक्लिष्टावस्थायां कर[49a]णीयमुक्तं । एतदेव दर्शयति ।

अनुनीतं प्रतिहतं यदा पश्येत्स्वकं मनः ।
10 न कर्तव्यं न वक्तव्यं स्थातव्यं काष्ठवत्तदा ॥ ४८

रक्तं द्विष्टं वा स्वचित्तं यदा पश्येत् । तदा हस्तपदादिचलनमात्रकमपि न कर्तव्यं । नापि वचनोदीरणं । अन्यथा तदुत्थापिते कायवाग्विज्ञप्ती[2] अपि संक्लिष्टे[3] स्यातां । अतो बहिरिन्द्रियव्यापारविकल्पावुपसंहृत्य[4] स्थातव्यं काष्ठवत्तदा ।
15 सर्वव्यापारविरहान्निर्व्यापाराः सर्वधर्मा इति मनसि निधाय ॥

अपरमाह ।

उद्धतं सोपहासं वा यदा मानमदान्वितं ।
सोत्प्रासातिशयं वक्रं वञ्चकं च मनो भवेत् ॥ ४९

---

1 So: Min.; M.: yuktimān.—Tib. rigs-pa ldan-par bya.
2 On "vijñapti" and "avijñapti," see *Madhyamakavṛtti*, XVII, 4.
3 Ms.: saṁkṛṣṭe: Tib.: ñon-moṅs-ldan.
4 Tib. has no dual form (vikalpam).

उद्धतमिति । सद्धर्मादिश्रवणप्रमादात् । अपि । उद्धतं विक्षेपबहुलमित्यर्थः । सोपहासं । वाग्विहेठनात्मकं । तथा युक्तं वा । मानश्चित्तस्योन्नतिः । मदः स्वधर्मे[1] चित्तस्याभिनिवेशः । ताभ्यामन्वितं तत्संप्रयुक्तं । उत्प्रासः कायिकी विहेठना[2] । तेन सहोत्कटं । वक्रं कुटिलं शठं वा । वञ्चकं प्रतारकं मायावि वा । 5 यदि मनो भवेत् । स्थातव्यं काष्ठवत्तदेति संबन्धः ।

> यदात्मोत्कर्षणाभासं[3] परपंसनमेव च ।
> साधिक्षेपं ससंरम्भं स्थातव्यं काष्ठवत्तदा ॥ ५०

आत्मोत्कर्षणं । स्वगुणातिशयप्रकाशनं । तदाभासं[4] तत्प्रतिभासं तद्विकल्पनात् । परपंसनं[5] परविपक्षः दोषाविष्करणं वा । 10 तद्युक्तं । अधिक्षेपः परस्य वचनतिरस्कारः । संरम्भः महाकलि-विवादनिमित्तचित्तप्रदोषः । उभयत्र सह तेन वर्तत इति विग्रहः । एवं यदा पश्येत्स्वकं मनः स्थातव्यं काष्ठवत्तदेति सामान्योक्तमभिसंबध्यते ।

> लाभसत्कारकीर्त्यर्थि परिवारार्थि वा पुनः । 15
> उपस्थानार्थि मे चित्तं तस्मात्तिष्ठामि काष्ठवत् ॥ ५१

---

1 Svadharma, should the reading be right, is not the svadharma of Manu, but synonymous to svapakṣe-ātmany.

2 Hitherto: viheṭhanam.

3 Tib.: bstod lhur-len-pa = ātmastutiparāyaṇaḥ.

4 = der snaṅ-ba ni.

5 Cf. *Çikṣās.* 10, n. 4; and *M. Vyut.* 127, 4: parapaṁsaka.—*Ibid.*, ātmotkarṣa, kuṭila-citta, etc.

16

कीर्तिर्यशः। परिवारः। दासीदासकर्मकरादिः। उपस्थानं पादधावनमर्दनादि। एभिर[र्थि]र्थं तदभिलाषं मम चित्तं तस्मात्तिष्ठामि काष्ठवत्।

परार्थरूक्षं[1] स्वार्थार्थि परिषत्काममेव वा।
5 [2]वक्तुमिच्छति मे चित्तं तस्मात्तिष्ठामि काष्ठवत्॥ ५२

परार्थरूक्षं परार्थविमुखं। स्वार्थार्थि स्वा[49b]र्थाभिनिविष्टं। परिषत्। शिष्यान्तेवासिप्रभृतिजनसमाजः। तदभिलाषि। तत्परिवारार्थि।

असहिष्ण्वलसं भीतं[3] प्रगल्भं मुखरं तथा।
10 स्वपक्षाभिनिविष्टं च तस्मात्तिष्ठामि काष्ठवत्॥ ५३

असहिष्णु असहनशीलं। अलसं क्रियास्वकर्मण्यं कुसीदमित्यर्थः। भीतं कायजीवितभीरु[4]। भयहेतुभ्यो वा। प्रगल्भं धृष्टं। मुखरं दुर्वचस्कं। युक्तायुक्तमनपेक्ष्याभिधायकं वा। स्वपक्षे शिष्यान्तेवासिज्ञातिसालोहितादौ अभिनिविष्टं पक्षपातातिशयवत्॥
15

सांप्रतं प्रतीकारनिर्देशमाह।

एवं संक्लिष्टमालोक्य निष्फलारम्भि वा मनः।
निगृह्णीयाद् दृढं शूरः प्रतिपक्षेण तत्सदा॥ ५४

---

1 Minaev has: °rūkṣyam.—Tib. uses periphrases: gzan-don yal-bar hdod-pa dan : rañ-don gñer-bar hdod-pa-dag ... and does not translate the second pāda

2 So M[2] and Tib.; Minaev: vartum; L[2]: kartum.

3 Minaev: asahiṣṇulasambhītam.

4 Tib.: lus dan htbso...

उपदर्शितक्रमेण संक्लिष्टं संक्लेशसंप्रयुक्तं निष्फलव्यापारं वा ज्ञात्वा स्वचित्तं सर्वप्रवृत्तिनिरोधेन प्रभावमन्दतां विधाय निगृह्णीयादभिभवेत् । इदं यथा पुनरपि समुदाचारधर्मकं न भवति[1] । क्लेशादिसंग्रामे विजयाय कृतपरिकरः शूरो बोधिसत्त्वः । प्रतिपक्षेण यो यस्मिन् प्रतिपक्ष उक्तः । यथा रागादावशुभादि । तेन तद्विपरीतविधानेनेत्यर्थः । सदा सर्वकालं । यदा यदा संक्लिष्टं प्रतीयते ।

[2]उप[परि]पृच्छायां गृहिणं बोधिसत्त्वमधिकृत्योक्तं । तेन सुरामैरेयमद्यप्रमादस्थानात् प्रतिविरतेन भवितव्यं । अमत्तेनानुन्मत्तेन । अच[प]लेनाचञ्चलेनाभ्रान्तेनामुखरेणानुन्नतेन[3] । अनुद्धतेन । उपस्थितस्मृतिना[4] । ससंप्रजन्येनेति ॥ अत्रैव च प्रव्रजितं बोधिसत्त्वमधिकृत्योक्तं । स्मृतिसंप्रजन्यस्याविक्षेप इति ॥[2]

तथार्यतथागतगुह्यसूत्रे दर्शितं[5] । न खलु पुनः कुलपुत्र बोधिसत्त्वस्य वाचका वा [दुष्टा वा मूढा वा][6] क्लिष्टा [50a]

---

1 "So that it shall not be again an object for the samudācara." There are two "samudācāra," the vidūṣanā° (chap. II,) and the pratipakṣa° (*Çikṣās.* 171, 6—176, 3. 209, 5—*infra* V, 84), methods to the "purification from sin" (pāpaçodhana).

2 = *Çikṣās.* 120, 3-8.

3 See *M. Vyut.* 127, 10, 11. The lectio difficilior "unnaḍa" adopted by Prof. Bendall is confirmed by the Pali "unnaḷa" (*cf.* 120, n. 2)—The Tib. (mi-rgod), so far as I know, is not decisive (= anuddhata) Prof. Bendall kindly gives me references to *Çikṣās.* 105, 3, 108, 12 (unnāma) and Morris, J.P.T.S., 1887, p. 120, 121.

4 *Çikṣās.* has: upasthitasmṛtisampra°.

5 = *Çikṣās.* 126 5-9.

6 mūḍhā, from Çikṣās.; sdaṅ-ba = dviṣṭā.

वा क्षणव्याकरणी[1] वा अपक्षोत्कर्षणवचना वा परपक्षनिग्रह-
वचना वा आत्मवर्णानुनयवचना वा परवर्णप्रतिघातवचना[2]
प्रतिज्ञोत्तारणवचना[3] वा आभिमानिकव्याकरणवचना वेति[1] ॥

एवं निष्प्रयोजनवाक्यवर्जनेनानर्थादात्मभावस्य रक्षा प्रतिपा-
5 दिता भवति । [4]तस्मान्मया औचच्छितेनाप्रकम्प्येनाशिथिलेन
भवितव्यमिति[4] । एतच्च समाहितचित्तस्य सिध्यति । [5]अत इदं
शमथमाहात्म्यमवगम्य तात्पर्येण भावयितव्यं[6] । अनेन तीव्र
आदरो भवति शिक्षासु । तेनापि स्मृतिरुपतिष्ठते । उप-
[स्थित]स्मृतिर्निष्फलं वर्जयति । तस्मादनर्था न संभवन्ति । तस्मा-

---

1-1 Ms. has: kṣaṇa° and so Tib.: skad-cig (= kṣaṇa) gsal-bar byas pa am. Prof. BENDALL reads: kṣuṇṇa, according to the Ms. of the Çikṣās. for apparently kṣūṇa; and Tib. *in loc*: thogs-pa (= pratihata).—Çikṣās.: °vyākaraṇā more correctly (*cp.* WHITNEY, 1150, f.)

On this word, M. KERN writes the following observation: "Je pense que la forme prâkrite primitive etait *akkhaṇa*, qui dans le composé pāli *akkhaṇavedhin* est expliquiée par *aviraddhavedhin* (Jātaka, III 322, IV 494, V 129; Aṅg. Nik., I 284, II 171. On en a fait en sanscrit bouddhique akṣuṇavedhin [°dha°, Divyāv. Index, C. BENDALL]. Le Pāli comme le sanskrit bouddhique ont correctement interprèté le sens du mot " (touchant infailliblement la marque de tir" mais on ont ignoré l'étymologie (= sansk. *ākhana-vedhin*)—Il n'est pas impossible qu'on ait déduit, par abstraction, de *akkhaṇa*, un mot *Khaṇa*: le contraire de akkhaṇa."—MORRIS, T.P.I.S., 1885.

The reading of our Ms. *Kṣaṇa*, being confirmed by the Tib., is possibly good, being a sanskritised form of this *Khaṇa*.

2 *Çikṣās*. pratigha°, confirmed by VI, 62 pratighacitta, etc

3 Ms. pratijñānut°.

Tib.: kha og-tu lus-la brus-par mi byed-pai thsig-gam = pratijñā-uttāraṇa ātmabhāva-aparīkṣā-vacanamvā.

4-4 From the *Dharmasaṃgīti*, cf. *Çikṣās*. 119, 14.

5 With some omissions and variants = *Çikṣās*. 119, 15—120, 2.—See *supra ad*. V, 29.

6 *Çikṣās*.: ātāpo bhāvayitavyaḥ.—Tib.: de ltuṅ blaṅs-te = ātāpa.

दात्मभावं रक्षितुकामेन स्मृतिमूलमन्विष्य नित्यमुपस्थितस्मृतिना भवितव्यं[1] ॥ एतदेवाह ।

तथात्मभावे का रक्षा यदनर्थविवर्जनं[2] ।
केन तल्लभ्यते सर्वं निष्फलस्पन्दवर्जनात्[3] ॥
एतत्सिध्येत्सदा स्मृत्य[ा][4] स्मृतिस्तीव्रादराद्भवेत्[5] । 5
आदरः शममाहात्म्यं ज्ञात्वा तात्पर्येण जायते[6] ॥ इति

शमथमाहात्म्यं तु यथावसरमिहैव कथयिष्यते[7] ॥ अयमत्र पिण्डार्थोऽनर्थविवर्जनार्थमवधारयितव्य[8] इति दृढचित्ततयोपप्र-
दर्शयन्नाह ।

सुनिश्चितं सुप्रसन्नं धीरं सादरगौरवं । 10
सलज्जं सभयं शान्तं पराराधनतत्परं ॥ ५५
परस्परविरुद्धाभिर्बालेच्छाभिरखेदितं ।
क्लेशोत्पादादिदं ह्येतदेषामिति दयान्वितं ॥ ५६

---

1 = *Çikṣās.* 119, $_{15}$—120, $_{2}$.

2 *Çikṣās.* 44, $_{19}$—ātmarakṣā, cp. *Dhammapada*, 157.

3 *Ibid.* 116, $_{12}$; cf. *supra*, p. 113, $_{15}$.

4 *Ibid.* 118, $_{8}$.

5 *Ibid.* 119, $_{1}$, and *supra*, p. 112, $_{1}$.

6 *Ibid.* 119, $_{2}$, with the reading: çamatha° (cf. *ibid.* l. 3: kas tāvad ayaṁ çamo nāma, and 123, $_{18}$). The fourth pāda is unmetrical.—Tib. has: brtun, for which the *Lal. Vist.*, according to Foucaux, has: ātāpa,° in.—*Em' conj.* jñātvātāpena jāyate.—*cf.* IV, 48, V; 1.

These four lines are the 7th and the 8th Kārikās of the *Çikṣāsamuccayakārikās* See Prof. Bendall's Introduction to the *Çikṣās.*

7 See *ibid.* 119, $_{9}$ and foll. and chap. IX, $_{1}$ of this book, (p. 287).

8 Cp. *Çikṣās.* 127, $_{8}$: ... asya tu granthavistarasyāyaṁ piṇḍārtho bodhisattvena manasā nityaṁ dhārayitavyaḥ !—Then occur the stanzas *Bodhic.* V, 55, 57, with the reading *suniçcalam* (Bendall, 127, n. 1).

आत्मसत्त्ववशं नित्यमनवद्येषु वस्तुषु ।
निर्माणमिव निर्मानं[1] धारयाम्येष मानसं ॥ ५७

सुनिश्चितं संदेहविपर्यासरहितं । सुप्रसन्नं सदा प्रीतिसौ-
मनस्यबहुलं । धीरमचञ्चलं । आदरः कथित एव । गौरवं
5 आराध्येषु चित्तस्य नम्रता । ताभ्यां सह वर्तते । सलज्जं पूर्ववत् ।
सभयं स्खलित - - - लोके भीतं[2] । शान्तं संयतेन्द्रियं ।
सत्त्वाराधनयत्न[50b]वत् ।

यदेकस्य रुचिजनकं तदन्यस्य विपरीतं । अन्योऽन्यविरु-
द्धाभिः पृथग्जनेच्छाभिरखेदितमविप्रतिसारि । कथं दयान्वितं ।
10 हेतुपदमेतत् । कुतः । यस्मात्क्लेशोत्पादात्स्वातन्त्र्यादिदमेतत्
परस्परविरुद्धचरितं एषां बालानामिति मत्वा[3] ।

आत्मसत्त्ववशं स्वपरायत्तं सर्वकालं । किं सर्वत्र । न । अन-
वद्येषु वस्तुषु । [4]उभयसावद्यशून्येषु । किंवत् निर्माणमिव[5] ।
निर्मितवत् । विगतमानं[6] मानसं धारयामि । एषोऽहमिति
15 बोधिसत्त्वो [7]मनसि निवेशयेत् ।

अस्मादपि संवेगमनस्कारात्चित्तस्यानर्थविवर्जनेन रक्षा
विधातव्येत्याह ।

---

1 Minaev: nirmāṇam; Tib: sprul-pa bzin-du ṅa med-par = nirmitavat...

2 Ms.: akhalite tyaralokya bhītam; Tib.: hkhrul-pa hbyuṅ-bas hjig-rten-la hjigs-pa.—Ch. *supra* 113, 5.

3 Cp. *infra* VI, 25.

4 Prakṛtyā, prajñaptyā avadyam.

5 See the note to Çikṣās. 127, 13.

6 Cp. *Çikṣās.* 153, 19: Sattveṣu nirmānatā.

7 *Ex conj.* Ms. has: °tvena manasi.

चिरात्प्राप्तं क्षणवरं स्मृत्वा स्मृत्वा मुहुर्मुहुः ।
धारयामीदृशं चित्तमप्रकम्प्यं सुमेरुवत् ॥ ५८

अतिचिरतरेण कालेन लब्धमुक्तं क्षणवरं । स्मरणेन चेतसि कृत्वा पुनः पुनरन्तरं स्थिरीकरोमीदृशमुक्तस्वभावं । अप्रकम्प्यं कम्पयितुमशक्यं कामादिवितर्कपवनैः पर्वतराजवत् ॥ 5

[1]एवमेताभ्यां च शीलसमाधिभ्यामन्योन्यसंवर्धकाभ्यां चित्तकर्मपरिनिष्पत्तिः ।[2] तस्माद्व्यवस्थितमेतत् चित्तपरिकर्मैव बोधिसत्त्वशिक्षेति[2] । तेन यदुक्तं ।

चित्तरक्षाव्रतं मुक्त्वा बहुभिः किं मम व्रतैः । इति[3] ।

तत्परिनिष्ठितं ॥ 10

पुनस्तदेकान्तमवधारयितुं कायप्रत्यवेक्षामाह ।

गृध्रैरामिषसंगृद्धैः कृष्यमाण इतस्ततः ।
न करोत्यन्यथा कायः कस्मादत्र प्रतिक्रियां ॥ ५९

कायस्य सर्वथा क्वचिदपि व्यापारो नास्ति । स्वात्मन्यपि सामर्थ्याभावात् । अन्यथा चित्तरहितो मृतस्य कायः । गृध्रादिभिर्विप्रलुप्यमान[4] इतस्ततः प्रतिकारमात्मरक्षणार्थं किमिति न करो[ती]ति पृच्छति [51a] । सर्वसामर्थ्यविकलत्वात् ॥ 15

---

1 *Çikṣās.* 121, 10.

2 *Ibid.* 123, 13 (tasmād vyavasthitam evam). parikarma = yoṅs-su sbyaṅ-ba. — Cp. KERN, *Lotus*, p. 295.

3 *Supra* V, 18.

4 Cp. *Mhv.*, II 356, 9; 412, 13, etc.

अत एव चित्तपरिकर्मैव कार्यं। तस्मिन् परिचामिते[1] काय-स्यायत्त एव परिकर्मविधिः। तत्परतन्त्रत्वात्तस्येत्युक्तं भवति ॥

एवं सर्वथानुपयोगिनि काये सापेक्षतां निरस्यन्नाह।

रक्षसीमं मनः कस्मादात्मीकृत्य समुच्छ्रयं।
5 त्वत्तश्चेत्पृथगेवायं तेनास्य तव को व्ययः ॥ ६०

हे मनः। अनात्मकमेवात्मत्वेन स्वीकृत्य मांसास्थिपुञ्जं कायसंज्ञकं कस्मात्कारणात्त्वं रक्षसि। किमेवमिति चेत्। भवतो यदि भिन्न एवायं कायः। तेन अस्यापचये तव किमपचीयते ॥ पूर्वमेव चिरं स्वीकृत इति चेदाह।

10 न स्वीकरोषि हे मूढ काष्ठपुत्तलकं[2] शुचिं।
अमेध्यघटितं यन्त्रं कस्माद्रक्षसि पूतिकं ॥ ६१

हे मूढ मोहविजृम्भितमेतद्भवतः[3]। शुचिं पवित्रं। अयं त्वशुचिः। इदमेवाह। अमेध्येति। पूतिकं शतनधर्मकं[4] ॥ स्यादेतत्। किमन्यस्मिन्नपि दोष उच्यत इत्यथाह।

---

1 New and curious.

2 Minaev has: °likam; L², M., Dev., Burn.: °lakam.

3 Vijṛmbhita (hgyiṅ-ba; Jäschke, s. voc. sgyiṅ = to yawn, gape...... almost exclusively used in describing the attitude of a dying lion, and so also the dying attitude of Buddha) cp. *Mhv.* I, 495, Foucaux, Musée Guimet, XIX, p. 36.

4 Çatana according to Cowell and Neil = cutting (*Divyâv.* 183, 22; 281, 20:... sarvasaṃskāragatiḥ çatanapatanavikiraṇavidhvaṃsanadharmatayā parāhatya...;)—But = caduc, according to Prof. Kern; "A peu près synonyme de patana. *Çat* = *çad* = latin *cado*. En sanskrit il n'y a que le causatif çâtayati, considéré comme le causatif de çad (= çâtaue)."

इमं चर्मपुटं तावत्स्वबुद्ध्यैव पृथक् कुरु ।
अस्थिपञ्जरतो मांसं प्रज्ञाशस्त्रेण मोचय ॥ ६२
अस्थीन्यपि पृथक् कृत्वा पश्य मज्जानमन्ततः[1] ।
किमत्र सारमस्तीति स्वयमेव विचारय ॥ ६३

चर्ममयं पुटं । स्वमतिविशेषेण । पृथक् कुरु । स्वकायादप- 5
सारय । अस्थिघटितपञ्जराभ्यन्तरात् प्रज्ञात्मकेन शस्त्रेण मांस-
कर्तनेन । तदनन्तरमस्थीन्यपि खण्डशः पृथग्भिन्नानि कृत्वा
मज्जानं पश्य । अवलोकय पर्यन्तं[2] कायः । चतुर्महाभूतिकः[3] ।
मातापित्रशुचिकललसंभूतः । दुःखमयः । कृतघ्नश्चेति विस्तरेण
प्रतिपादयिष्यतीति[4] । किमत्र सारमस्ति स्थिरमग्रस्तं न्याय्यं वा । 10
इत्यात्मनैव विचारय ।

एवमन्विष्य यत्नेन न दृष्टं सारमत्र ते ।
अधुना वद कस्मात्त्वं कायमद्यापि रक्षसि ॥ ६४

एवं कथितनयेन । साधूक्तमिति चेत् । अधुना वद कस्मा-
त्त्वमद्यापि सर्वगुणविकलमपि कायं रक्षसि । एवं विद्वानपि ॥ 15
तथाप्यस्ति किं चिद्योपादेयमिति चेदाह [51b] ।

---

1 = down to, see *Divyâvadâna*, s. voc. antaças.—So Tib.: rkaṅ-gi bar-du lta-bya-śiṅ.

2 So Ms.; but Tib.: lus-kyi naṅ gaṅ yin-pa = yat kâyasyântar asti.

3 The regular vṛddhi omitted.

4 See chap. IX, 58–60, 79–88; *Çikṣâs.* 209 and foll.

न खादितव्यमशुचि[1] त्वया पेयं न शोणितं ।
नान्त्राणि चूषितव्यानि किं कायेन करिष्यसि ॥ ६५

यद्यस्ति न तदुपयुक्तमिति संक्षेपार्थः । अतः किमनुप-
योगिना कायेन करिष्यसि । तथायत्नो न युक्त इत्यर्थः ।
5 अन्यप्रयोजनाभावादिदमेवोचितमुत्पश्यामः । इत्याह ।

युक्तं गृध्रशृगालादेराहारार्थं तु रक्षितुं[2] ।
[3]कर्मोपकरणं त्वेतन्मनुष्याणां शरीरकं ॥ ६६

यस्मात्कर्मणि तेन किंकरकारिभावेनोपयुज्यत इति
रक्ष्यते[4] । तथापि नात्राभिनिवेशः कार्य इत्याह ।

10 एवं ते रक्षतश्चापि मृत्युराच्छिद्य निर्दयः ।
कायं दास्यति गृध्रेभ्यस्तदा त्वं किं करिष्यसि ॥ ६७

आच्छिद्येति बलाद्भवतो[5] गृहीत्वा निष्कृपो मृत्युस्तव कायं
गृध्रेभ्यो दास्यति । तदापि न कश्चित्प्रतिकारो भविष्यति ।
इत्यभिप्रायः ॥ स्यादेतद्यद्यप्येवं तथापि भक्ताच्छादनादिमात्रे-
15 णापि परिपालनीय इत्यथाह ।

---

1 So Dev., Burn. ;—Minaev has : açucim.

2 So M. L[3]; Minaev has : rakṣitam.—There is no commentary on this line.

3 I prefer the reading of L[3], M. ; but Minaev has : "° karaṇatvam tan......" and Tib. : bkol-bar bya-ba nyid-du zad. = karmopakaraṇatve eva.—See P. W. sub voc. K°.

4 Tib. has :...sbyar-bar-bya yin-pas na mkho-bas ni chags-par-byao se-na / de-lta mod kyi / hdi-la...=...yujyate, upayuktatvād eva āsaṅgaḥ kāryaḥ / naivam / nātra abhiniveçaḥ.......

5 Bhavato (?), not translated in Tib.

न स्थास्यतीति भृत्याय न वस्त्रादि प्रदीयते ।
कायो यास्यति खादित्वा कस्मात्त्वं कुरुषे व्ययं ॥ ६८

यदि नाम भृत्यकर्मकरणं[1] । तथापि तथानवस्थायित्वभावे विचक्षणो ज्ञात्वैव प्रवर्तते । एवं प्रकृतेऽपि तद्धर्मिणि केनाभिप्रायेण हे मनस्त्वं कुरुषे व्ययमुपकरणोपचयं । तत्किं सर्वथैव 5 निरवकाशोऽयं कर्तव्यो । नेत्याह ।

दत्त्वास्मै वेतनं तस्मात्स्वार्थं कुरु मनोऽधुना ।
न हि वैतनिकोपात्तं सर्वं तस्मै प्रदीयते ॥ ६९

वेतनं कर्ममूल्यं । तावन्मात्रं दत्त्वास्मै गत्वरशरीराय कर्मोपकरणत्वात् । स्वप्रयोजनमनुविधेयं हे मनः । अनेनैवोपार्जितं 10 कस्मादस्मै न दीयत इति चेत् । न हि यस्माद्यत्किंचित्कर्मकरेणोपात्तं तस्मै कर्मकराय प्रदीयत इति न्यायोऽस्ति । तस्मादेवमुपस्तम्भमात्रं दत्त्वा ।

काये नौबुद्धिमाधाय गत्यागमननिश्रयात्[2] ।
यथाकामंगमं कायं कुरु सत्त्वार्थसिद्धये ॥ ७० 15

काये नौबुद्धिं कृत्वा प्रवृत्तिनिवृत्तिहेतोः । इच्छायत्तं कायं

---

[1] Tib. : bhṛtyādi°.

[2] Cp. Pāli : nissāya, nissayo.—Tib. rten-tsam-du.—The simile of the ship is a classic one, see *Çikṣās.* 55, 8.

कुरु संभाषोत्थानाय निष्पत्तये वा ? मन इति प्रकृतमभि-
संबध्यते ॥

इति कायप्रत्य[52a]वेक्षया तत्स्वभावमुपयोगं च विचार्य
परिनिश्चितकायप्रयोजन उपसंहरन्नाह ।

5 एवं वशीकृतस्वात्मा[1] नित्यं स्मितमुखो भवेत् ।
त्यजेद्भृकुटिसंकोचं[2] पूर्वाभाषी जगत्सुहृत् ॥ ७१

उक्तनीत्या । वशीकृतः । आत्मा चित्तकायलक्षणः ।
सर्वदा प्रसन्नवदनो भवेत् । भ्रूललाटसंकोचं च प्रसादहानिकरं
त्यजेत् । पूर्वमेवासंचोदित एव परेण स्वागतादिवादैः संतोषण-
10 शीलो भवेत् । सर्वसत्त्वानामकारणबान्धवश्च ॥ इत्यपि मिथ्या-
गर्वविवर्जनाय कार्यमाह ।

सशब्दपातं सहसा न पीठादीन् विनिक्षिपेत् ।
नास्फालयेत्कपाटं च स्यान्निःशब्दरुचिः सदा ॥ ७२

सहसा त्वरितमेव निष्प्रयोजनं । हस्तदण्डादिना कपाटं च
15 नाकोटयेत् । संक्षेपतः सततं निःशब्दाभिरतिर्भवेत् ॥ क एवं
सति गुणः इत्याह ।

बको बिडालश्चौरश्च निःशब्दो निभृतश्चरन् ।
प्राप्नोत्यभिमतं कार्यमेवं नित्यं यतिश्चरेत् ॥ ७३

---

1 L², M., Dev. Buah.: °kṛtaś cātmā.
2 M. Vyut. 120, 85: apagatabhrūkuṭika. Cp. *Visuddhimagga* (P.T.S.) 17, 11.
3 Cp. *Manu* IV, 64.

सर्वे एते निःशब्दाश्चङ्क्रमाद्य विहरन्तो विवक्षितमर्थं लभन्ते । अनेनापि तथैव समाधानकारकपरिहारेण विहर्तव्यं ॥ इत्यपि शिक्षितव्यमित्याह ।

[1]परचोदनदक्षाणामनधीष्टोपकारिणाम् ।
प्रतीच्छेच्छिरसा वाक्यं सर्वशिष्यः सदा भवेत् ॥ ७४

कौकृत्यविनोदनाववादानुशासनीसमर्थानां[2] विनयादिकोविदा[नां] । अप्रार्थितहितैषिणां हितविधायकं वचनं मूर्ध्ना गृह्णीयात् । न तेषु क्वचित्तं दूषयितव्यं । नाप्यवमन्यना[3] कार्येति भावः । सर्वसत्त्वेषु गुरुगौरवधिया समाचरितव्यमिति सर्वं सर्वेभ्यः शिक्षेत् ॥ ईर्ष्यामलप्रक्षालनामाह[4] ।

सुभाषितेषु[5] सर्वेषु साधुकारमुदीरयेत् ।
पुण्यकारिणमालोक्य स्तुतिभिः संप्रहर्षयेत् ॥ ७५

परकीयगुणवर्णनवचनेषु तत्परितोषणाय साधु साधु भद्रकमिदमिति शब्दमध्याशयेनोच्चारयेत् । कुशलकर्मकारिणमपि दृष्ट्वा । साधुकृतं धन्यो [52b] भवान् कुशलकर्मकारीत्यादिभिः स्तुतिवचनैः प्रोत्साहयेत् ॥ [6]लपनाग्रहां निरस्यन्नाह ।

---

1 Burn. : parāc°.—This stanza is quoted with variants *Çikṣās.* p. 364, 11.

2 On anuçāsanī, see *supra* ad V 30, and *Samādhirāja*, 6. 4.

3 See *Çikṣās.* 9, 7.

4 Prakṣālanī. The form in ā is new.

5 New, as a synonym to varṇanā, praise.

6 *M. Vyut.* 127, 83—W. K. F. = Geklatsch = commérages = gossip ; but Khagag = Schmeichelei, flatter, adulation : better meaning so far as I see. Cp. *Çikṣās.* 268, note 4, with reference to Rāṣṭrapāla.

परोक्षं च गुणान्[1] ब्रूयादनुब्रूयाच्च तोषतः ।
स्ववर्णे भाष्यमाणे च भावयेत्तद्गुणज्ञतां ॥ ७६

परगुणान् सद्भूतानपि परोक्षं ब्रूयाच्च समक्षं । अन्यथा ज्ञापनां कश्चिन्मन्येत । परेण तु तत्समक्षमन्यस्य गुणे भाष्यमाणे
5 तदनुवादकतया[2] समक्षमपि ब्रूयात् । अन्यथा नास्य रुचिरमेति मत्वा स्वचित्तं प्रदूषयेत्परः । स्वगुणे पुनः केन चिद्गुणपक्षपातिना प्रसङ्गेन समक्षं परोक्षं च कीर्त्यमाने । चित्तस्योन्नतिं निवारयंस्तस्यैव गुणाभिधायकस्य गुणानुरागितां मनसि कुर्यात् ॥
परगुणामर्षणं वारयन्नाह ।

10 सर्वारम्भा हि तुष्ट्यर्थाः[3] सा वित्तैरपि दुर्लभा ।
भोक्ष्ये[4] तुष्टिसुखं तस्मात्परश्रमकृतैर्गुणैः ॥ ७७

सर्वेषां हीनमध्योत्कृष्टानां सत्त्वानां । सर्वे वा । उपक्रमाः । दुःखपरिहारेण तुष्ट्यर्थाः । सर्वारम्भपरिश्रमेण तुष्टिरेवोत्पादयितव्येत्यर्थः । सा च तुष्टिर्धनविसर्गैरपि दुर्लभा । स्याद्वा न
15 वेति । इह पुनरयत्नसिद्धोपस्थिता कस्मात्परिहीयत इति मत्वा भोक्ष्ये अनुभविष्यामि संतोषसुखं । अन्ययत्ननिष्पादितैर्गुणैरुपनामितं । न हि प्रियपुत्रगुणैरक्षमा युक्ता । इति भावनया परगुणश्रवणाच्चित्तकार्कश्यमपकुर्यात् ॥ अत्रैवोपचयमाह ।

---

1 So M., L[3], Burn., Dev.; Minaev: guṇam; Tib. has no plural-sign.

2 The abstract in °tā is new ..The meaning given in P. W. is too narrow. See Apte: anuvādaka = conformable to, in harmony with.

3 Minaev: tuṣṭyarthā, L[1], M.: °rthāḥ.

4 So M., L[3], Burn.; Minaev: bhokṣya°.

**न चाप मे व्ययः कश्चित्परत्र च महत्सुखं ।**
**अप्रीतिदुःखं द्वेषैस्तु महद्दुःखं परत्र च ॥ ७८**

नैवास्मिन्नर्थं प्रवृत्तिमतो मम । इहलोके वा । उपचय-
क्षेपोऽपि संभवति । उपचयः पुनर्विद्यत एवेति दर्शयति ।
परत्र च महत्सुखं परगुणाभिनन्दनात् ॥ एवमक्रियमाणे पुन- 5
रपचयो दृश्यते । उभयलोकेऽपि दुःखं परगुणासहनात् ॥
तस्मात्सर्वकल्मषप[53a]रित्यागेनेयमुचिता कर्मकारिता शिक्ष-
णीयेत्याह ।

**विश्वस्तविन्यस्तपदं विस्पष्टार्थं मनोरमं ।**
**श्रुतिसौख्यं कृपामूलं मृदुमन्दस्वरं वदेत् ॥ ७९** 10

सर्वावद्यविनिर्मुक्तत्वाद्विश्वस्तं[1] । आनुपूर्व्या व्यवस्थितपदं ।
असंदिग्धार्थं । मनःप्रह्लादनकरं । श्रवणाप्यायकं[2] । करुणारस-
निष्यन्दभूतं[3] न रागादिनिदानं । मृदुस्वरमकर्कशवचनं । [4]मन्द-
स्वरं । यावता ध्वनिना प्रतिपाद्यस्य प्रतीतिः स्यात् । न ततो
न्यूनं नातिरिक्तं उदीरयन् । 15

**ऋजु पश्येत्सदा सत्त्वांश्चक्षुषा संपिबन्निव ।**
**एतानेव समाश्रित्य बुद्धत्वं मे भविष्यति ॥ ८०**[5]

---

1 Viçvasta = yid-phebs.—phebs-par smra-ba = "höflich und verbindlich sprechen." (Schmidt).

2 Āpyāyaka, not in P. W., but Kādambarī : ghrāṇāpyāyaka (Kern).

3 Niṣyanda (pâli : nissanda), cp. Senart, *Mhv.* II, 546, *Çikṣās.* 138, 11, 181, 10.—Tib. has : ... roi rgyu-mthun-pa-las byuṅ-ba.

4 *M. Vyut.* 126, 19 : mandabhāṣyo bhavati.

5 Cp. *infra*, VI, 48, 112 and foll.

एवमक्षुभितं परमप्रीतिरसभरावनतेन चक्षुषा पिबन्निव पीतमधुरं परमाह्लादकरं स्निग्धमिव पश्यन् सत्त्वलोकम् । न रक्तेन न दुष्टेन न मुग्धेन । परमोपकारका ह्येते । अतः यस्मादेतान् सत्त्वान् समासाद्य दुर्लभलाभं बुद्धत्वं मे भविष्यति ।

5 उत्पत्स्यते । एवं च विहरन् । [1]अचपलोऽपि सत्त्वार्थसमर्थो भवत्येव । यदुक्तं ।

सर्वत्राचपलो मन्दस्मितस्निग्धाभिभाषणात् ।

आवर्जयेज्जनं भव्यमादेयश्चापि जायते ॥ इति[2] ।

एतदेव च बोधिसत्त्वस्य कृत्यं यदुत सत्त्वावर्जनं नाम[3] । यथा

10 धर्मसंगीतिसूत्रे आर्यप्रियदर्शनेन बोधिसत्त्वेन परिदीपितं । तथा तथा भगवन् बोधिसत्त्वेन प्रतिपत्तव्यं यथास्य दर्शनेन सत्त्वाः प्रसीदेयुः । तत्कस्माद्धेतोः । न भगवन् बोधिसत्त्वस्यान्यत्करणीयमन्यत्र [सत्त्वावर्जनात्] । सत्त्वपरिपाक एव इयं भगवन् बोधिसत्त्वस्य धर्मसंगीतिरिति ।

15 एवमक्रियमाणे को दोष इति चेत्[4] ।

अनादेयं[5] तु तं लोकः परिभूय जिनाङ्कुरं[6] ।

भस्मच्छन्नं यथा वह्निं पच्येत नरकादिषु[1] ॥ इति[2] ।

---

1-1 From Çikṣās. 124, 9-11, with some variants: sattvārthakṣamo bhavaty eva, prasādakaratvāt / katham / sarvatra...The Ms. of the Çikṣās. has in margin the following glosses: vinā smṛtisaṁprajanyatām, and idānīm.

2 The two stanzas are the 10th and 11th of the *Çikṣāsamuccayakārikās*, see BENDALL's Introduction and *supra* note *ad* IV, 48.

3 nāma is wanting in *Çikṣās*.

4 *Çikṣās*. : evaṁ punar...doṣa ity āha.

5 ādeya (gzuṅ-os), anādeya; the present use of this word seems new. See SENART, *Mhv*. I, 580, on "ādeyavacana."

6 = buddhāṅkura (*Çikṣās*. 159, 21) = bodhisattva.

तस्मात्सत्त्वाराधन[53b]मेव बोधिसत्त्वस्य कर्म । उपकारिषु च साधारणं पुण्यप्रसूतिहेतुरिति ॥ तत्प्रसङ्गेनान्यदपि दर्शयन्नाह ।

सातत्याभिनिवेशोत्थं प्रतिपक्षोत्थमेव[1] च ।
गुणोपकारिक्षेत्रे च दुःखिते च[2] महच्छुभं ॥ ८१ 5

समादानेन[3] क्रियमाणं । अभिनिवेशोत्थं तीव्रप्रसादजनितं । प्रतिपक्षोत्थं । क्लेशप्रतिपक्षशून्यतादिभावनाप्रसूतं । गुणक्षेत्रं[4] बुद्धबोधिसत्त्वादि । उपकारिक्षेत्रं मातापितादि । दुःखिता ग्लानादयः । एतेषु स्वल्पमपि कृतमप्रमेयशुभहेतुरुपजायते ॥

इदमपि बोधिसत्त्वेनाभ्यसनीयं । इत्याह । 10

दक्ष उत्थानसंपन्नः स्वयंकारी सदा भवेत् ।
नावकाशः प्रदातव्यः कस्यचित्सर्वकर्मसु ॥ ८२[5]

---

[1] Minaev and Text Mss.: pratipakṣārtham. Our Ms. has: pratipakṣortham with *r* erased. The gloss: °prasūtam and Tib. "bslaṅ" are decisive.—The technical meaning of "pratipakṣa" (See V, 54; *Çikṣās.*, 209, 5) was unknown to the copyists; and the "adversaries" are wrongly assimilated to the benefactors, etc.—Min. has: eva vā.—Tib. has: "rtag-par," as an equivalent to: sātatya° (cp. *Çikṣās.* 51, 9).

[2] So Minaev; L[3] has: duḥkhiteṣu; but no plural-sign in Tib.—See Comm.

[3] See *Mhv.*, s. voc.: samādāna, samādāya; and *supra*, p. 36, n 1.—Tib. has, "yid-dam-du byas-pa," as an epithet to tīvraprasāda.—As there is in Nep. Ms. a mark above the line, I should conjecture that the correct reading is: abhiniveçottham / samādānena kriyamāṇa°.

[4] Cp. *infra*, VI, 112 and foll.

[5] Cp. Chap. VII, and *M. Vyut.* 126, ग-ङ.

18

दृढः सर्वत्र पटुप्रचारः। उत्थानसंपन्नः कौसीद्यापनयना- द्वीर्यसमन्वागतः। अत एव स्वयमेव सर्वं करणीयं। न परा- पेक्षा क्वचिदपि कर्मणि कार्या। इदमेव नावकाश इत्यादिना दर्शयति॥

5 पारमिताभ्यासेऽनर्थविवर्जनायानुपूर्वकारितामाह।

**उत्तरोत्तरतः श्रेष्ठा दानपारमितादयः।**
**नेतरार्थं त्यजेच्छ्रेष्ठामन्यत्राचारसेतुतः॥ ८३[1]**

उपर्युपरितः। दानाच्छीलं श्रेष्ठं। शीलात्क्षान्तिरित्यादयः। अतोऽवरपारमिताहेतोरुत्तरं न त्यजेत्। तद्विरोधेन न सेवेतेति 10 भावः॥ किं सर्वथा नेत्याह। अन्यत्रेति। बोधिसत्त्वानां य आचारः शिक्षासंवरलक्षणः स एव कुशलजलरक्षणाय सेतुबन्धो विहितः। तस्मादन्यत्र तं विहाय। स यथा न भिद्यत इत्यर्थः।

तस्मात्संभारमुपादित्सुना करुणापरतन्त्रेण सर्वं करणीय- 15 मुक्तमित्याह।

**एवं बुद्ध्वा परार्थेषु भवेत्सततमुत्थितः।**
**निषिद्धमप्यनुज्ञातं कृपालोरर्थदर्शिनः॥ ८४**

एवमनुत्तरं ज्ञात्वा सत्त्वानां हितसुखविधानाय नित्य- मारब्धवीर्यो भवेत्। प्रतिषिद्धार्थे प्रवृत्तौ [54a] कथं न साप-

---

1 See *supra ad* V, 42.

लिक इति चेत्। न[1]। न किंचिदपि सत्त्वार्थविरोधं प्रज्ञाचक्षुषा पश्यतः करणीयमनुज्ञातं भगवता। निःसरणं[2] च भगवतः शासनं। तत्रापि न सर्वस्य। अपि तु कृपालोः करुणाप्रकर्षप्रभावितया तत्परतन्त्रस्य परार्थैकरसस्य। कामभोग-विमुखस्य। इति प्रज्ञाकरुणाभ्यामुद्भूतपरार्थस्योपायकुशलस्य[3] प्रवर्तमानस्य नापत्तिः।

अत्र चोपालिपरिपृच्छायामापत्त्यनापत्तिविभागो वेदितव्यः[4]। तथोपायकौशल्यसूत्रे ज्योतिष्माणवकाधिकारे[5] ॥

एषा रक्षात्मभावस्य भैषज्यवसनादिभिः।[6]

इत्येतत्प्रतिपादयितुमाह।

विनिपातगतानाथव्रतस्थान् संविभज्य च।
भुञ्जीत मध्यमां मात्रां त्रिचीवरबहिस्त्यजेत् ॥ ८५[7]

भैषज्यवसनादिभिरात्मभावो हि परिपालनीयः परार्थोपयोगित्वात्। यथोक्तं प्राक्[8]। तत्र द्विविधं भैषज्यं सततभैषज्यं

---

1 Wanting in Tib.

2 See *Mhv.* I, 433; *infra*, *ad* IX, 106 (339, $_{6}$). Tib. has: ṅes-par hbyuṅ-ba = niḥsaraṇa.

3 See the important definition (Ke punar upāyakuçalāḥ), *Çikṣās.* 165, $_{2-4}$, where the mutual connexion of Prajñā with Kṛpā is clearly elucidated.

4 See *infra ad* V, 98. On this book, see the notes of Bendall, 164 (3) and Add. Note on 178, $_{9}$. The fragments referred to are quoted 164, $_{8}$. 168, $_{15}$.

5 Cp. *Çikṣās.* 167, $_{3}$: jyotirmāṇavakam...adhikṛtya. ;—Tib. illegible: bram-zei khyeu......

6 *Ibid.* 127, $_{3}$, $_{14}$, 138, $_{14}$, 143, —The 13th Kārikā, first part.—Cp. *supra* note ad IV, 48, V, $_{1}$, V. 24.

7 Cp. *M Vyut.* 126, $_{23-25}$.

8 *Supra* V, 69.

ग्लान[प्रत्यय]भैषज्यं च[1]। तत्र सततभैषज्यमोदनादि। तदर्थं
पिण्डाय गोचरे चरता ग्रामप्रवेशे यथोक्तशिक्षायां स्मृति-
माधाय चरितव्यं। ततो लब्धात्पिण्डपातात्। चतुर्थभाग-
विभक्तात्। विनिपातगतानाथग्रस्तान् संविभागिनः कुर्यात्[2]।
5 एकं प्रत्यंशं विनिपातितानां। द्वितीयमनाथानां। तृतीयं सब्रह्म-
चारिणां दत्त्वा चतुर्थमात्मना परिभुञ्जीत। स परिभुञ्जानो
न रक्तः परिभुङ्क्ते। असक्तो। अगृद्धो। अनध्यवसितः। अन्यत्र
यावदेवास्य कायस्य स्थितये यापनायै॥ मध्यमां मात्रां।
तथा च परिभुङ्क्ते यथा नातिसंलिखितो[3] भवति। नातिगुरु-
10 कायः। तत्कस्य हेतोः। अतिसंलिखितो हि [54b] कुशलप-
क्षपराङ्मुखो भवति। अतिगुरुकायो मिद्धावष्टब्धो भवति।
तेन तं पिण्डपातं परिभुज्य कुशलपक्षाभिमुखेन भवितव्यं।
इत्यार्यरत्नमेघे ऽभिहितं[3]।

आर्यरत्नराशावपि[4]। परिभुञ्जता चैवं मनसिकार उत्पादयि-
15 तव्यः। सन्त्यस्मिन् काये ऽशीतिकृमिकुलसहस्राणि। तान्य-
नेनैवौजसा सुखं विहरन्तु[5]। इदानीं चैषामामिषेण संग्रहं

---

1 *Çikṣās.* 127, 14-15; 131, 13. 135, 8.—"pratyaya" is wanting in our Ms. So *infra* (141, 18) Tib.: na-bai gsol sman-no.

2 From *Çikṣās.* 127, 15—128, 2; with some variants at the beginning: pratyaṁça (bgo-skal), ekaṁ sabrahmacāriṇām, dvitīyaṁ duḥkhitānām, tṛtīyaṁ vinipatitānām.

3 See the note of BENDALL, 127, 9. (= kṛça, cp. CHILDERS s.v. sallekhiyam).

4 *Çikṣās.* 129, 7-9.

5 *Ibid.*: sukhaṁ phāsuṁ viharantu. See note of BENDALL.

करिष्यामि । बोधिप्राप्तश्च पुनर्धर्मेण संग्रहं करिष्यामीति विस्तरः ।

पुनरप्युक्तं[1] । द्वयोरहं काश्यप श्रद्धादेयमनुजानामि । कतमयोर्द्वयोः । युक्तस्य मुक्तस्य चेति[1] । [2]अनया दिशा सर्वपरिभोगाः सत्त्वार्थमधिष्ठातव्याः । अन्यथा । 5

आत्मतृष्णोपभोगात्तु क्लिष्टापत्तिः प्रजायते[3] । इति

यथोक्तं चन्द्रप्रदीपसूत्रे ।

ते भोजनं स्वादुरसं प्रणीतं
लब्ध्वा च भुञ्जन्ति अयुक्तयोगाः ।
तेषां स आहार वधाय भोती 10
यथ हस्तिपोतान विषा अधौतकाः[4] ॥ इति[2]

विस्तरेण चैतच्छिक्षासमुच्चये द्रष्टव्यं ।

ग्लानभैषज्यं तु यामिकं साप्ताहिकं यावज्जीविकमिति त्रिविधं । एतच्च भिक्षुविनये प्रतिपादितं । तच्चैवावधार्यं[5] ।

वसनादिभिरात्मरक्षामाह । त्रिचीवरवद्विसृजेत् इति ॥ 15

---

1.1 *Çikṣās.* 138, 2 —Yukta = ldan-pa.

2.2 *Çikṣās.* 137, 9-16

3 Ms. upabhogāt / takli° Cp. *Çikṣās.* 143, 8—See note ad IV, 48.—The 13th Kārikā, second part.

4 The Ms. of the Çikṣās has: viṣā adhautakā.—The Tib pad-rtsa (padma—kanda) = bisa.—*M. Vyut.* 241.1—vadhāya = dug tu = viṣaya.

Candrapradīpa = Samādhirāja. See Ch. IX., ad fin. = R. As. S. Hodgson 4, fol. 37b2. This Ms. also reads: *bisā adhautakā.* The Calcutta edit. (32. 6) prints here mere gibberish. (C. Bendall).

5 See Çikṣās. p. 135 9, (*Çrāvakavinaya*)—and the *Bhikṣuprakīrṇaka* quoted p. 154, 17.

सचेदागत्य कश्चिद्बोधिसत्त्वं पात्रचीवरं याचेत । तेनातित्यागो[1]
न कर्तव्यः । किं तु यत्तदनुज्ञातं भगवता । त्रिचीवरं श्रमण-
कल्पः[2] । ततोऽतिरिक्तं च यद्भवेत्तद्दातव्यमर्थिने । अन्यथा ।
[3]उक्तं च बोधिसत्त्वप्रातिमोक्षे । सचेत्पुनः कश्चिदागत्य पात्रं वा
5 चीवरं वा याचेत [ 55a ] सचेत्तस्यातिरिक्तं भवेद्बुद्धानुज्ञातात्त्रि-
चीवरात् । यथा परित्यक्तं दातव्यं । सचेत्पुनस्तस्य कृतं[4] त्रिची-
वरं भवेत् । यन्निश्रित्य ब्रह्मचर्यावासः[5] । तन्न परित्यक्तव्यं ।
तत्कस्य हेतोः । अविसर्जनीयं हि त्रिचीवरमुक्तं तथागतेन ।
सचेच्छारिपुत्र बोधिसत्त्वस्त्रिचीवरं परित्यज्य याचनकगुरुको[6]
10 भवेत् । [7]न तेनाल्पेच्छता आसेविता भवेत्[8] । इति ॥ अति-
त्यागं निषेधयन् पुनरात्मरक्षामुपदर्शयन्नाह ।

**सद्धर्मसेवकं कायमितरार्थं[8] न पीडयेत् ।**
**एवमेव हि सत्त्वानामाशामाशु प्रपूरयेत् ॥ ८६**

सतां सत्पुरुषाणां बोधिसत्त्वानां धर्मः । लौकिकलोकोत्तर-
15 परहितसुखविधानं । तत्सेवकं कायं । अल्पार्थनिमित्तं न

---

1 Atityāga, new word.
2 Cp. Minaev, *Recherches*, 178, n. 3.
3.3 *Çikṣās*. 144, 17—145, 3—The following *infra* ad V, 87.
4 *Ibid.* : cīvaram.
5 *Ibid.* : °caryavāsaḥ.
6 °guruko bhavet = gtso-bor byed – na.
7 Negation wanting in Tib.
8 For the actual meaning of itara, see Comm. and Tib. : phran-thsogs ched du gnod mi bya. = kiṃcidartham, kṣudrakārtham (according to Bilingual Voc. Some compound of mita (mitārthārtham) seems probable.

पीडयेत्। अन्यथा महतोऽर्थराशेर्हानिः स्यात्। अत एव पूर्वस्मिन् हेतुपदमेतत्। कुतः पुनरेवं। यस्मादनेनैव सुकुमारोपक्रमेण संवर्धमानः शीघ्रमेव सत्त्वानां हितसुखसंपादनसमर्थो भवति॥ अत एवं। तस्मात्।

त्यजेन्न जीवितं तस्मादशुद्धे करुणाशये। 5

तुल्याशये तु तत्त्याज्यमित्थं न परिहीयते॥ ८७

स्वशरीरशिरोदानादि न कर्तव्यमिति निषिद्धं। कदा। अशुद्धे मित्रामित्रेतरसर्वव्यसनिजनसाधारणप्रवृत्ते[1] कृपाचित्ते[2]। अत्यारम्भेण[3] हि वीर्येण स्वपरहितार्थस्य बाधा स्यात्। समप्रवृत्ते पुनराशये स्वपरात्मनोऽतिरिक्ते वा न निषिध्यते। 10

यदुक्तं[4]। तथा स्वपरबोधिपक्षश्रुताद्यन्तरायकरौ त्यागात्यागौ न कार्यौ। अधिकसत्त्वार्थशक्तेस्तुल्यशक्तेर्वा बोधिसत्त्वस्याधिककुशलान्तरायकरौ त्यागात्यागौ न कार्याविति सिद्धं भवति।

इदमेव च संधाय बोधिसत्त्वप्रातिमोक्षे ऽभिहितं। यस्तु खलु 15 पुनः शारिपुत्राभिनिष्क्रान्त[55b]गृहावासो बोधिसत्त्वो बोध्यर्थैरभियुक्तस्तेन कथं दानं दातव्यं। कतरं दानं दातव्यं। किय-

---

1 Ms. °janāsādhāraṇa. ; the ā being erased.—vyasanin = phons-pa = poor, needy.

2 Ms. has : kṛpācintā ; but no sign of interpunction.

3 See the definition of the sāṁtatyavīrya, *Çikṣās.* 51, 9.

4 *Çikṣās.* 144. 6–17.—The following *supra* (V, 85) 142, 3.

द्रूपं दानं दातव्यं ॥ पेयालं ॥ धर्मदानपतिना[1] भवितव्यं । यश्च
शारिपुत्र गृही बोधिसत्त्वो गङ्गानदीवालिकासमानि बुद्ध-
क्षेत्राणि सप्तरत्नपरिपूर्णानि[2] तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो
दानं दद्यात् । यश्च शारिपुत्र प्रव्रज्यापर्यापन्नो बोधिसत्त्व एकां
5 चतुष्पदिकां गाथां प्रकाशयेत् । अयमेव ततो बहुतरं पुण्यं
प्रसवति । न शारिपुत्र तथागतेन प्रव्रजितस्यामिषदानमनु-
ज्ञातं ॥ पेयालं ॥ यस्य[3] पुनः शारिपुत्र पात्रागतः पात्रपर्या-
पन्नो लाभो भवेद्धार्मिको धर्मलब्धः । तेन साधारणभोगिना
भवितव्यं सार्धं सब्रह्मचारिभिरिति[4] ।

10 तथैवाह । [5]यस्तु खलु पुनः शारिपुत्रानभिनिष्क्रान्तगृहा-
वासो बोधिसत्त्वः । तेन धर्मं पर्येषितव्यः । तत्र तेनाभियुक्तेन
भवितव्यमिति ॥ अन्यथा लोकसत्त्वार्थसंग्रहार्थं महतः सत्त्व-
राशेस्तस्य च सत्त्वस्य बोधिसत्त्वाशयपरिकर्मान्तरायान्महतो ऽर्थस्य
हानिः कृता स्यादिति[5] ॥

15 अनेनोपायकौशलेन विहरन् बोधिमार्गात्परिभ्रश्यते ॥
अयमभिप्रायः[6] । इतः पूर्वमेवानेनात्मभावः सर्वसत्त्वेभ्यः । केवल-

---

1 *Çikṣās.* and Tib. add: dharmadānapatinā.

2 *Ibid.*: ° pratipūrṇāni kṛtvā.

3 Ms.: yaç ca punaḥ...*Çikṣās.*: yasya khalu punaḥ...

4 Ends the quotation *Çikṣās.* 144, 17.

5.5 *Ibid.* 145, 3-8.—Follows the quotation ad V, 85.

6 Cp. *Çikṣās.* 51, 11.—The whole of this theory (atityāga) is summarized in the following line: sukṛtārambhiṇā bhavyaṁ mātrajñena ca sarvataḥ (148, 19. See 51, 7 and foll.) Kārikā 14 of the Çi°—Contrast the doctrine of the Dhammapada (166, 224) which is rather self-centred.

यायिना मार्गयायिने । नाग्रगामिने पृष्ठगामिना । नाध्वव-
ष्कारपुरुषायेत्यादयो ऽपि द्रष्टव्या इति[1] ।

इदमप्यनर्थविवर्जनाय[2] मूलापत्तिकारणमकरणीयमित्याह ।

**गम्भीरोदारमल्पेषु न स्त्रीषु पुरुषं विना ।**

5 गम्भीरो दुर्मेधसामगाधत्वात् । उदारश्च प्रकर्षपर्यन्तत्वात् । तादृशं च धर्ममल्पेषु असंस्कृतबुद्धिषु हीनाधिमुक्तिषु वा न वदेदिति प्रकृतेन संबन्धः ॥ न मातृग्रामस्यैकाकी रहोगतो धर्मं वदेत् । वदन् सापत्तिको भवति । न दोषः पुरुषो यदि स्यात् ।

10 **हीनोत्कृष्टेषु धर्मेषु समं गौरवमाचरेत् ॥ ८९**

श्रावकयानभाषितेषु वा महायानभाषितेषु वा धर्मेषु तुल्यं चित्तप्रसादादिकं कुर्यात् । अन्यथा सद्धर्मप्रतिक्षेपः स्यात्[3] ।

**नोदारधर्मपात्रं च हीने धर्मे नियोजयेत् ।**
**न चाचारं परित्यज्य सूत्रमन्त्रैः प्रलोभयेत्[4] ॥ ९०**

15 गम्भीरोदारधर्मभाजनं च सत्त्वं निमित्तैर्ज्ञात्वा न श्रावकयानादिधर्मेऽवतारयेत् । न चाचारं शिक्षासंवरकरणीयतां

---

1 See *M. Vyut.* 263, 78, 79, 80, 82, 81—some variants occur.

2 Ms. : visarjanāya.

3 Cp. MINAEV, *Recherches*, pp. 22, 23.

4 Tib. hdrid = to deceive, to cheat.

मुक्त्वा सूत्रान्तादिपाठेनैव तव शुद्धिर्भविष्यति । इति धर्मकामं प्रभावयेत् ॥

आह चात्र[1] । पुनरपरो ऽनर्थो रत्नकूटे दृष्टः । [56b] अपरिपाचितेषु सत्त्वेषु विश्वासो बोधिसत्त्वस्खलितं[2] । अभाजनीभूतेषु सत्त्वेषूदारबुद्धधर्मप्रकाशना[3] बोधिसत्त्वस्खलितं । उदाराधिमुक्तिकेषु सत्त्वेषु हीनयानप्रकाशना[3] बोधिसत्त्वस्खलितमिति ॥

आर्यसर्वधर्मवैपुल्यसंग्रहसूत्रे ऽप्यनर्थ उक्तः । सूक्ष्मं हि मञ्जुश्रीः सद्धर्मप्रतिक्षेपकर्मावरणं । यो हि कश्चिन्मञ्जुश्रीस्तथागतभाषिते धर्मे कस्मिंश्चित् शोभनसंज्ञां करोति । क्वचिद् अशोभनसंज्ञां । स सद्धर्मं प्रतिक्षिपति । तेन सद्धर्मं प्रतिक्षिपता[5] तथागतो ऽभ्याख्यातो भवति । संघो ऽपवदितो भवति । य एवं वदति । इदं युक्तमिदमयुक्तमिति विस्तरः ॥

[6]आर्याकाशगर्भसूत्रे च मूलापत्तिप्रस्तावे चोक्तं । पुनरपरमादिकर्मिको बोधिसत्त्वः [7]केषांचिदेवं वक्ष्यति । किं भोः

---

1 The author, Çāntideva, in his Çikṣās. 54, 11.

2 Çikṣās. has here and infra: °tvasya skh°.

3 Çikṣās. has: °samprakāçanāt, °nā—The form in °nā is new.—Tib. has no ablative-sign.

4 So our Ms.; Tib. has: °saṁgrahe'pi sūkṣmo..., Çikṣās. 95 11-14. with the *easier* reading: saṁgrahasūtre 'py anartha...

5 Çikṣās.: °dharmaṁ pratikṣipatā.

6 *Ibid.* 61, 10—14; Minaev, *Recherches*, p. 22.—Cp. *infra ad* V 103—but see Çikṣās. 172, 10 and foll....

7 Çikṣas.: kasya cid (better).

प्रातिमोक्षविनयेन प्रोक्तेन परिचितेन । प्रोक्तं ममानुशासना
सम्यक्संबोधौ चित्तमुत्पादयस्व । यथाख्यानं पठ । यत्ते किं
चित्ताप्यवाङ्मनोभिः क्लेशप्रत्ययादकुशलं कर्म समुदानीतं तेन
ते शुद्धिर्भविष्यत्यविपाकं[1] । यावद्यथा पूर्वोक्तं । इयमादिकर्मि-
5 कस्य बोधिसत्त्वस्य तृतीया मूलापत्तिरिति ॥

यत इदमपि प्रातिमोक्षनिषिद्धं नाचरणीयमित्याह ।

दन्तकाष्ठस्य खेटस्य विसर्जनमपावृतं ।
नेष्टं जले स्थले भोग्ये मूत्रादेश्चापि गर्हितं ॥ ९१[2]

खेटस्य श्लेष्मणो विसर्जनमपावृतं न कुर्यात् । जले स्थले
10 भोग्ये[3] उपभोग्ये मूत्रपुरीषादेरपि कुत्सितं । यथापि देवता-
पध्यानादपुण्यं प्रसवेत् ।

मुखपूरं[4] न भुञ्जीत सशब्दं प्रसृताननं ।
प्रलम्बपादं नासीत न बाहू मर्दयेत्समं ॥ ९२[5]

मुखं पूरितं कृत्वा भक्ष्यकवलग्रहणात् [57ᵃ] । सशब्दं चुक-

---

[1] Corrected by a second hand: bhaviṣyatityapi pāṭhaḥ.

[2] Cp. *Çikṣās.* 125, 5, and the note referring to BEAL, *Catena*, p. 236.—*M. Vyut.* 263, 108 and foll.; *Prātimokṣa* (ed. MIN.) p. 23, 13-14; *Manu*, IV, 45.

[3] According to Tib. bhogya, epithet of jala-sthala; sthala = than;—Cp. the "saharita pradeça" of *M. Vyut.* 263, 105.

[4] This compound is new; Cp. udarapūram, etc.—BENDALL, 125, n. 5.

[5] Quoted in *Çikṣās.* 125, 11: "This precept (pralambapādaṁ nāsīta) which has no parallel in the Prātimokṣas...illustrates a familiar posture for...laymen found in Buddhist art.. (FERGUSSON, *Tree and Serpent Worship*, p. 193)." (C.B.) One may add reference to I-TSING, p. 122, last line: "On sitting down, one's feet touch the ground."—Foucher, *Iconographie*, 67, n. 5.

घुण्टिकादिशब्देन[1] । दूरं विकासितमुखं । प्रसन्नपादं भुज्यामवस्था-
पादं बह्वाधारोपणे सति नासीत । द्वावपि बाहू समनेकस्मिन्
काले न मर्दयेत्[2] । क्रममर्दने न दोषः । सति प्रत्यये[3] ॥

नैकयान्यस्त्रिया कुर्याद्यानं शयनमासनं[4] ।

एकया अद्वितीयया अन्यस्त्रिया । गृहिप्रव्रजितयोरिद- 5
मिह साधारणमित्यन्यग्रहणं । न कुर्याद्यानादि ॥ संक्षेपेण
संकलय्य दर्शयन्नाह ।

लोकाप्रसादकं सर्वं दृष्ट्वा पृष्ट्वा च वर्जयेत् ॥ ९३[5]

लोकानां यदप्रसादजनकं न भवति तत्सर्वं दृष्ट्वा शास्त्रे व्यव-
हारे वा । पृष्ट्वा विज्ञान्[6] । वर्जयेत् । अनेनैतद्दर्शितं भवति । 10
दृष्टेऽपि [7]यद्दा[धा]करमेवंविधं तद्वर्जयेत् । आपत्तिर्भवतीति ।
यदुक्तं ।

[8]रत्नमेघे जिनेनोक्तस्तेन संक्षेपसंवरः ।
येनाप्रसादः सत्त्वानां तद्यत्नेन परित्यजेत्[9] ॥ इति

---

1 Tib: cag-cag-la-sogs...

2 See a cognate precept, Manu, IV, 82—mardana = gñe-ba, mñe-ba.

3 Accord. to Tib. the clause: "sati pratyaye" refers to the Com. of the following stanza.

4 Tib. : bgon-pa mal stan gnas dag tu.—Cp. *Dhammapada*, 185 : pantam sayanāsanam : secretus cubandi locus ; and ref. *in loco*.

5 Cp. *Çikṣās*. 125, 13.

6 *Vajracched*. 23. 18 (P. W.)

7 Tib, gaṅ gnod-pa byed-pai rnam-pa de-lta-bu.

8 *Çikṣās*. 124, 13.—The 12th Kārikā.

9 *Çikṣās* has : vivarjayet.

[1]यथाह । कतमे च [ते] बोधिसत्त्वसमुदाचाराः । यावदिह बोधिसत्त्वो नाध[:]स्थाने[2] विहरति । नाकाले । नाकाले भाषी भवति । नाकालज्ञो भवति । नादेशज्ञो भवति । यतोनिदानमस्यान्तिके सत्त्वा अप्रसादं प्र[ति]वेदयेयुः[3] । स सर्वसत्त्वानुरक्षया आत्मनश्च बोधिसंभारपरिपूरणार्थं सम्यगीर्यापथो[4] भवति । मृदुभाणी । मन्दभाणी । असंसर्गबहुलः । प्रविवेकाभिमुखः । सुप्रसन्नमुख इति ॥[1]

न बोधिसत्त्वेनावमन्यना[5] कस्यचिदपि कर्तव्येत्याह ।

नाङ्गुल्या कारयेत्किंचिद्दक्षिणेन तु सादरं ।
समस्तेनैव हस्तेन मार्गमप्येवमादिशेत् ॥ ९४

एकया अङ्गुल्या तर्जन्यादिकया न किंचिदुपदर्शयेत् । अपि तु समस्तेन समग्रेणैव हस्तेन । दक्षिणेन । न वामेन । मार्गमपि कथयेत् । आस्तां तावत [6]सगौरवमन्य[57ᵇ]दस्तु ॥

लोकाप्रसादनिवारणायाह ।

न बाहूत्क्षेपकं कंचिच्छब्दयेदल्पसंभ्रमे ।
अच्छटादि तु कर्तव्यमन्यथा स्यादसंवृतः ॥ ९५

---

1.1 *Çikṣâs.* 124, 15–19.

2 *Ibid.* nāsthāne; Tib. : gnas-dma-ba-na.

3 Ms : pravidaseyuh (*da* erased). Tib. : smra-ba.

4 *Çikṣâs* has : sampanneryāpatho..., probably correct as the *g* of samyag is written by a second hand in our Ms.

5 Cp. *Çikṣâs.* 9. 7, 92. 6.

6 Tib. : agauravam, fairly probable.

न भुजमुत्क्षिप्य कं चिदाह्वयेत् । अल्पप्रयोजनता एतच्चे । भवति पुनर्दोषः ॥ अच्छटादिशब्दं तु कुर्यात् । तदकरणे ऽसमाहितचारितायामसंवृतः स्यात् । एतावता औद्धत्यपरि-हारो ऽपि दर्शितो भवति ॥ [1] स हि शय्यां परिकल्पयन्नेवं परि-कल्पयेदित्युपदर्शयन्नाह ।  5

**नाथनिर्वाणशय्यावच्छयीतेप्सितया दिशा ।**
**संप्रजानँल्लघूत्थानः प्रागवश्यं नियोगतः ॥ ९६**

भगवतो महानिर्वाणशय्यामिव शय्यां परिकल्पयेत् । अभि-मतया दिशा शिरो विधाय दक्षिणेन पार्श्वेन । पादस्योपरि पादमाधाय । दक्षिणं बाहुमुपधानं[2] कृत्वा वामं च प्रसार्य ।  10 जङ्घोपरि निवेश्य । चीवरैः सुसंवृतकायः[3] । स्मृतः । संप्रजा-नानः । उत्थानसंज्ञी । आलोकसंज्ञी । शयितः । [4]नाचित्तक-मिद्धावष्टब्धः । न च निद्रासुखमास्वादयेत् । न च पार्श्वसुखं[5] अन्यत्र यावदि[वै]षां महाभूतानां स्थितये यापनायै । इति ॥ लघूत्थानः शीघ्रमेवोत्तिष्ठेत् । न तु जृम्भिकां गात्रमोटनं

---

[1] On this §, see the *Ratnamegha* quoted in *Çikṣâs*, 137, 6.

[2] Upadhāna = sṅas = cushion.—Cp. *Ādikarmapradīpa*, *Études et Mat.* pp. 203, 230, (dakṣiṇabāhu-parijapana).

[3] So Tib.—*Çikṣâs.* has : cīvaraiḥ asaṁvṛtakāyāḥ.

[4] So Ms. ; Tib. : na middhacitta.

[5] Supra pārçvá = glo-ba, here = sñes-pa.

कुर्वन्नालस्योपरतश्चिरेण । एतेऽपि [1]एव सर्वेऽपि पूर्ववत् ॥

इदमपरमभिसंचिन्त्य कथयन्नाह ।

> आचारो बोधिसत्त्वानामप्रमेय उदाहृतः ।
> चित्तशोधनमाचारं नियतं तावदाचरेत् ॥ ९७[2]

5 आचारः शिक्षणीयं । अप्रमेयो ऽसंख्येयः । बोधिसत्त्वप्रातिमोक्षादिषु प्रदर्शितः । तत्संग्रहरूपं प्रथमतः चित्तशोधनमेवाचारमाचरेत् । नियतं अवश्यंतया[3] ॥

सामान्यापत्तिशोधनमाह ।

> रात्रिं दिवं च त्रिस्कन्धं त्रिष्कालं च प्रवर्तयेत् ।
> 10 शेषापत्तिशमस्तेन बोधिचित्तजिनाश्रयात् ॥ ९८

त्रिष्कृत्वो रात्रेः । त्रिष्कृत्वो दिवसस्य । त्रिस्कन्धः[4] । त्रयाणां स्कन्धानां पापदेशनापुण्यानुमोदनाबोधिपरिणामनानां समाहारः । त्रिस्कन्धं प्रवर्तयेत् । शेषा मूलापत्त्या अन्याः । अ[58a]च वा संचिन्त्य कृता याः प्रतिज्ञाताः । ताभ्यो ऽन्याः स्मृतिसंप्रमोषेण 15 अनवधानतया वा कृताः । तासां प्रशमः प्रतिकरणं तेन त्रिस्कन्धपरिवर्तनेन[5] बोधिचित्तस्य जिनानां च भगवतां समाश्रयणाच्च ॥

एतेन विकुर्वणासमुद्राचारादयो दर्शिता भवन्ति ।

---

1 Ms. eta eva.—Tib.: de dag thams cad kyaṅ...

2 See *supra*, V, 17.

3 The abstract (if correct) is new and irregular.

4 See the note of BENDALL (*Çikṣās.* 171, 3), and *Études et Mat.* 214.

5 Hdon-pa = hersagen, vorlesen.

अभिमुखे रात्रिं दिवमेकाकिना [1]देशयितव्याः । तत्रेयं देशना । अहमेवंनामा बुद्धं शरणं गच्छामीत्यारभ्य यावत्संघं शरणं गच्छामि । नमः शाक्यमुनये तथागतायार्हते सम्यक्संबुद्धाय । नमो वज्रप्रमर्दिने[2] । इत्यारभ्य यावत् ।

5 उपैमि सर्वान् शरणं कृताञ्जलिः[3] ॥

इति विस्तरसूत्राच्च । [4]इति हि [58b] शारिपुत्र बोधिसत्त्वेनेमान् पञ्चत्रिंशतो बुद्धान् प्रमुखान् कृत्वा सर्व[5]तथागतानुगतैर्मनसिकारैः पापविशुद्धिः कार्या । तस्यैवं पापविशुद्धस्य त एव[6] बुद्धा भगवन्तो मुखान्युपदर्शयन्ति[6] । पेयालं । न तत्[7]
10 शक्यं सर्वश्रावकप्रत्येकबुद्धनिकायैरापत्तिकौकृत्यस्थानं[8] विशोधयितुं यद्बोधिसत्त्वस्तेषां बुद्धानां भगवतां नामधेयधारणपरिकीर्तनेन रात्रिं दिवं त्रिस्कन्धकधर्मपर्यायप्रवर्तनेन चापत्तिकौकृत्यान्निःसरति समाधिं च प्रतिलभते[4] ॥

एतत्साकल्येन शिक्षासमुच्चये वेदितव्यं ।

15 उक्तो विदूषणासमुदाचारः । प्रतिपक्षसमुदाचारप्रत्यापत्तिबले अपि विस्तरेण शिक्षासमुच्चयादेव द्रष्टव्ये ।

---

1 Here *Çikṣās.* has : gurvyo.

2 Ends quotation from *Çikṣās.* 196, 7.

3 *Ibid.* 170, 10.

4.4 *Ibid.* 171 1–3.

5 I prefer this reading to the : "tatra ca" of the *Çikṣās.*

6 Abridged from the *Çikṣās.*

7 "Tat" wants in the *Çikṣās.*

8 On *kaukṛtya*, Prof. BENDALL refers to *Çikṣās.* p. 148 ; Pāli kukucca ; *Mhv* III, 175, 9.

[1] आर्यमैत्रेयविमोक्षे तु बोधिचित्तेन पापविशुद्धिरुक्ता ।
तथोक्तमेव प्राक्[2] ।

जिनाश्रयात् पापविशुद्धौ सूकरिकावदानमुदाहार्यं[3] ।

ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिं ।
प्रहाय मानुषान् कायान् दिव्यान् कायान् लभन्ति ते[4] ॥ 5

एवं धर्मं संघं चाधिकृत्य पाठः[5] । अनेन चाश्रयबलमुक्तं ॥

पुनरनियमेन दर्शयन्नाह ।

या अवस्थाः प्रपद्येत स्वयं परवशोऽपि वा ।
तास्ववस्थासु याः शिक्षाः शिक्षेत्ता एव यत्नतः ॥ ९९

स्वयमात्मना परायत्तो वा सत्त्वार्थक्रियायां प्रवृत्तः ॥ किं 1
पुनरेवमनियमेनाभिधीयत इत्याह ।

न हि तद्विद्यते किं चिद्यन्न शिक्ष्यं जिनात्मजैः ।
न तदस्ति न यत्पुण्यमेवं विहरतः सतः ॥ १००

यस्मात् सर्वाकारं सर्ववस्तुतत्त्वमधिगम्य सर्वेषां हितसुख-
विधानार्थं प्रवृत्तैर्बुद्धसुतैः न तदस्ति किं चिद्यन्न शिक्षि- 15

---

[1] *Çikṣâs.* 177, 14.

[2] *Supra,* ad I, 10, 14.

[3] *Çikṣâs.* 177, 10-14.

[4] See *Âdikarmapradîpa,* p. 187 and *Divyâvadâna,* p. 195-26 (with the reading: kâyân upâsate.)—Cp. Samyutta N. I., p. 27, Sumangalavil. I., p. 233; Jâtaka, I. 9, p. 97.

[5] The *Çikṣâ* has: °kṛtya pâpakṣayaḥ. But our reading is confirmed by Tib. and *Divyâv.*

कल्याणमित्राण्युपसंक्रमितव्यानि । पृथिवीसमचित्तेन सर्वभारो-
द्वहनापरितसनतया[1] । वज्रसमचित्तेन अभेद्याशयतया । चक्र-
वाडसमचित्तेन सर्वदुःखासंप्रवेधनतया । लोकदाससमचित्तेन
सर्वकर्मसमादानाविजुगुप्सनतया । रजोहरणसमचित्तेन माना-
5 तिमानविवर्जनतया । यानसमचित्तेन गुरुभारनिर्वाहनतया ।
[2]श्वसमचित्तेन [अकुप्यनतया । नौसमचित्तेन] गमनागमना-
परितसनतया[1] । सुपुत्रसदृशेन कल्याणमित्रमुखवीक्षणतया ।
आत्मनि च ते कुलपुत्र आतुरसंज्ञोत्पादयितव्या । कल्याणमित्रे[षु]
च वैद्यसंज्ञा । अनुशासनीषु[3] भैषज्यसंज्ञा । प्रतिपत्तिषु व्याधि-
10 निर्घातनसंज्ञा । आत्मनि च ते कुलपुत्र भीरुसंज्ञोत्पादयि-
तव्या । कल्याणमित्रेषु शूरसंज्ञा । अनुशासनीषु[4] प्रहरणसंज्ञा ।
प्रतिपत्तिषु शत्रुनिर्घातनसंज्ञा ॥[5]

उक्तं । सूत्राणां च सदेक्षणादिति[6] । तदुपदर्शयितुमाह ।

एतच्चान्यच्च बुद्धोक्तं ज्ञेयं सूत्रान्तवाचनात् ॥ १० ॥

15 एतद्धि शास्त्रे प्रतिपादितं । अन्यदपि नोक्तं । बुद्धेन

---

1.1 *Çikṣās.* : sarvabhāravahana° : but our Ms. is corrected by a second hand. —*tas* (utkṣepe) *Dhātup.* 26, 103. (P. W. s. voc. ; cp tasha) *Çikṣās.* Ms. has °tasyanatayā, more probable : See notes of BENDALL, in loco and ad 25, 7 (CHILDERS paritassanā).

2 So Ms. ; but Tib. (Khyi) agrees with *Çikṣās.* Read : Çvasamacittena.

3 *Çikṣās.* Çāsanīṣu, cf. V. 30, 74.

4 So Ms.

5 Ends quotation from *Çikṣās.* 36, 4.

6 Cp. *supra* V, 1 and p. 156, n. 3.

भगवता बोधिसत्त्वानां करणीयतया निर्दिष्टं। तच्चानासूत्रा-न्तार्थपरिचयात् वेदितव्यं। एतदेव दर्शयति

**शिक्षाः सूत्रेषु दृश्यन्ते तस्मात्सूत्राणि वाचयेत्।**

शिक्षा बोधिसत्त्वानां हेयोपादेयलक्षणाः। सूत्रेषु महायान-सूत्रान्तेषु रत्नमेघादिषु[1]। य[60a]त एवं तस्मात्॥ इदं तु 4 विशेषनिर्देशमाह।

**आकाशगर्भसूत्रे च मूलापत्तीर्निरूपयेत्॥ १०४**

आर्याकाशगर्भसूत्रे क्षत्रियस्य मूर्द्धाभिषिक्तस्य पञ्च मूला-पत्तयो निर्दिष्टाः। तथा सामान्येन एका मूलापत्तिः। तथा आदिकर्मिकस्य बोधिसत्त्वस्याष्टौ मूलापत्तय इति[2]। तथा च तत्रोक्तं।[3] पञ्च कुलपुत्र क्षत्रियस्य मूर्द्धाभिषिक्तस्य मूलापत्तयः। याभिर्मूलापत्तिभिः क्षत्रियो मूर्द्धाभिषिक्तः सर्वाणि पूर्वाव-रोपितानि कुशलमूलानि झापयति[4]। वस्तुपतितः पराजितः[5] सर्वदेवमनुष्यसुखेभ्यः[6] अपायगामी भवति। कतमाः पञ्च।

---

1 *Çikṣās*. 7, 13. 17, 6, etc.; *supra* IV, 48.

2 Cp. *infra* 160, 13; *Çikṣās*. 10, 14.

3 *Çikṣās* 59, 10–15. The text has: pañca imāḥ.

4 On this word, see the note of the Editor.—Our Ms. has the easier reading: çamayati; but Tib. agrees with Çikṣās.

5 So our Ms.; and the Çikṣās-Ms. *infra*; here pārājika (see. Prātimokṣa, p. 3).

6 *Çikṣās*. has: "°mukhebhyaḥ," but cp., p. 60, 13, 61, 1 and Tib.; bde-ba.

हृत्वा ते[61a]भ्य एवोपनामयन्ति । ते च क्षत्रिया उभये ऽपि मूलापत्तिमापद्यन्ते । इयं सप्तमी ।

धर्माधर्मविवादनापूर्वं[1] भिक्षाप्रव्रजितान् तन्मूलाचारविपन्नानां सत्कारात् [2]ब्रह्मचारिणामुपभोगपरिभोगादन्यत्र परित्याजनात् । उभये ऽपि मूलापत्तिमापद्यन्ते । इयमष्टमी ।

आसां च मूलापत्तीनां सुखग्रहणार्थं आचार्योपदर्शिताः संग्रहकारिका उच्यन्ते[3] ।

रत्नत्रयस्वहरणाद् आपत्पाराजिका मता ।
सद्धर्मस्य प्रतिक्षेपाद् द्वितीया मुनिनोदिता ॥
दुःशीलस्यापि वा भिक्षोः काषायस्तेयताडनात् ।
चारके वा विनिक्षेपाद् उत्प्रव्राजनेन च ॥
पञ्चानन्तर्यकरणान् मिथ्यादृष्टिग्रहेण च ।
ग्रामादिभेदनाच्चापि मूलापत्तिर्जिनोदिता ॥
शून्यतायाश्च कथनात् सत्त्वेष्वकृतबुद्धिषु[4] ।
बुद्धत्वप्रस्थितानां तु[5] संबोधेर्विनिवर्तनात् ॥
प्रातिमोक्षं परित्य[ज्य] महायाने नियोजनात् ।
शिक्षायानं[6] न रागादिप्रहाणायेति वा ग्रहात् ॥

1 Earlier hand: vivāṭhanā°; Tib.: bslog-nas.—Çikṣās. (60, 20) has: viheṭhanā.

2 Tib.: ñams-par byed-pa rnams-kyi.

3 Çikṣās. 66, 15—67, 13.

4 Tib.: blo-sbyaṅs-ma-byas-aṣuddhikṛtabuddhiṣu.

5 Çikṣās.: vā.

6 This expression, if not new, seems to be rare;—It is, of course, the Çrāvaka-yāna opposed to the "bodhisattva°" or "mahāyāna"—See Chap. IX. 41, 45, where the theory of Çāntideva is, by no means, different.

विस्तरेण सदाचारा यस्मात्तत्र प्रदर्शितः ॥ १०५

शिक्षासमुच्चयो ऽपि सम्यगेभिरेव कृतः । अवश्यं नियमेन । द्रष्टव्यः पुनः पुनरवलोकनीय इति भावः । कुतः यस्मात् । सतां बोधिसत्त्वानां । आचरणमाचार इतिकर्तव्यता । तत्र शिक्षासमुच्चये । विस्तरेण प्रपञ्चेन । प्रदर्शितः विस्पष्टीकृत्य प्रकाशितः । तस्मात् ॥

यदि तस्याभावेऽशक्तिः । तदा

संक्षेपेणाथ वा तावत्पश्येत्सूत्रसमुच्चयं[1] ।

नानासूत्रैकदेशानां वा समुच्चयस्तेभिरेव[2] कृतं संक्षेपेण पश्येत् । व्यवलोकयेत् । [3]ग्रन्थतो ऽर्थतो वा । अत्रापि पूर्ववदेव प्रयोजनं ॥ यदि वा

आर्यनागार्जुनाबद्धं द्वितीयं च प्रयत्नतः ॥ १०६

आर्यनागार्जुनपादैर्निबद्धं द्वितीयं शिक्षासमुच्चयं [4]सूत्रसमुच्चयं च पश्येत्प्रयत्नतः आदरतः । यदिह न दृश्यते तत्तत्र दृश्यत इति भावः ॥

नियमेन शिक्षादर्शनेऽपि साकल्येन सर्वेषामुपयोगमाह ।

---

[1] Tib.: mdo-rnams-kun-las-bsdu-ba. See Tāranātha, 165, Wassiljew, p. 208. mdo-kun-bdus (Tandj. Vol. XXV).

[2] Tib. bdag-ñid-kyis;—Saṁkṣepeṇa, according to Tib., refers to kṛtam.

[3] Tib.: gzuṅ (As. Res. XX, 479; Vyutp., 17, a).

[4] Nothing as yet is known from Tib. sources about a Çikṣās. by Nāgārjuna. —See Bendall's *Introduction* to his edition of the work.—dvitīya refers to *Sūtras.*, according to Tib. and to the Text,—thus the Sūtras. by Nāgārjuna, Tandj. Mdo XXX, 165-244.

यतो निवार्यते, यत्र यच्चैव च नियुज्यते ।
तल्लोकचित्तरक्षार्थं शिक्षां दृष्ट्वा समाचरेत् ॥ १०७

यतो देशादकरणीयान्निवार्यते[1] । न करणीयमेतदिति प्रतिषिध्यते । यत्र ग्रामप्रवेशे कुलप्रवेशे वा । यच्चैव कार्यं कर्तव्यतया नियुज्यते विधीयते । तन्निषिद्धं विहितं वा । लोकानां चित्तप्रसादः । तस्य रक्षार्थं । तद्यथा विकोपितं[2] न स्यात् । शिक्षां दृष्ट्वा शिक्षासमुच्चयादिषु । प्रतिपादं समाचरेत् । यत्र यथा श्रूयते तत्र [तथा व्यव]हरेत् । [62a] [3]अन्यथार्थ-संमूढव्यवहारस्यापत्तिकता स्यात् ।

एतावता आत्मभावस्य शुद्धिराख्याता[4] । यदाह । 10

[5]आत्मभावस्य का शुद्धिः पापक्लेशविशोधनं ।
संबुद्धोक्तनुसारेण[6] यत्नाभावे त्वपायगः । इति ॥

यदुक्तं । यदा स्मृतिसंप्रजन्यचारिणा भवितव्यमिति । ततः स्मृतेः स्वनामैव स्वरूपं प्रतीतं[7] । संप्रजन्यस्य तु न ज्ञायते कीदृशमिति । तत्स्वरूपप्रतिपत्तये प्राह । 15

एतदेव समासेन संप्रजन्यस्य लक्षणं ।
यत्कायचित्तावस्थायाः प्रत्यवेक्षा मुहुर्मुहुः ॥ १०८

---

1 L³, M.: nirvāryate. (Tib.: bkag, bslog): Min. nirdhāryate.

2 New; but known from Çikṣās. (Tib.: hkhrug-pa).

3 Ms. quite illegible; but Tib.: tha-sñad-kyi don-la rmoṅs-pa-ni ltuṅ-[illegible]

4 See V, 1 where occurs "çodhana" instead of çuddhi (cp. Çikṣās. [illegible]).

5 The 19th Kārikā. See Çikṣās. 160, [illegible], and supra note ad IV, [illegible] "This line is quoted from the Çikṣās. by Dīpaṅkara (Atiça) in his Bodhi[illegible] pañjikā (Tanj. M. XXXI, 306a—C. L." BENDALL.

6 Çikṣās. has [illegible]buddhoktyarthasāreṇa. [illegible]

7 Tipp.: [illegible]

स्वकायावस्थायाश्चित्तावस्थायाश्च सर्वेर्यापथेषु प्रत्यवेक्षा निरूपणं सर्वदा यथा प्रतिपादितं प्राक् ॥ सर्वमेतदुक्तशिक्षाकौशलं कर्मणा निष्पादयितव्यं न वचनमात्रेणेति[1] निगमयितुमाह ।

**कायेनैव पठिष्यामि[2] वाक्पाठेन तु[3] किं भवेत् ।**
**चिकित्सापाठमात्रेण रोगिणः किं भविष्यति ॥ १०९**

मनःपूर्वंगमत्वात्कायव्यापारस्य । सोऽप्यनेनैव प्रतिपादितः । प्रतिपत्त्या सर्वं संपादयिष्यामि[4] । न तु शब्दमात्रघोषणया निष्फलत्वादिति बोधिसत्त्वेन यतितव्यं । कथमिव । वैद्यकशास्त्राध्ययनमात्रेण तत्क्रियामकुर्वतो व्याधितस्य किं फलं निष्पद्यते । तावन्मात्रेण रोगस्य तस्याविनिवृत्तेः । न किंचिदिति भावः । तस्मात्सर्वमेतत्क्रियानुष्ठानेन निष्पादयितव्यमिति ॥

इति प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां
पञ्चमः परिच्छेदः[5] ॥

---

1 Tipp.: sarvam etat karmaṇā saṁpādayitavyam . nādhyayanasāreṇa bhavitavyam iti.—Cp.: estote factores verbi...

2 Cp. *Dhammapada* 259: dhammaṁ kāyena passati = he observes the law in his acts, but cp. M. Muller, *in loc.* and Senart, *J. As.*, Sept. 1898, p. 216 (Ms. Dutreuil de Rhins :...dhamu kaena phaṣai)—Tib. has: lus-kyi [s] bdi-dag spyad-par-bya | tshig tsam brjod-pas...

3 Sec. *Minaev*; M.: ca.

4 Cp. *ad* I, 17: pratipattivikala, °sāra, caryāvikala.

5 So Tib.—The Mss. and Tib. translation of the Text have: saṁprajanya-rakṣaṇaḥ pañcamaḥ...; but M. has: çīlapāramitā.

## प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां

## क्षान्तिपारमिता षष्ठः परिच्छेदः ।



तदेवं बहुधा शीलविशुद्धिं प्रतिपाद्य । आत्मभावादीनां रक्षां शुद्धिं च प्रतिपाद्य । शुभविवृद्धिं प्रतिपादयितुं । यथोक्तं

क्षमेत श्रुतमेषेत संश्रयेत वनं ततः ।

समाधानाय युज्येत भावयेदशुभादि[62a]कं ॥[1]

इत्येतच्चाभिधातुमुपक्रमते सर्वमित्यादिना । 5

**सर्वमेतत्सुचरितं दानं सुगतपूजनं ।**

**कृतं[2] कल्पसहस्रैर्यत्प्रतिघः प्रतिहन्ति तत् ॥ १**

सर्वमेतदिति शीलसंवरसमादानप्रसूतं । सुचरितं कुशलं कर्म । दानं त्रिविधं[3] । सामान्येन । सुगतपूजनमपि त्रिविधं[4] । कृतं उपार्जितमनेकैः कल्पसहस्रैर्यत् । तत्सर्वं प्रतिघः क्षमाविपक्षः 10 प्रतिहन्ति निर्दहति वह्निरिव तृणसंघातं ।

---

[1] This stanza is the 20th Kārikā of the *Çikṣāsamuccayakārikā* (see Prof. Bendall's Introduction to his edition of the *Çikṣā*.) and occurs *Çikṣā*. 170, 5-10, where each part of the sentence (called "kleçaçuddher uddeçapadāni") is followed by a short commentary.

Cp the stanza, *supra* 92 *η*. (4th Kārikā).

[2] Minayev has: karma°; but L[2], M. Dev.: kalpa°, and Tib.: bskal.

[3] *Dharmasaṁgraha* CV—*Çikṣā*. Chap. XIX.

[4] So far as I know, there is no exact reference to this classification. Pūjā is said to be saptavidhā (*Dharmas*. XIV).

तत्कालमनुपायेन शमं विविनयं । पश्चात्कायवाचाप्रभृति चित्तं न प्रहीणनिवारणः । प्रागेव सवि[68a]ज्ञानके काय इति[1] ॥

अत एव चाह ।

न च द्वेषसमं पापं न च क्षान्तिसमं तपः ।[2]
तस्मात् क्षान्तिं प्रयत्नेन भावयेद्विविधैर्नयैः ॥ २

न च द्वेषेण समं पापमशुभं । पुण्याभिभवहेतुत्वात् । न च क्षान्त्या तितिक्षया समं तुल्यं तपः । सुमहत्परिभवबाधना-सहनात् । यत एवं तस्मात् । क्षान्तिं क्षमां सर्वतात्पर्येण भावये-दभ्यसेत् । विविधैर्नानाप्रकारैरुपायैर्वक्ष्यमाणैः ।

दृष्टधर्म एव द्वेषस्य दोषान् [illegible]ोपदर्शयन्नाह ।

मनः शमं[3] न गृह्णाति न प्रीतिसुखमश्नुते ।
न निद्रां न धृतिं याति द्वेषशल्ये हृदि स्थिते ॥ ३
पूजयत्यर्थमानैर्यान् येऽपि चैनं समाश्रिताः ।
तेऽप्येनं हन्तुमिच्छन्ति स्वामिनं द्वेषदुर्भगं[4] ॥ ४
सुहृदोऽप्युद्विजन्तेऽस्माद्[5] ददाति न च सेव्यते ।
संक्षेपान्नास्ति तत्किंचित्क्रोधनो येन सुस्थितः ॥ ५

---

1 Cp. *infra ad* VI, 51; *Div. Av.* 197-25; *Prajñāp.* 418.
2 Cp. *Dhammapada* 184.
3 Minaev: samam; Tib.: zi-ba = Dev. çama.
4 Cp. *Çikṣā* 265-19.
5 Cp. *Aṅguttara*, IV, p. 96: ñātimittā suhajjā ca parivajjanti kodhanaṃ.

प्रशमं प्रशमं न ऋच्छति नाश्नुते । अनुपशान्त एव सदा द्वेषानलप्रज्वलितत्वात् । न प्रीतिसुखं सौमनस्यसुखमश्नुते आप्नोति । तेनैवाक्रान्तत्वात् । न निद्रां न धृतिं चित्तसुखं लभते । कायचित्तसंतापकारिणि द्वेषशल्ये हृदयनिवासिनि ।

5 पूजयति सत्करोति लाभसत्कारैर्यान् । येऽपि चाश्रु-जीविनः । एवं द्वेषिणं स्वामिनमपकर्तुमिच्छन्ति । किमिति द्वेषदुर्भगं अप्रियमिति हेतुपदमेतत् ।

सुहृदो मित्राण्यपि । उद्विजन्ते उत्त्रस्यन्ति । अस्माद्द्वेषिणः । दानोन्मुखोऽपि भृत्यवर्गेण सेव्यते नोपगम्यते । किं बहुना ।
10 इदमिह संक्षेपेणावधार्यतां । नास्ति तदुपशमकारणं किं चिद्येन कोपनः सुखं लभेत ।

चित्तस्य कर्कशावस्था द्वेषः । तस्योद्भूतवृत्तिस्तु क्रोधः । यद्वशाद्दण्डादिग्रहणं क्रियते । इत्यनयोर्भेदेऽपि द्वयोरपि परि-हर्तव्यतया ऽभेदेनैव निर्देशः ॥

15 एवमिह दृष्टधर्मेऽपि द्वेषदोषानवगम्य तत्परित्यागाय यत्न-वता भवितव्यमित्याह ।

**एवमादीनि दुःखानि करोतीत्यरिसंज्ञया[1] ।**
**यः क्रोधं हन्ति निर्बन्धात् स सुखीह परत्र च ॥ ६**

एवं यथोक्तप्रकारेण दुःखानि जनयति [63b] यस्मात्

---

[1] Tib.: Kho-bai dgra-yis de-la-sogs sdug-bsṅal-dag ni byed-par gyur = Krodhāriṇā evamādīni duḥkhāni kriyante.

तस्मात् यः सुस्थितात्मा । निर्बन्धात् गाढाभिनिवेशात् आरब्ध-वीर्य इत्यर्थः । स सुखी इहलोके परलोके च ।

इदानीं द्वेषोपघाताय तत्कारणमुपदर्शयन् व्यवस्थां कुर्वन्नाह ।

**अनिष्टकरणाज्जातमिष्टस्य च विघातनात् ।**
**दौर्मनस्याशनं प्राप्य द्वेषो दृप्तो[1] निहन्ति मां ॥ ७ ॥**
**तस्माद्विघातयिष्यामि तस्याशनमहं रिपोः ।**

आत्मात्मीयपक्षप्रसूते इष्टानिष्टे । आत्मात्मीययोः सुख-साधनमिष्टं । तद्विपरीतमनिष्टं । इति कल्पनाकृतमेवैतत् । न तु परमार्थतः किंचिदिष्टमनिष्टं वा संभवति । तस्मात् मिथ्याभिनिवेशवासनावशात् । अनिष्टस्य करणाद् इष्टस्य चोपहननाद् दौर्मनस्यं मानसं दुःखमुपजा[य]ते । तस्मात् तत्कारिणि तद्विरोधिनि वा द्वेष उत्पद्यते । इति दौर्मनस्यमेव बलवद्भोजनं लब्ध्वा लब्धसामर्थ्यः सन् द्वेषो निहन्ति मां इति निश्चित्य तत्पुष्टिकारणं च हनिष्यामि प्रयत्नतः । तस्मिन् हते सुखमेव तस्य हननात् । समूलघातं हतस्य पुनरु-त्पादायोगाच्च ।

ननु कोऽयमत्यर्थमभिनिवेशो भवत इत्याह ।

**यस्मान्न मद्वधादन्यत्कृत्यमस्यास्ति वैरिणः ॥ ८ ॥**

---

[1] So Dev.—Minaev and his Mss.: dṛṣṭo—But Tib.: rtas-te: überflüssig, fett (Schmidt); brta-ba = dick werden; brta-byed-pa = nähren; brtas-pa = sphīta (Foucaux).—nus-pa rtas-nas = saṁbhṛtaçakti (supra ad IV, 43).

अतो यदि नाम मम शिरः छिद्यते। तथापि न क्षोभ्या न विक्षोभयितव्या मुदिता मया। मुदिता हि दौर्मनस्यप्रतिपक्षः। दुःखागमेऽपि प्रमुदितचित्तस्य दौर्मनस्यानवकाशात्। इति दौर्मनस्यनिरासाय मुदिता यत्नेन रक्षितव्या॥ कुतः। दौर्मनस्येऽपि कृते इष्टविघाते सति नास्तीष्टं। नाभिमतमिष्टं सेत्स्यति। अयं तु विशेषः स्यात्। कुशलं पुनरुपहन्यते।

[1]मुदिता चार्याक्षयमतिसूत्रे वर्णिता। तत्र कतमा मुदिता। या [बुद्ध]धर्माणामनुस्मरणात्[2] प्रीतिः प्रसादः प्रामोद्यं चित्तस्यानवलीनता अनवमृद्यता अपरितर्षणता। सर्वकामरतीनामपकर्षणात् सर्वधर्मरतीनां प्रतिष्ठानं। चित्तस्य प्रामोद्यं। कायस्यौद्बिल्यं। बुद्धेः संप्रहर्षणं। मनस उत्प्लवः। तथागतकायाभिनन्दनरतिरिति विस्तरः[1]।

किं चेदमविचारयतो दौर्मनस्यमुत्पद्यत इत्याह।

**यद्यस्त्येव प्रतीकारो दौर्मनस्येन तत्र किं[3]।**
**अथ नास्ति प्रतीकारो दौर्मनस्येन तत्र किं॥१०॥**

यदि चेष्टविघातनिवर्तनाय अनिष्टोपनिपातप्रतिषेधाय च प्रतीकार उपायान्तरमस्ति। तदा दौर्मनस्येन तत्र किं।

---

1.1 = *Çikṣās.* 183, ६-७.

2 *Çikṣās.* has: yāvad dharmāṇu°; Tib.: gaṅ saṅs-rgyas [illegible].

3 This line occurs in *Çikṣās.* 180, ८; the next one, written in margin, is necessary and is confirmed by Tib. of Çi.

तदेवानुष्ठीयतां। अथ नास्ति। तदापि दौर्मनस्येन तव किं। न किं चित्प्रयोजनं। उपायाभावात्सर्वथा[64b]गतमेतत्। इति विचार्य दौर्मनस्य निवर्तनमेव वरं॥

अभ्यासात् दुःखमबाधकं भवतीति प्रसाधयितुमुपक्रमते।

5 दुःखं[1] न्यक्कारपारुष्यमयशश्चेत्यनीप्सितं।
प्रियाणामात्मनो वापि शत्रोश्चैतद्विपर्ययात्॥ ११॥

दुःखं कायिकं मानसिकं च। इति द्विविधं। तत्र कायिकं दण्डादिघातजं। मानसिकं न्यक्कारादिनिमित्तं। तत्र न्यक्कारो धिक्कारः[2]। पारुष्यं मर्मघट्टनावचनं[3]। अयशस्त्वकीर्तिः वैगुण्य-
10 प्रकाशनं। इत्येतत्सर्वमनभिलषितं। यदि परेषां प्रियं ननु। तदर्थमाह। प्रियाणां। आत्मीयत्वेन ये स्वीकृताः प्रेमस्थानं। तेषामात्मनश्च। दुःखादिकारकस्य पुनः शत्रोरेतद्विपर्ययात्। तस्य दुःखादिकमभीष्टमेव।

तत्र दुःखासहिष्णुतां तावन्निराकर्तुमाह।

15 कथं चिल्लभ्यते सौख्यं दुःखं स्थितमयत्नतः।
दुःखेनैव च निःसारः[4] चेतस्तस्माद् दृढीभव॥ १२॥

---

1 Nyakkārapāruṣyam for metrical reasons.—Tib.: bzñas daṅ thsig-rtsub daṅ. The Khānti pāramī (*Jātaka*, I. 22, 24): sammānana-avamānana-kṣama.

2 Tib.: ṅan-pa byed-pa.

3 The compound is new.—ghaṭṭanā, from Lexx. only.

4 Tib. has; sdug-bsṅal med-par des hbyuṅ-med = aduḥkhena tena (duḥkhena) apunarbhavaḥ = Without difficulty by suffering is gained the not being reborn.—According to the Commentary: niḥsāra = das Herauskommen = It is by duḥkha alone that one can escape from duḥkha.

महता प्रयत्नेन कुसुमपत्रमुपसेव्य कदा चित्कर्हिं चित्-दुर्लभं संसारे साश्रवं[1] सुखं लभ्यते। दुःखं तु सर्वदा सुलभं। अयत्नसिद्धत्वात्। इति तदभ्यासो न दुष्करः। सर्वदा परिचितत्वात्। किं च संसारनिःसरणोपायोऽपि दुःखमेव। तथापि पाथेयरूपतया तत्परिग्रहो युक्त एव। यत एवं तस्मात्। हे चित्त दुःखानुभवनाय दृढीभव। मा कातरतामाश्रयस्व॥

अपि चेदं दुःखं महार्थसाधकत्वात् सोढुमुचितं। इति मनसि कर्तव्यं। इत्याह।

**दुर्गापुत्रककर्णाटा[2] दाहच्छेदादिवेदनां।**
**[3]वृथा सहन्ते मुक्त्यर्थमहं कस्मात्तु कातरः॥१३॥**

दुर्गापुत्रकाः चण्डीसुताः। महानवम्यादिषु[4] चिरात्रमेकाहं वा उपोष्य गात्रदाहच्छेदनभेदनं कुर्वन्तो दुःखां वेदनां निष्फलमेवानुभवन्ति। तथा कर्णाटदेशादिसमुद्भूता[65a] दाक्षिणात्या[5] उपरि[6] नामलिखनमात्राभिमानतः परस्परं 15

---

1 Cp. *Çikṣās.*

2 Dev.: Kārṇātā.

3 So M.—Minaev: mūḍhā; Tib. has: don-med.

4 Cp. Āçvinaçuklanavamyām devīvratam, Aufrecht, *Oxf. Cat.* 285a.

5 Cp. Aufrecht, *op. cit.*, dākṣiṇātya, °ācārya, °tantra, karṇāṭadeça (258a); Weber, *Vajrasūci*, p. 258; Roussel, *Cosmologie hindoue* p. 318, from *Bhāgavata-purāṇa*: Bhakti narrates her life to Nārada: "I was born in Dravida, I have grown up in Karṇātaka..."

6 Tib.: goṅ-mai miṅ = uttaranāma°; upari = goṅ-du.

सर्वमाना अनेकाभिः कारणाभिर्दुःखमनुभवन्तो जीवित-
मप्युत्सृजन्ति। अहं तु स्वपराक्रमोः परमदुर्लभबुद्धत्वाभ्यास
कृतोत्साहः। दुःखैः कस्मात्कारणात् कातरीभवामि॥

स्यादेतत्। अत्यल्पदुःखं कथं चिरसोढुं शक्यते। शस्त्र-
5 करचरणशिरश्छेदनादिदुःखं नरकादिदुःखं वा सुमहत् कथं नु
सोढव्यमित्याह।

**न किंचिदस्ति तद्वस्तु यदभ्यासस्य दुष्करं[1]।**
**तस्मान्मृदुव्यथाभ्यासात् सोढव्यापि महाव्यथा॥१४॥**

शास्त्राभ्यासकलादि कौशलादि मृदुमध्यातिमात्रदुःखानु-
10 भवनादि वा। वस्तु न तद्विद्यते किंचिद्यदभ्यासगोचरो न
भवति। सर्वमेवाभ्यासादात्मसात्कर्तुं शक्यत इति भावः।
यस्मात्तस्मात्। अत्यल्पतरादिव्यथाभ्यासान्नरकादिमहाव्यथापि
सोढुं।

यथोक्तं[2]। तथाल्पदुःखाभ्यासपूर्वकं कष्टकष्टतराभ्यासः क्रियते।
15 यथा चाभ्यासवशात्सत्त्वानां दुःखसुखसंज्ञा। तथा सर्वदुःखो-
त्पादेषु सुखसंज्ञाप्रत्युपस्थानाभ्यासात् सुखसंज्ञैव प्रत्युपतिष्ठते।
एवं[3] निष्यन्दफलं[4] च सर्वधर्मसुखाक्रान्तं नाम समाधिं प्रति-
लभते[2]।

---

1 Cp. *Çikṣâ.* $180_{19}$, $265_{8}$ and note.

2.2 = *Çikṣâ.* 181, $_{8-11}$.

3 The reading of *Çikṣâ.* is possibly better: etanni°; but Tib.: de-ltar-na.

4 Tib.: rgyu-mthun-pai hbras-bu yaṅ ..., According to Foucaux, same translation in *Lalita*, $5'_{6}$.—(rgyu-ba = srotas, pracâra; mthun-pa = sama etc).—See Mahâvastu II, 545.

[1]उक्तं हि पितापुत्रसमागमे । अस्ति भगवन् सर्वधर्मसुखाक्रान्तो नाम समाधिः । यस्य समाधेः प्रतिलम्भाद्बोधिसत्त्वः सर्वारम्बणवस्तुषु सुखामेव वेदनां वेदयते । न दुःखां[2] । नादुःखासुखां । तस्य नैरयिकामपि वेदनां कार्यमाणस्य सुखसंज्ञैव प्रत्युपस्थिता भवति । मानुषीमपि कारणां कार्यमाणस्य हस्तेष्वपि छिद्यमानेषु पादेष्वपि[3] कर्णेष्वपि नासास्वपि सुखसंज्ञैव प्रत्युपस्थिता भवति । वेत्रैरपि ताड्यमानस्य अर्ध[65b]वेत्रैरपि कशाभिरपि ताड्यमानस्य सुखसंज्ञा प्रवर्तते । बन्धनागारेष्वपि प्रक्षिप्तस्य[4] तैलपायिकां वा क्रियमाणस्य । इक्षुकुट्टितकं[5] वा कुट्ट्यमानस्य । नड्विप्पितिकं[6] वा विप्यमानस्य । तैलप्रद्योतिकं वादीप्यमानस्य । [7]यावत्कार्षापणच्छेदिकां छिद्यमानस्य । पिष्टपाचनिकां वा पाच्यमानस्य । हस्तिभिर्वा मर्द्यमानस्य सुखसंज्ञैव प्रवर्तते । इति विस्तरः ॥

स्यादेतद्यदि प्रथमत एव मृदुव्यथाभ्यासः स्यात् । यावता स एव नास्तीति । अथाह ।

---

1 *Çikṣās.* 181, 18-182, 6.—See notes and Pāli references.

2 Is wanting in *Çikṣās.*

3 Ms : pārçvesu ; but Tib. : rkaṅ-ba.

4 *Çikṣās.* has : ..prakṣiptasya : pe : taila°.

5 *Çikṣās.*–Ms : kuṭṭitakadyā. The last akṣara is doubtful.

6 See Prof. BENDALL's notes on these difficult words.—Our Ms. : ...vippidikaṁ vā vispamānasya.

7 Yāvat supplies the sentences omitted by our author.—*Çikṣās.* has : chedikam, °pācanikam, (better reading).

उहंशदंशमशकक्षुत्पिपासादिवेदनां ।
महत्कण्ड्वादिदुःखं च किमनर्थं न पश्यसि[1] ॥१५॥

उहंशादिकृतदुःखमनर्थं किं न पश्यसि । तदधिवासितुं सुदुष्कराभ्यासनिमित्तमस्त्येव इति भाव ॥ पुनरन्यथा चित्तं
5 दृढयितुमाह ।

शीतोष्णवृष्टिवाताध्वव्याधिबन्धनताडनैः ।
सौकुमार्यं न कर्तव्यमन्यथा वर्धते व्यथा ॥१६॥

सुकुमारतरचित्तस्य हि दुःखमतितरां बाधकं भवति । दुःखेऽपि दृढचित्तस्य विपर्ययः ॥ ननु दृढीकरणेऽपि चित्तस्य दुःखमसह्यमेवेति । अत्राह ।

के चित्स्वशोणितं दृष्ट्वा विक्रमन्ते विशेषतः ।
परशोणितमप्येके दृष्ट्वा मूर्छां व्रजन्ति यत् ॥१७॥
तच्चित्तस्य दृढत्वेन कातरत्वेन चागतं ।
दुःखदुर्योधनस्तस्माद्भवेदभिभवेद् व्यथां[2] ॥१८॥

15 न खलु दृढचित्तस्य किं चिदशक्यं नाम । तथा हि के चिद्वीरपुरुषाः संग्रामभूमौ स्वशोणितमपि पश्यन्तोऽधिकतरं शौर्यमाभजन्ते । के चित्पुनः कातरचित्तसंततयः पररुधिरदर्शनादपि मरणान्तिकं दुःखमनुभवन्ति ।

---

1 Tib.: don-med sdug-bsnal cis ma mthoṅ: anarthaṁ duḥkhaṁ kasmān na dṛṣṭam.

2 Tib.: de-bas gnod-pa khyad-bsad-çiṅ | sdug-bsnal-rnams-kyis mi hsugs-byos = tasmād vyathām abhibhavan duḥkhair adharṣaṇīyo bhavet.

एतदुभयमपि चित्तस्येतरेतराभ्यासविपर्ययात्। इति मत्वा दुःखदुर्योधनो[1] नाधिगम्यो भवेत्। दुःखैरप्यकम्प्यत्वात्। ततोऽभिभवेद्व्यथां। न पुनस्तयाभिभूयते॥

इत्थमप्यभिभवेद्व्यथामित्याह।

दुःखेऽपि नैव चित्तस्य प्रसादं क्षोभयेद् बुधः। 5
संग्रामो[2] हि सह क्लेशैः युद्धे च सुलभा व्यथा॥ १९॥

प्रसादं पूर्वोक्तं नावसादयेद्विचक्षणः। कुतः यस्मात्। क्लेश-शत्रुभिः सह संग्रामोऽयमारब्धः। संग्रामे च व्यथा नाम न भवेदिति दुर्लभं। व्यथा सुलभैव॥

न[66a]नु तथापि दुष्करमिदमतीव दृश्यत इति। अत आह। 1

उरसारातिघातान्ये प्रतीच्छन्तो जयन्त्यरीन्[3]।
ते ते विजयिनः शूराः शेषास्तु मृतमारकाः॥ २०॥

अभिमुखमभिभवन्तः[4] शत्रुं। तत्प्रहारान् वक्षःस्थलेन प्रती-च्छन्तो ये जयन्ति समरे रिपून्। ते ते शूरपुरुषाः[5] पर-रिपुविजयादिह लब्धविजयाः प्रशस्यन्ते। ये पुनरन्ये हत- 15

---

[1] So Ms. (second hand) = ..°dhano' nadhi°.

[2] So L², M.—Minaev has: saṁgrāme hi..., and so Tib : gyul-hgyed-la; but see Commentary.—With saṁgrāma cp. *Çikṣâs* 364·$_{13}$.

[3] The Tib. version is the following: sdug-bsṅal thams-cad khyad-bsad-nas se-sdaṅ-la-sogs dgra hjoms-pa: sarvaduḥkhāny abhibhūya dveṣādyariṁ jayanti.

[4] Orig. scribe: °bhavanti; second scribe: °bhavantā.

[5] Tib.: mchog-tu dgra; mchog-ma = para, uttama, parama, etc.

प्रहारादिभिरभिभवन्ति शूरं । ते चाकिंचित्करतया हतना-रका[1] अनुकम्पनीया एव शूरैः ॥

इतोऽपि गुणदर्शनाद् दुःखमधिवासयितव्यमित्याह ।

गुणोऽपरश्च दुःखस्य यत्संवेगान्मदच्युतिः ।
संसारिषु च कारुण्यं पापाद्भीतिर्जिने स्पृहा ॥ २१ ॥

अयमपरः शुभहेतुर्गुणो दुःखस्य संबोधिमार्गानुकूलः । यद् दुःखस्य समावेशे मनसि संवेग उपजायते । तस्माच्च यौवनधनादिकृतस्य मदस्य च्युतिर्भङ्गो जायते । संसारिषु च संसारदुःखपीडितेषु करुणाचित्तं । पापस्य फलमिदमिति मत्वा पापाद्भयमकरणचित्तं च । बुद्धे च भगवति स्पृहा भक्तिः श्रद्धा चित्तप्रसादश्च । भगवानेव हि दुःखक्षयगामिनं मार्गमुपदिष्टवानिति ॥

परप्रत्ययोत्पन्नदुःखाधिवासनाय परामृशन्नाह ।

पित्तादिषु न मे कोपो महादुःखकरेष्वपि[2] ।
सचेतनेषु किं कोपः तेऽपि प्रत्ययकोपिताः[3] ॥ २२ ॥

पित्तादिदोषत्रयात्मकमेव शरीरं । ते च तथाविधाहारविहारवैगुण्याद् विषमावस्थां प्राप्ता व्याधीन् जनयन्तः सर्वदुःख-

[1] The compound is new.

[2] Minaev has: °duḥkhākareṣv: but Comm.: ..janayanti.

[3] Kopita translated by bskul-ba = urged on, influenced.. (ond, pra-ir). The pittādayaḥ are said "kopita" when troubled (kṣobhita).

चेतनो भवन्ति । तथापि न तेषु मम कोपः । अचेतनत्वात् । न ते संचिन्त्य दुःखदायकाः । किं तर्हि । स्वकारणसामग्री-वशेन प्रकोपमुपगताः । यद्येवं सचेतनेषु किं कोपः । किं न स्यादिति चेत् । तेऽपि पूर्वकर्मापराधात् स्वकारणसामग्रीप्रको-पिता दुःखदायका भवन्ति । इति पित्तादिवत्तेष्वपि न युज्यते 5 मम क्रोधः ॥ [66b] उभयथापि समानं कारणाधीनत्वं ।

इत्युपदर्शयन्नाह ।

अनिच्छमानमप्येतच्छूलमुत्पद्यते यथा ।
अनिच्छमानोऽपि बलात्क्रोध उत्पद्यते तथा ॥ २३ ॥

स्वप्रत्ययोपजनितसामर्थ्येभ्यः पित्तादिभ्योऽनभिप्रेतमपि शूल- 10 मवश्यमुत्पद्यते यथा । तथा स्वहेतुपरिणामाधिगतशक्तिभ्यो दौर्मनस्यादिभ्यः क्रोध उत्पद्यते । इति साधारणमनयोर्हेतु-प्रत्ययाधीनत्वं ॥

अथ स्यात् । उक्तमत्र सचेतनाः संचिन्त्य तथाविधानिष्ट-कारिणः । न तु पुनरितरे तथेत्याह । 15

कुप्यामीति न संचिन्त्य कुप्यति स्वेच्छया जनः[1] ।
उत्पद्येय इत्यभिप्रेत्य क्रोध उत्पद्यते न च ॥ २४ ॥

तत्प्रत्ययसामग्रीमन्तरेण कुप्यामीत्येवं बुद्धिपूर्वकं संचिन्त्य न जनः स्वैरं प्रकुप्यति । क्रोधोऽपि उत्पद्येय इत्यभिसंधाय स्वातन्त्र्येण नैवोत्पद्यते ॥

1 M. : naraḥ.

तस्मादिदमेवात्र प्रमाणयितुमित्याह ।

**ये केचिदपराधास्तु[1] पापानि विविधानि च ।**
**सर्वं तत्प्रत्ययबलात् स्वतन्त्रं तु न विद्यते ॥ २५ ॥**

[2]इदम्प्रत्ययतामात्रसमुपस्थितस्वभावं सर्वमिदम् । न तु स्वा-
5 तन्त्र्यप्रवृत्तं किंचिदपि विद्यते ।

**न च प्रत्ययसामग्र्या जनयामीति चेतना ।**
**न चापि जनितस्यास्ति[3] जनितोऽस्मीति चेतना ॥२६॥**

प्रत्ययसामग्र्यपि न स्वकार्यं जनयन्ती संचिन्त्य जनयति । सा हि स्वहेतुपरिणामोपनिधिधर्मतया तथाविधं कार्यं जनयति । न तु संचिन्त्य । न चापि जनितस्य कार्यस्यापि अनया सामग्र्या जनितोऽस्मीति चेतना मनसिकारोऽस्ति[4] । तस्मान्निर्व्यापारतया सर्वधर्माणाम् । [5]अस्मिन् सति इदं भवति । अस्योत्पादादिदमुत्पद्यते । इतीदम्प्रत्ययतामात्रमिदं जगत्[6] । नात्र कश्चित्स्वतन्त्रः संभवति । हेतुप्रत्ययाधीनत्वात्सर्वधर्माणाम् ॥
15 स्यादेतत् । अस्त्येव स्वतन्त्रं । यथा सांख्यानां प्रधानं । आत्मा

---

1 So Minaev; M. has: ° aparādhaç ca.

2 Cp. *Bodhic. ṭ.* note ad 249,12 (p. 395); *Sarvadarçanas.* 20,21 and Comm. to Çaṁkara II. 2, 19.

3 I.B janitasyāpi.

4 Cp. *Çālistambasūtra* on Pratītyasamutpāda : ... bījasya naivaṁ bhavati : "ahaṁ aṅkuraṁ nirvartayāmi" iti ; aṅkurasya naivaṁ bhavati : ahaṁ bījena nirvartita" iti. " *Çikṣās., Madhyamakavṛtti, Bodhic.* IX, *Abhidharmakoçav.. Bhāmatī*, p. 354.

5.6. = *Madh. vṛtti*, 14,22, 50,11; *Mahāvastu*, II, 285,7; *Majjhimanikāya* III. 63.23 *Bodhic ṭ.* 307,9. *Abhidharmakoça*, (Soc. As.) fol. 234-5.

च नैयायिकादीनामाकाशादयः। तत्किमुच्यते न किं चित्स्व-
तन्त्रमिह विद्यते। [67ª] इत्याशङ्क्याह।

**यत्प्रधानं किलाभीष्टं यत्तदात्मेति कल्पितं।**
**तदेव हि भवामीति[1] न संचिन्त्योपजायते ॥ २६ ॥**

यत्तद्भवतां सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रधान- 5
मित्यभिमतं। किलेति प्रमाणासंगतमेतदित्यरुचिं प्रकाशयति।
यदपि तदस्तु किं चिदात्मेति कल्पितमध्यवसितं प्रमाणा-
संगतमेव। आह। यस्मात्तदेव स्वयमेव तदपरकारणाभावाद्
भवामि समुत्पद्य इति नाभिसंधाय[2] जायते ॥ कुतः। यस्मात्

**अनुत्पन्नं हि तन्नास्ति का इच्छेद्भवितुं तदा।** 10

तत् प्रधानादि प्रागसदेव। असतश्च बन्ध्यासुतादेरिव का
भवितुमुत्पत्तुमिच्छा भवेत्। अथ नासदुत्पद्यते किं चित्।
केवलमव्यक्तावस्थातो व्यक्तावस्थायां परिणाममात्रं। यद्येवं परि-
णामोऽपि कथमसदुत्पद्यते व्यक्तावस्था वा। परिणामस्य
व्यक्तावस्थायाश्च तत्स्वभावत्वे तस्याप्युत्पत्तिप्रसङ्गः। अतिरेके 15
संबन्धाभावः। संबन्धकल्पनायां चानवस्था। परतो विस्तरेण
प्रधानं निराकरिष्यते[3] ॥

स्यादेतत्। आत्मन्ययमदोष एव। न हि तस्य स्वयमुत्पाद-

---

1 Dev.: bhavāniti.

2 In margin: abhiprāyīkṛtya; wanting in Tib.

3 IX, 127–138. For the present argumentation, see 136: vyaktasyāsata utpattir akāmasyāpi te sthitā.—Cp. *Madh. vṛtti.* 6-7.

नित्यात्मनः । यदेष्टं नित्यस्वभावत्वादुत्पन्नस्य इत्याशी । अस्तु नामैवं । तथापि सर्वथा परिणामकस्य एवास्योत्पादाभावात् । ततो ज्ञातापि निवर्तते

अनुत्पन्नं हि तन्नास्ति क इच्छेद्भवितुं तदा । इति ।

5 भावेऽपि वा नास्य स्वात्मन्यपि प्रभुत्वमस्ति । प्रकृत्युपनामितमेव हि विषयमपि स भुङ्क्ते । तदा च विषयोपभोगात्प्राक् तद्भोक्तृत्वमस्य नासीत् । पश्चादुत्पन्नं च तत्स्वभावमेव[1] । अन्यथा तस्य भोक्तृत्वायोगात् । तदुत्पादे च तस्याप्युत्पाद इति कथं नात्मन उत्पाद इष्यत इति । तदेवं [67b] पुनः

अनुत्पन्नं हि तन्नास्ति क इच्छेद्भवितुं तदा ।

इत्यायातं ॥

अपरमपि दूषणमाह ।

विषयव्यापृतत्वाच्च[2] निरोद्धुमपि नेष्यते ॥ २७ ॥

यद्यप्यसौ प्रधानोपस्थितविषयोपभोगाय प्रवर्तत इतीष्यते ।
15 तदा प्रागप्रवृत्तस्य पश्चात्प्रवृत्तिर्न युज्यते । अथ कथं निवर्तते । तदापि विषये व्यापृतस्य निवृत्तिर्न स्यात् । एतदेवाह । निरोद्धुमपि नेष्यते । विषयोपभोगान्निवर्तितुमपि नोत्सहते । तदा तस्य तत्स्वभावत्वात् । तस्य च नित्यतयानिवृत्तेः । निवृत्तौ वानित्यत्वप्रसङ्गात् । नैयायिकादीनामात्मनो व्यपदेशो निरासात् ।

20 विशेषमपि तत्राह ।

---

1 So Ms.

2 Minayev and text-Mss. : viṣayavyavṛtatvāt.—Tib. : yul-la rtag-tu gyo-bar-bas hgag-par.

नित्यो ऽचेतन आत्मा व्योमवत् स्फुटमक्रियः ।

अचेतनत्वं सांख्यादिव विशेषः । अन्यच समानता । तत्र नित्यः पूर्वापरकालयोरेकस्वभावः । अचेतनश्च अचित्स्वभावो जड इत्यर्थः । अन्यचैतन्ययोगाच्चेतयते । व्योमवत् व्यापी । अत एव स्फुटं व्यक्तमक्रियः । यदाह । 5

अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयं ।
स्वतो ऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा ॥
शुभाशुभानां कर्तारं कर्मणां तत्फलस्य च ।
भोक्तारं चेतनायोगाच्चेतनं न स्वरूपतः ॥[1]

तथा चाकिंचित्कर एवासौ क्वचिदपि कार्ये ऽनुपयोगात् ॥ 10
अथापरसहकारिप्रत्ययसंनिधौ निष्क्रियस्यापि तस्य क्रियापगम्यते । यदुक्तं

ज्ञानयत्नादिसंबन्धः कर्तृत्वं तस्य भण्यते । इति[2]

अथाह ।

प्रत्ययान्तरसङ्गे ऽपि निर्विकारस्य का क्रिया ॥ ६९ 15

ज्ञानयत्नादिप्रत्ययान्तरसंपर्के ऽपि नित्यत्वान्निर्विकारस्य पूर्वस्व[68a]भावादप्रच्युतस्यात्मनः का क्रिया ॥ नैव क्रिया युज्यते ।

---

1 Quoted ad ix. 58 (p. 295, 20): naiyāyikavad vaiçeṣikā api.

2 Quoted ad ix. 72 (p. 304, 26). Our MS. has: labhyate; but Tib.: bçad.— The second line is the following: Sukhaduḥkhādisaṁvittisamavāyas tu bhoktṛtā.—These buddhistic quotations may perhaps be found in the *Tarkajvālā* by Bhāvaviveka?

यः पूर्ववत्क्रियाकाले क्रियायास्तेन किं कृतं ।
तस्य क्रियेति संबन्धे कतरत्तन्निबन्धनं[1] ॥ ३०

यथा पूर्वमक्रियाकाले तथा क्रियाकालेऽपि यः । तेन कारकस्वभावविकलेन क्रियायाः किं कृतं । येन प्रत्ययान्तरसंगे तस्य क्रिया व्यवस्थाप्येत ॥ अपि च । उभयसंबन्धाभावात् तस्यात्मनः क्रियेयमिति संबन्धे कतरत्तद्व्यनिमित्तं । नैवास्ति किंचित् ॥

विस्तरेण चात्मनो निराकरिष्यमाणत्वादीश्वरस्य[2] च न स्वतन्त्रः कश्चिदपि संभवति । एवमस्वातन्त्र्यं सर्वत्र प्रसाध्योपसंहरन्नाह ।

एवं परवशं सर्वं यद्वशं[3] सोऽपि चावशः ।
‘निर्माणवदचेष्टेषु[4] भावेष्वेवं क्व कुप्यते[5] ॥ ३१

एवमुक्तनयेन परवशं परायत्तं सर्वं बाह्याध्यात्मिकं वस्तुजातं । तर्हि यद्वशे[6] तदपरायत्तं भविष्यतीति चेत् । न । यद्वशं सोऽपि चावशः स्वहेतुपरतन्त्रः । एवं स हेतुरपि स्वहेतोरित्यना-

---

1 Minaev: katarattaṁ ni°; L: katarantu. Tib.: de-yi byed-pa hdi yin-zes, hbrel-bar hgyur-ba gaṅ-zig yod = tasya kriyeyam iti...(cp. Comm.)

2 On īçvara, see IX, 119-126; on ātman, IX, 58-60.

3 = yasya vaçe sthitaṁ sarvaṁ, so 'pi...

4 Minaev has: nirvāṇavad; L³ nirmāṇa; so Tib.: de-ltar çes-na sprul-lta-bui dṅos-po-kun-la hkhro mi hgyur (= evaṁ jñātvā nirmitasadṛçasarvabhāveṣu na kupyate).—Comm.—MS. has also: nirvāṇa, p. 187, 4, 10. Cp. V. 57 supra.

5 L³ kupyase.—According to the Comm.: kupyatām.

6 So MS., clearly written the old sign of e anteceding.

द्विषंवारणपरंपरायां न स्ववशिता[1] क चिदपि संभवति । अतो
निर्व्यापाराः सर्वधर्मा इति । कः कस्मै क्रुध्यति परमार्थतः
येनापराधिनि क चित्कस्य चिदपराधे तस्य द्वेषो युक्तः ।
इदमेवाह । निर्माणवत् सर्वव्यापारकल्पनाविगमात् । अचेष्टेषु
निरीहेषु सर्वधर्मेष्वेवं सत्सु क क्रुध्यतां । न युज्यते प्रेक्षावतां 5
क चिदपि कोप इति भावः ॥

स्यादेतत् । एवं श्लोकं समर्थयतो द्वितीयं विघटत इत्या-
शङ्कयन्नाह ।

**वारणापि न युक्तैवं कः किं वारयतीति चेत् ।**

समर्थितन्यायेनैव वारणापि निवर्तनमपि निर्माणवदचेष्टेषु 10
भावेषु न युक्ता । एवमिति यदा किं चिदपि स्वत[illegible]-
[68b]ते । सर्वं प्रत्ययसामग्रीं प्रतीत्य जायते । तद[illegible]
न युक्ता । यदि वानैवं तथापि कथं न युक्ता । को वारयिता
स्वतन्त्रः कर्ता किं निषेध्यं स्वतन्त्रप्रवृत्तं वारयतीति चेत् ॥
अयमभिप्रायः । न हि समाने ऽपि न्याये क चित्प्रवृत्तिः क 15
चिन्निवृत्तिर्युज्यते । एकत्र निवृत्तौ सर्वत्रैव निवृत्तिर्युक्ता न
तु क चिदेव न्यायस्य सामान्यत्वात् । तस्मादयुक्तमेतत् । वारणा
न युक्तेति । यद्येवं मन्यसे ऽत्रोत्तरमाह ।

**युक्ता प्रतीत्यता यस्माद्दुःखस्योपरतिर्मता ॥ ३२ ॥**[2]

---

1 svavaçin, ? çitā are new.

2 Tib.: de-la brten-nas sdug-bsñal-rnams rgyun-chad hgyur bdod mi-rigs med = tat pratītya duḥkhānām uparatir iṣṭā na ayuktā.—Dev.: yuktāḥ... tasmād...

युक्ता वारणा । कुतः प्रतीत्यता[1] । इदं प्रतीत्येदमुत्पद्यत
इति प्रतीत्यसमुत्पन्नता यस्मादस्ति निर्व्यापारेष्वपि भावेषु ।
अतो वारणा युक्ता । ततो न व्याघातः । एतदुक्तं भवति । यद्यपि
निर्व्यापाराः सर्वधर्मास्तथापि प्रतीत्यसमुत्पादवशात्पारतन्त्र्यमुप-
5 दर्शितं । एवं परवशं सर्वमित्यादिवचनात्[2] । ततोऽविद्यादि-
प्रत्ययवशादुत्तरोत्तरः कार्यप्रवाहः संस्कारादिरूपः प्रवर्तते ।
पूर्वपूर्वनिवृत्तौ निवर्तते । एतच्चोत्तरत्र[3] विस्तरेण प्रति-
पादयिष्यते ॥ तस्माद्दुःखस्य संसारस्योपरतिर्निवृत्तिरभिमता[4] ।
अतो द्वेषादिपापप्रवृत्तिनिवारणा संगच्छते । तां प्रतीत्य तथा-
10 विधमभ्युदयनिःश्रेयसस्वभावं फलमुत्पद्यते ॥

सांप्रतं प्रकृतमेव योजयन्नाह ।

> [illegible] वा दृष्ट्वाप्यन्यायकारिणं ।
> [illegible] अस्येत्येवं मत्वा सुखी भवेत् ॥ ३३ ॥

यदि तस्मादमित्रमितरमपकारिणं[6] प्रतीत्य
15 सुखमेवावस्थानीयं । कुतः । ईदृशा अपकारकरणप्रत्ययो
ऽस्य[ा]मित्रस्येतरस्य वा । इत्येवं निश्चित्य सुखी भवेत् । दौर्मनस्यं
न कुर्वीत [69a] ॥ किं च दुःखोपनिपातेन चित्तक्षोभेऽपि न
दुःखस्य निवृत्तिरित्युपदर्शयन्नाह ।

---

1 Tib. : brten-nas-so = pratītya.

2 *Supra* VI, 31.

3 IX, 75.

4 We have : yuktā vāraṇā, pratītyatā yasmād asti, tasmāc ca saṁsārasya nivṛttir abhimatā.

5 Pratītya samutpannam

6 Tib. : mi-mdza daṅ cig-ços = amitram itaraṁ ca.

यदि तु स्वेच्छया सिद्धिः सर्वेषामेव देहिनां ।
न भवेत्कस्य चिद्दुःखं न दुःखं कश्चिदिच्छति ॥ ३४

न ह्यात्मेच्छाभावेणानभिमतं निवर्तते अभिमतं चोपतिष्ठते हेतुमन्तरेण । तथात्वे सति न भवेत्कस्य चित्कस्य दुःखं । किमिति । न दुःखमात्मनः कश्चिदिच्छति । सुखाभिलाषिण एव हि सर्वसत्त्वाः ॥

दुःखाधिवासनाक्षान्तिमभिधाय[1] इदानीं[2] परापकारमर्षण-क्षान्तिमुपदर्शयन्नाह ।

प्रमादादात्मनात्मानं बाधन्ते कण्टकादिभिः ।
भक्तच्छेदादिभिः कोपाद्दुरापस्त्र्यादिलिप्सया ॥ ३५
उद्बन्धनप्रपातैश्च विषापथ्यादिभक्षणैः ।
निघ्नन्ति के चिदात्मानमपुण्याचरणेन च ॥ ३६
यदैवं क्लेशवश्यत्वाद् घ्नन्त्यात्मानमपि प्रियं ।
तदैषां परकायेषु परिहारः कथं भवेत् ॥ ३७

अयुक्तोचितकारिता प्रमादः । तेनैव स्वकायं कण्टक-वालुककठिनपाषाणशर्करादिभिर्दुर्गमार्गेषु[3] कर्मप्रवृत्ताः । कण्टका-स्तरणशयनादिभिर्वा बाधन्ते । तथा भोजनपानपरिहारा-

---

1 VI, 8-34.
2 VI, 35-50.
3 khāṇu, cp. Bendall's note ad *Çikṣās.* 193, 1; katlāllā (?) *Mahāvastu* (Burnouf, *Lotus*, 338.)

दिभिः[1] । किमिति कोपात् । अन्यपरदाराभिलाषादि वाञ्छिया वा ।

उद्बन्धनं ऊर्ध्वबन्धनं । प्रपातः प्रपतनं पर्वतादेः । जलाग्नि-प्रवेशादिभिः । विषापथ्यादिभक्षणैः । अत्याहारातिपानादिभिः ।

5 निघ्नन्ति मारयन्ति के चिन्मोहपुरुषा[2] आत्मानं स्वकायं पर-वधादिभिः । अपुण्याचरणेन च । परवधाभिप्रायाः संग्रामादिष्व-कुशलक्रियया च ।

यदेवमुक्तक्रमेण क्लेशवश्यत्वात् क्लेशपरतन्त्रत्वादेते सत्वा आत्मानमपि प्रियं वल्लभं घ्नन्ति पीडयन्ति । तदेषां परकायेषु

10 परशरीरेष्वपकारविरतिः कथं स्यात् ॥

[illegible]पापान्नैवैते न द्वेषस्थानं । इत्याह

[illegible]क्लेशेषु प्रवृत्तेष्वात्मघातने ।

[illegible]या नास्ति क्रोध उत्पद्यते कथं ॥ ३८

पिशाचैरिव क्लेशैः । एषु । अपकारकारिषु । उक्तनयेन

15 प्रवृत्तेष्वात्मघातने परापकारद्वारेण वा । न केवलं न तावत्

[69b] कृपा नास्ति । औदासीन्यमपि साधूनां तथायुक्तं । क्रोध उत्पद्यते कथं । कृपास्थानेष्विति विपर्ययो महान् ॥

---

1 Parihāra, see *Childers*, s. voc. "Ab. (Abhidhānappadīpikā) gives also to this word the meaning of vajjana, "avoiding," as in Sanskrit; but of this I have not as yet met with any example."—This meaning imposes itself in our text.

2 Mohapurusa (not in P.W.) very common, *Lankāv.* 65, 13. 114, 9, etc. Cp. mohavarga, *ibid.* 111, 16.

एवमपि स्वचित्तं निवारयेदित्याह ।

**यदि स्वभावो बालानां परोपद्रवकारिता ।**
**तेषु कोपो न युक्तो मे यथाग्नौ दहनात्मके ॥ ३९**

तथा हि विकल्पद्वयमत्र बालानां पृथग्जनानां यद्येतादृश एव स्वभावः[1] परोपद्रवकारिता नाम । तदा न खलु स्वभावाः[2] पर्यनुयोगमर्हन्ति[3] किमिति परापकारं कुर्वन्ति ते । इति परिभाव्य तेषु द्वेषो न युक्तो मे । तद्यथाग्नौ दहनस्वभावे दाहकरणात् । अन्यथा तदभावे तत्स्वभावताहानिप्रसङ्गात् ।

द्वितीयं विकल्पमधिकृत्याह ।

**अथ दोषो ऽयमागन्तुः सत्त्वाः प्रकृतिपेशलाः ।**
**तथाप्ययुक्तस्तत्कोपः कटुधूमे यथाम्बरे ॥ ४०**

अथ दोषो ऽयमागन्तुरन्य एव न तत्स्वभावभूतः सत्त्वाः पुनः प्रकृतिप्रभास्वरचित्तसंतानतया[4] पेशला अकुटिलस्वभावाः । दोषा हि दुष्टस्वभावा न तत्स्वभावाः सत्त्वाः । तथाप्ययुक्तस्तेषु सत्त्वेषु पेशलस्वभावेषु कोपः । कस्मिन्निव । कटुधूमो यस्मिन्नि-वाम्बरे । न हि कटुता नाम निर्मलस्याकाशस्य स्वभावः । अपि तु धूमस्य । अतश्च तद्दोषेण धूम एव द्वेष्यो[5] युज्यते । नाकाशं प्रकृतिपरिशुद्धं । तस्माद्दोषेष्वेव कोपो युज्यते न सत्त्वेषु ॥

---

[1] MS. : etādṛçā eva svabhāvāḥ. No plural sign in Tib.

[2] No sign of the plural in Tib.

[3] MS. : paryanupayogam.

[4] Cp. prakṛtinirmala,° prabhāsvaratā, *Bodhic.* IX, 269.14; prakṛtiprabhāsvaraviçuddhi (*Laṅkāv.* 80.3).

[5] MS. : doṣo.

अपि च यदेव हि प्रधानं दुःखकारणं तत्र युक्तो भवेत्कोपो नाप्रधाने । इत्याह ।

मुख्यं दण्डादिकं हित्वा प्रेरके यदि कुप्यते ।
द्वेषेण प्रेरितः सो ऽपि द्वेषे द्वेषो ऽस्तु मे वरं ॥४१

5 काये हि दण्डप्रहाराद्भावितचित्तस्य दुःखं समुत्पद्यते । ततो दण्ड एव मुख्यं दुःखकारणमिति । तत्रैव कोपो युक्तः । अथ परप्रेरितस्य दण्डस्य को दोषः । तेन प्रेरक एव द्वेष्यो भवति । एवं तर्हि द्वेषेण सो ऽपि दण्डप्रेरकः [70a] प्रेरित इति द्वेषे द्वेषो मम युक्तो न प्रेरके ॥

अपि च । नाहत्तं किंचिदुपभुज्यते सुखं दुःखं वा । [illegible] विचिन्त्य परापकारे ऽपि न तत्र चित्तं प्रदूषयेत् ।

मयापि पूर्वं सत्त्वानामीदृश्येव व्यथा कृता ।
तस्मान्मे युक्तमेवैतत्सत्त्वोपद्रवकारिणः ॥ ४२

15 पूर्वं जन्मान्तरे मयापि सत्त्वानामेवंविधैव पीडा कृता यस्मात् । ऋणपरिशोधनन्यायेनोचितमेव ममैतत्परापकार-कारिणः । तत्कर्मफलपरिपाकादिति भावः ॥

यद्यस्य कारणं तस्मादेतदुत्पद्यते । नान्यस्मात् । इति परामृश्य परापकारं मर्षयेत् । इत्युपदर्शयन्नाह ।

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1090.



# बोधिचर्यावतारपञ्जिका ।

# PRAJÑĀKARAMATI'S COMMENTARY
TO THE
# BODHICARYĀVATĀRA OF ÇĀNTIDEVA.

EDITED WITH INDICES

BY

LOUIS DE LA VALLÉE POUSSIN,
PROFESSOR OF SANSKRIT IN THE UNIVERSITY OF GHENT.

FASCICULUS III.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1904.

# Asiatic Society of Bengal,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,

15, PICCADILLY, LONDON, W., AND MR. OTTO

HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | Rs. | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1-4 @ /6/ each | ... | 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1-2 | ... ... ... | 0 | 12 |
| *Agni Purāṇa, (Text) Fasc. 4-14 @ /6/ each | ... ... ... | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 and Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-5 @ /6/ | ... ... ... | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 2-5 @ /6/ each | ... ... ... | 1 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 | ... ... ... | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1-6 @ /6/ each | ... | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1-5 @ /6/ each | ... ... ... | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 2-5; Vol. II. Fasc. 1-5 @ 1/ each | ... ... ... ... | 9 | 0 |
| Bāla Bhaṭṭi, Vol. I, Fasc. 1 | ... ... ... ... | 0 | 6 |
| Baudhayana Srauta Sutra, Fasc. 1-2 @ /6/ each | ... ... | 0 | 12 |
| *Bhāmati, (Text) Fasc. 4-8 @ /6/ each | ... ... ... | 1 | 14 |
| Bhāṭṭa Dipikā Vol. 1, Fasc. 1-4 | ... ... ... ... | 1 | 8 |
| Bṛhaddēvatā (Text) Fasc. 1-4 @ /6/ each | ... ... ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1-6 @ /6/ each | ... ... | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1-2 | ... ... ... | 0 | 12 |
| Çatadusani, Fasc. 1 | ... ... ... ... ... | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each | ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. III, Fasc. 1-4 | ... | 4 | 2 |
| Çatasahasrika-prajnaparamita (Text) Part I, Fasc. 1-7 @ /6/ each | ... | 2 | 10 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18. Part II, Fasc. 1-10 @ /6/ each; Vol IV, Fasc. 1 | ... ... | 20 | 4 |
| Çlokavartika, (English) Fasc. 1-4 | ... ... ... ... | 3 | 0 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4-17 @ /6/ each | ... | 5 | 4 |
| Ditto Çānkhāyana, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4 @ /6/ each Vol 4, Fasc. 1, | ... ... | 6 | 0 |
| Çri Bhāshyam, (Text) Fasc. 1-3 @ /6/ each | ... ... ... | 1 | 2 |
| Dan Kriya Kaumudi, Fasc. 1-2 | ... ... ... ... | 0 | 12 |
| Gadadhara Paddhati Kālasāra, Vol I, Fasc. 1-6... | ... ... | 2 | 4 |
| Kāla Mādhava, (Text) Fasc. 1-4 @ /6/ each | ... ... ... | 1 | 8 |
| Kāla Viveka, Fasc. 1-6 | ... ... ... ... | 2 | 4 |
| Kātantra, (Text) Fasc. 1-6 @ /12/ each | ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ /12/ each | ... ... | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1-9 @ /6/ each | ... ... ... | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1-3 @ /12/ each | ... ... | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1-11 @ /6/ each... | ... ... | 4 | 2 |
| Mahā-bhāṣya-pradipōdyōta, (Text) Fasc. 1-9 & Vol. II, Fasc. 1-11 @ /6/ each | ... ... ... ... ... ... | 7 | 8 |
| Manuṭikā Sangraha, (Text) Fasc. 1-3 @ /6/ each | ... ... | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-8 @ /12 each | ... ... | 6 | 0 |
| *Mimāṃsā Darçana, (Text) Fasc. 7-19 @ /6/ each | ... ... | 4 | 14 |
| [illegible]yavārtika, (Text) Fasc. 1-6 @ /6/ | ... ... ... | 2 | 4 |
| [illegible]rukta, (Text) Vol. III, Fasc. 1-6; Vol. IV, Fasc. 1-8 @ /6/ each | ... | 5 | 4 |
| [illegible]yacarapaddhati Fasc. 1-7 (Text) @ /6/ | ... ... ... | 2 | 10 |
| [illegible]yacarapradiph Fasc. 1-4 | ... ... ... ... | 1 | 8 |
| [illegible]yabinduṭikā, (Text) | ... ... ... ... | 0 | 10 |
| [illegible] Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-3 @ /6/ each | ... ... ... ... | 3 | 6 |

**तच्छस्त्रं मम कायश्च द्वयं दुःखस्य कारणं ।**
**तेन शस्त्रं मया कायो गृहीतः कुत्र कुप्यते ॥ ४३**

अविकलकारणसामग्री हि सर्वकार्यस्य कारणमिति प्रमाणपरिनिश्चितं । सा चात्र तथाविधा विद्यते । तथा हि तस्यापकारिणः शस्त्रं खड्गादि मम कायश्च । एतद्द्वयं सामग्रीरूपं दुःखस्य कारणं । इति समर्थकारणसद्भावे ऽपि कार्यं कथं नोत्पद्येत । अन्यथा तत्तस्य कारणमेव न स्यात् । [1]ततोऽन्यदपि तत उत्पाद्योगः । तस्माद्यदि कारणोपनायके कुप्यते तदा स्वात्मन्यपि कोपो युक्तः । यतः स्वयमपि दुःखकारणं वहत्युपनयति च भवान् । आत्मन्यकोपे परत्रापि न युक्त इति भावः ॥

प्रकारान्तरेणोक्तमेवार्थं स्पष्टयन्नाह ।

**गण्डोऽयं प्रतिमाकारो गृहीतो घट्टनासहः[2] ।**
**तृष्णान्धेन मया तत्र व्यथायां कुत्र कुप्यते ॥ ४४**

शरीराकृतिरयं पक्वगण्डो[3] मया गृहीतः । सर्वदुःखहेतुत्वात्सर्वोपमर्दसहः । आकोटनताडनादिभिरप्यभेद्यत्वात् । दुःखपरिहाराय सुखप्राप्तये च या तृष्णाभिलाषः । तदन्धेन पिहितप्रज्ञालोचनेन तस्यां व्यथायां सत्यां कुत्र कुप्यते । न हि गण्डस्य कुड्यादि[70b]संपर्कजे दुःखे क्वचिद्विवेकतः कोपो युक्तः ॥

---

1 = tatsāmagrīto, nyad api kāraṇaṁ syāt, tata... ?

2 Tib.: çu-ba mi-yi gzugs hdra-ba reg-tu mi-bzod sdug-bsnal-can = gaṇḍaḥ (= abscess) puruṣa(= çarīra)rūpasamaḥ sparçana-asahaḥ duḥkhī.... But Comm.: sarvopamardasahaḥ...abhedyatvāt. On pratimā, see *Çikṣās.* 358, 15; on gaṇḍa, *Aṅg. Nikāya* IV, 386.

3 Ms.: pakṣa°, but Tib.; çu-ba smin-pa.

अपि च। यः कार्येणानर्थी[1] तेन तत्कारणमेव परिहर्तव्यं भवेत्। अहं तु विपर्यस्तमतिरिति विमर्शमुपदर्शयन्नाह।

दुःखं नेच्छामि दुःखस्य हेतुमिच्छामि बालिशः।
स्वापराधागते दुःखे कस्मादन्यत्र कुप्यते॥ ४५

5 दुःखं दण्डाद्यभिघातजं नेच्छामि। तस्य पुनः कारणं शरीरं प्रत्यपकारणं चेच्छामि बालिश इति बालधर्मो विपर्यासः। तस्मात्कारणात्स्वकाये यद्दुःखं तत्स्वापराधागतमेव। इति कस्मादन्यत्र तत्सहकारिमात्रे कुप्यते॥

आत्मवधाय स्वयं संस्कृतशस्त्रस्यैवान्यत्र मम कोपो न युक्त
10 इत्याह।

असिपत्रवनं यद्वद्यथा नारकपक्षिणः।
मत्कर्मजनिता एव तथेदं कुत्र कुप्यते॥ ४६

असिपत्रवनं नरकसमुद्भवं। असय एव पत्राण्यस्येति कृत्वा। असिग्रहणं प्राधान्यात्। अन्यदपि शस्त्रं नारकदुःखहेतुर्यन्त्रं च[2]।
15 वने तस्मिन्निवासिनो गृध्रोलूकवायसादयः पक्षिणो यथा मत्कर्मजनिता एव दुःखहेतवो भवन्ति। नान्यदत्र दुःखकारणमस्ति। तथेदमपि परशस्त्रादिकं दुःखहेतुर्मत्कर्मजनितमेव। इति कुत्र कुप्यते।

---

1 Ms.: kāryeṇānadhī tena.; Tib.: hbras-bu don-du mi gñer-pa des...—(Byaṅ-chub, don-du gñer = prārthayed bodhim). Should the conjecture be right, *anarthin*, with a new meaning = anabhilāṣin.

2 Ms. yantraṁ evanasya tannivāsino.... But Tib: hkrul-hkhor daṅ mtshon-cha gzan-dag kyaṅ bzuṅ-ṅo (= gṛhitāni). nags-thsal de-na gnas......

इत्थमपि विपर्यास एवायमित्युपदर्शयितुमाह ।

मत्कर्मचोदिता एव जाता मय्यपकारिणः ।
येन यास्यन्ति नरकान्मयैवामी हता ननु ॥ ४७

येन मदीयेन कर्मणा चोदिताः प्रेरिता एव मयि पूर्वकृतापकारे ऽपकारिणो जाताः सन्तो नरकान्यास्यन्ति । तेन 5 मयैवामी अपकारिणो हता ननु । स्वचित्तं संबोधयति । नामीभिरहं हतः । अयमभिप्रायः । यदि नाकरिष्यमहमीदृशं कर्म तदेतेऽपि नापकारिणो ऽभविष्यन्निति । मत्कृतेनैव कर्मणापकारिणो भवन्ति ॥

उपकारिष्वेव [71a] मोहादपकारिबुद्धिर्ममेति कारिका- 10 द्वयेन दर्शयन्नाह ।

एतानाश्रित्य मे पापं क्षीयते क्षमतो बहु ।
मामाश्रित्य तु यान्त्येते नरकान् [1]दीर्घवेदनान् ॥ ४८
अहमेवापकार्येषां [2]ममैते चोपकारिणः ।
कस्माद्विपर्ययं कृत्वा खलचेतः प्रकुप्यसि ॥ ४९ 15

एतानपकारिण आश्रित्य निमित्तीकृत्य । मम पापं पूर्वजन्मकृतपरापकारजनितं क्षीयते तद्दुःखानुभवनविपाकेन क्षयं याति । क्षमतः क्षान्तिमालम्बमानस्य । बहु अनेकपर्यायेण कृतं ।

---

1 According to the Comm.: tīvra°.
2 So M. L[3].—Minaev: mayaito.

मामाश्रित्य मत्कर्मचोदिता एवमप्यपकारं कृत्वा पुनरेते नरकान् तीव्रवेदनान् दुःसहदुःखानुभवान् यान्ति ॥ अत उक्तक्रमेण अहमेवापकार्येषामित्यादि सुबोधं ॥

ननु यद्यपकारी भवान् तर्हि भवत एव नरकगमनमुचितं
5 न त्वेषामित्याह ।

भवेन्ममाशयगुणो[1] न यामि नरकान्यदि[2] ।
एषामत्र किमायातं यद्यात्मा रक्षितो मया ॥ ५०

या प्रत्यपकारनिवृत्तिनिष्ठा एतन्ममाशयमाहात्म्यं नरक-
गतिनिवृत्तिहेतुः । नरकान्न यामि तदात्माशयमाहात्म्यबलेन ।
10 न तु पुनरेषां दुराशयतया नरकेषु ममापतनमिति भावः ।
एतदेवाह । एषामित्यादिना ॥ अयमत्र समुदायार्थः । यद्यह-
मपकारी सन्नपि[3] केन चिदुपायकौशलेन नरकान्न यामि ।
तदैषामुपकारिणां[4] किमायातं । किमपचीयते । का क्षतिरित्यर्थः ।
मया तावदेकेन [रक्षिता न] भवन्तामन्ये[5] रक्षित आत्मा च
15 भवेत् । न चैतावता किं चिदेषां न्यूनाधिकं गुणदोषेषु स्यात् ॥

---

1 Minaesv : āçrayaguṇo. ; Tib. : bsam-pa = M. L[8] : āçaya°.

2 Tib. : gal-te bdag-la bsam-pa yi yon-tan yod na, dmyal mi hgro : yadi mayy āçayaguṇo bhaven, narakam na yāmi.

3 As said *supra* l. 3.

4 Possibly apakāriṇām ; but the *apakāriṇaḥ* are said to be *upakāriṇaḥ*.

5 Ms. illegible and from a second hand : bhavatām anyaṁ r°.—Tib. : re-zig bdag-ñid gcig-pas khyed-cag gzan ni ma bsruṅs-la, bdag-ñid ni bsruṅ-ba yin te = tāvad ātmanā ekena anyasmin eva na rakṣite ātmā eva rakṣito bhavet.—kyed-cag = plural of the pronoun of the second person the Tib. translator failed to understand this clause.—According to Prof. Kern : mayā tāvad ekena [na] bhavatā, manye, rakṣita ātmā ca bhavet.

ननु यदि नामैवं तथापि भवतो ऽपि न युक्तमात्मरक्षण-मुपकारिजनस्य तथा । इत्याशङ्क्याह ।

**अथ प्रत्यपकारी[1] स्यां तथाप्येते न रक्षिताः ।**
**हीयते[2] चापि मे चर्या तस्मान्नष्टास्तपस्विनः ॥ ५१**

यदि दण्डादिघा[71b]तं कुर्वंस्तु प्रत्यपकारी भवेयं । तथाप्येते न रक्षिता भवन्ति । न कश्चिदेषां प्रतीकारो नरकगमनादिषु कृतः स्यात् ॥ प्रत्युत । ताडितेनापि मया न प्रतिताडितव्यं । तथा । सर्वसत्त्वेषु न मैत्रचित्तं मया निक्षेप्तव्यं[3] । अन्ततो न दग्धस्थूणायामपि प्रतिघचित्तमुत्पादयितव्यं[4] । इत्यादेर्बोधिसत्त्वचर्याया मम हानिरेव स्यात् ॥ तस्मादेतर्हि प्रतीकारोपायाभावात्तपस्विनो वराका रक्षितुमशक्यत्वान्नष्टा दुर्गतिपतिता एव । इत्युपेक्ष्यन्ते[5] तावदिदानीं । पश्चात्तदुपायमधिगम्य तत्करिष्यामि यथैषां दुःखमणुमात्रकमपि न स्यात् ॥

तदेवं परापकारमर्षणक्षान्तिं प्रतिपाद्य[6] । अधुना धर्मनिध्यानक्षान्तिमुपदर्शयितुमाह ।

**मनो हन्तुममूर्तत्वान्न शक्यं केन चित्क्व चित् ।**
**शरीराभिनिवेशात्तु कायदुःखेन[7] बाध्यते ॥ ५२**

1 Minaev : pratyayakārī.—L² : syāt tathā...

2 L² : kṣīyate.

3 Ms. : mayā niçcitavyam ; but Tib. : spaṅs-par mi-bya-ba.

4 Cp. VI, 1, *in fine*.

5 Ex conj. (= na sattvāpekṣā kriyate). Ms. : upekṣante—Tib. : de-ltar-na re-ẓig btaṅ-sñoms-su byas la : evaṁ tāvad upekṣāṁ kṛtvā.

6 Cp. ad VI, 8 and 35.

7 Ex conj.—Minaev, M, L² : cittaṁ duḥkhena..., L¹ Dev : kāyo.—Tib. : lus hdi sdug-bsṅal-dag-gis gnod = kāyo 'yaṁ duḥkhair bādhyate.

द्विविधं दुःखमविचारतो बाधकमुपजायते। कायिकं मानसिकं चेति। तत्र मनसि न कश्चिद्दुःखादिकं दातुं शक्तः। अमूर्तत्वान्मनसः। इति तदुद्भवं दुःखं परमार्थतो न संभवति। कल्पनाकृतं तु दौर्मनस्यादिकं विद्यते। एतदेव दर्शयति। शरीरेत्यादिना। ममेदं शरीरमिति विकल्पाभ्यासवासनावशात् कायदुःखेन चित्तं विहन्यते॥

[1]तथापि प्रतिनियतमेव दुःखकारणमित्याह।

**न्यक्कारः[2] परुषं वाक्यमयशश्चेत्ययं गणः।**
**कायं न बाधते तेन चेतः कस्मात्प्रकुप्यसि॥ ५३**

न्यक्कारादिगणः समूहः कायस्य दुःखहेतुर्न भवति। न हि कायस्यायं कं चिदुपघातं करोतीति येन तेन चेतः कस्माद्धेतोः प्रकुप्यसि॥

अथापि स्यात्। यदि नाम न्यक्कारादयः कायस्य बाधका न भवन्ति [72a] तथापि तत्कृता मयि लोकानामप्रसन्नं चित्तमुत्पद्यते। इति मया नेष्यन्ते। इत्याशङ्क्याह।

**मय्यप्रसादो योऽन्येषां स किं मां भक्षयिष्यति।[3]**
**इह जन्मान्तरे वापि येनासौ मे ऽनभीप्सितः॥ ५४**

भवतु नामैवं तथापि विचारणीयमेव। मयि न्यक्कारादिश्रवणाद्यो ऽयमप्रसादो जनानां स किं मां भक्षयिष्यतीहलोके

---

[1] tatra = kāye.

[2] Minaev: nyakkāraparuṣaṁ vākyam—M.: nyakkāraḥ.—Tib.: brñas daṅ thsig-rtsub smra-ba daṅ.

[3] Tib.: bdag-la za-bar mi byed na, bdag ni çii-phyir de mi hdod.

परलोके वा। येनासौ लोकाप्रसादो ममाप्रियः। इति विचार्य न कर्तव्यो ऽत्राभिनिवेशः॥

अस्ति वाचाभिनिवेशकारणं लाभविघातो नामेत्याह।

**लाभान्तरायकारित्वाद्यद्यसौ मे ऽनभीप्सितः।**
**नङ्क्ष्यतीहैव मे लाभः पापं तु स्थास्यति ध्रुवं॥५५** 5

तथा हि न्यक्कारादिश्रवणादप्रसादो लोकानां। तस्माच्च लाभोपनामनवैमुख्यं। ततो ऽसौ न्यक्कारादिर्गणो ममानिष्ट इति चेत्। तदयुक्तं। नङ्क्ष्यति विनश्वरधर्मतयापगमिष्यति। इहैव प्रतिनियतैरेव दिनैर्मम लाभः। न तु परलोकानुबन्धी भविष्यति। तन्निमित्तं न्यक्कारादिकर्तृषु क्रुध्यतो यत्पापं तदेव 10 परं स्थास्यति। परलोकानुबन्धि भविष्यति। ध्रुवमिति अपरिभुक्ते तत्फले तस्याविनाशात्॥

इदमपि चाचालोपनीयं।

**वरमद्यैव मे मृत्युर्न मिथ्याजीवितं[1] चिरं।**
**यस्माच्चिरमपि स्थित्वा मृत्युदुःखं तदेव मे॥५६** 15

इदमेव वरं श्रेष्ठं यल्लाभाभावादस्मिन्नेवाहनि मे मरणमस्तु। न तु पुनः परापकारद्वारेण लाभप्रतिलम्भान्मिथ्याजीवितं[1] चिरं दीर्घकालं। कुतः। यस्माद्बहुतरकालमपि जीवित्वा मरणान्तं

---

1 Mithyā-ājīva is well-known, see *Çikṣās.* 267, 11, *Saṁ. n.* III, 239; *Majjh.* III, 75.

हि जीवितं[1] । इत्यवश्यंभाविनो मृत्योर्दुःखं तदेव मम । अल्प-
स्याद्वर्षशतात्यये भविष्यति तदेवेदानीं मम म्रियमाणस्य । इति
चिरजीवितेष्वविशेषः ।

इतोऽप्यविशेष एवेति श्लोकद्वयेन द[72b]र्शयन्नाह ।

5 स्वप्ने वर्षशतं सौख्यं भुक्त्वा यश्च विबुध्यते ।
मुहूर्तमपरो यश्च सुखी भूत्वा विबुध्यते ॥ ५७
ननु निवर्तते[2] सौख्यं द्वयोरपि विबुद्धयोः ।
सैवोपमा मृत्युकाले चिरजीव्यल्पजीविनोः ॥ ५८

यथा कश्चित्स्वप्नोपलब्धं वर्षशतं सुखमुपभुज्य विबुध्यते ।
10 अन्यः पुनः क्षणमात्रं । स तावन्मात्रेण सुखिनमात्मानं मन्यते ।
अनयोर्द्वयोरपि स्वप्नोपलब्धोपभुक्तसुखयोः प्रतिविबुद्धयोः सतोः
तदुपलब्धं विनष्टं सुखं न निवर्तते । जाग्रदवस्थायां नानुवर्तते ।
स्मरणमात्रावशेषत्वात् । सैवोपमा स्वप्नोपलब्धसुखयोरिव पुरु-
षयोर्मृत्युकाले मरणसमये चिरजीविनो ऽल्पजीविनश्च ॥ ननु[3]
15 निवर्तते सौख्यमिति । स्वार्थेऽप्यण्[4] ॥

इत्यलं मित्याजीवितेन[5] ॥ अस्मादपि लाभालाभयोर्न
कश्चिद्विशेष इत्युपदर्शयन्नाह ।

---

1 This formula which puzzled James d' Alwis (cp. Max Müller, *Dhammapada*, 148) is common in Sanskrit and Pāli books.

2 Minaev : na tan nivartate L[3] : pravartate.—See Commentary.

3 Ms. *tu.*

4 saukhyam = sukham.

5 See VI, 56.

**लब्ध्वापि च बहूँल्लाभान् चिरं भुक्त्वा सुखान्यपि।**
**रिक्तहस्तश्च नग्नश्च यास्यामि मुषितो यथा॥ ५९॥**

प्रचुरतरलाभान् लब्ध्वापि समासाद्य चिरकालमुपभुज्य सुखान्यपि। पुनर्मृत्युमधिगम्य रिक्तहस्तः तुच्छहस्तः। न तस्माल्लाभादीषदपि पाथेयं गृहीतं। नापि सुखानां किंचिदवशिष्टमवस्थितं। कटिसूत्रकमात्रमपि[1] न परिशेषितमिति नग्नश्च चौरैः परिमुषित इवास्माल्लोकात्परं लोकं यास्यामि॥

स्यादेतत्। अस्त्येव विशेषो लाभस्य चीवरादीनामविघाता-दायुःसंस्काराणामुपस्तम्भाच्चिरतरकालं जीवितं स्यात्। ततश्च पूर्वकृतपापस्य विदूषणासमुदाचारादिना परिक्षयं शिक्षासंवर-परिरक्षणेन बोधिचित्तसेवनादिना च कुशलपक्षस्य च वृद्धिं कुर्यां। यदुक्तं।

यावच्चिरं जीवति धर्मचारी
तावत्प्रसूते कुशलप्रवाहं। इति [73a]।[2]

अतो लाभान्तरायकारिणि युक्त एव प्रद्वेष इत्याशङ्क्याह।

**पापक्षयं च पुण्यं च लाभाज्जीवन् करोमि चेत्।**

लाभाद्युपष्टम्भेन जीवन् चिरकालं पापक्षयं च पुण्यं च करोमीत्यादि मन्यसे। नन्वेतदितः समधिकं दोषमपचयतामि-धीयत इत्याह

1 Kaṭisūtra = girdle, "pagne."—Form in °ka is new.

2 I cannot give exact reference.

पुण्यक्षयश्च पापं च लाभाय क्रुध्यतो ननु ॥ ६०

लाभार्थं लाभनिमित्तं तदन्तरायकारिणि द्वेषं कुर्वतः सुकृतक्षय एवोपजायते । यदुक्तं सर्वमेतत्सुचरितमित्यादिना[1] । अयं तु विशेषः । अशान्तिसमुद्भवस्य पापस्य राशिरभिवर्धते च ॥

5 अथापि स्याद्यथा कथं चिरावचिरकालं लाभाज्जीवितं स्यात् । तावतैव नः प्रयोजनं । इत्याह ।

यदर्थमेव जीवामि तदेव यदि नश्यति ।
किं तेन जीवितेनापि केवलाशुभकारिणा ॥ ६१

न खलु बोधिसत्त्वस्येतरसत्त्ववज्जीवितं निःप्रयोजनमेवाभि-
10 लषितं । किं तर्हि संभाराभिसंवर्धनार्थं पापक्षयार्थं च । तद्यदि सुकृतक्षयनिमित्तमेव तत्स्यात् । तदा किं तेन तादृशेन जीवितेनापि केवलाशुभकर्मकरणशीलेन । निन्दितमेव तदिति भावः ॥

स्यादेतत् । न लाभान्तरायकारितया ममावर्णवादिनि प्रतिघचित्तमुत्पद्यते । किं तु गुणप्रच्छादनादिकर्मणा दुःख-
15 हेतुत्वात् । इत्याह ।

अवर्णवादिनि द्वेषः सत्त्वान्नाशयतीति चेत् ।
परायशस्करे ऽप्येवं कोपस्ते किं न जायते ॥ ६२

यथयोऽभिधायिनि योऽयं भवतो विद्वेषः । सोऽवर्णवादी

1 See *supra* VI, 1.

दोषाविष्करणाद्गुणप्रच्छादनाच्च त्वां[1] नाशयति । इति मत्वा द्वेषादि स तन्निमित्तकः ॥ अथ वा सत्त्वान्[1] लोकान्नाशयति[2] । अवर्णवादेन मयि निपातयति । स्वयमप्रसन्नचित्तस्तेषामपि चित्तमप्रसादयतीत्यर्थः । इत्यवर्णवादिनि द्वेषयेत् । उच्यते । तदा [73b] योऽपि परेषामन्यसत्त्वानामयशः प्रकाशयति तथापि कोपस्ते किं न जायते । सोऽपि चावर्णवादी सत्त्वान्नाशयति । तदस्मिन्नपि युक्तरूप एव कोपः ॥

अत्रोत्तरमाशङ्क्याह

**परायत्ताप्रसादत्वादप्रसादिषु ते क्षमा ।**

परेष्वन्येषु सत्त्वेष्वायत्त आश्रितोऽप्रसादोऽस्येति । अन्यसत्त्वान् विषयीकृत्य समुत्पन्न इति । तस्य भावस्तत्त्वं तस्मात् । पराश्रिताप्रसादत्वादप्रसादिष्वप्रसन्नचित्तेष्ववर्णवादिषु तव क्षमा क्षान्तिरुत्पद्यते । आत्मचित्तमेव दूष्यति । अथाह ।

**क्लेशोत्पादपरायत्ते क्षमा नावर्णवादिनि ॥ ६३**

यदि यः परायत्ताप्रसादः तत्र क्षमा भवतो भवति । तदा तस्मिन्नवर्णवादिनि किं न क्षमा । किंरूपे । क्लेशोत्पादनपरायत्ते क्लेशानामुत्पादपरतन्त्रे । परायत्ताप्रसादत्वं क्षमाहेतुस्तुल्य-मुभयत्रापि । इत्यर्थः ॥[3]

---

1 There are, according to the Comm., two acceptable readings: sa tvāṃ nāçayati, sattvān (= sems-can) nāçayati. There is no obvious difference in the Ms. between *tva* and *ttva*.

2 As the *aprasāda* is a cause of *vināça*. Cp. *supra ad* V, 80.

3 "Yo yasminn aprasannacittaḥ, na tasminn ev āprasannacittas, tatkleçeṣu tv aprasannaḥ." Such I take to be the meaning of the sentence.

प्रतिमाद्युपघातकारिषु सद्धर्मघातादपि प्रतिघचित्तं नोत्पाद-यितव्यमित्याह ।

प्रतिमास्तूपसद्धर्मनाशकाक्रोशकेषु च ।
न युज्यते मम द्वेषो बुद्धादीनां न हि व्यथा ॥ ६४[1]

5 नाशका विलोपयितारः । आक्रोशका दोषवक्तारो वैरूप्या-भिधायिनः । तेषु न युक्तो मम द्वेषः । कुतः । यस्माद्बुद्धादीनां बोधिसत्त्वार्यश्रावकप्रत्येकबुद्धानां वितथाभिनिवेशप्रसूतात्मग्राह-निवृत्तेरभिष्वङ्गाभावाच्च व्यथा चित्तपीडालक्षणं दौर्मनस्यं नास्ति । इति भावः ॥ अतः प्रतिमादिविनाशकेषु द्वेषचित्तं
10 नोत्पादयितव्यं । तथा विरुद्धधर्मकारिषु[2] करुणैव तु युज्यते तेषु साधूनां । अन्यथा तत्र विशेषाभावात्पापमेव केवलमुपजायते । यदि पुनर्धर्मतो निवारयितुं शक्यते । तदा न दोषः ॥

यदपि च धर्मकामतया गुरुमातापित्राद्युपघातकारिषु द्वेष-चित्तमुत्पद्यते तदपि विनिवा[ 74a ]र्यमेव । इत्याह ।

15 गुरुसालोहितादीनां प्रियाणां चापकारिषु ।
पूर्ववत्प्रत्ययोत्पादं दृष्ट्वा कोपं निवारयेत् ॥ ६५

गुरवो धर्ममार्गोपदेष्टारोऽकुशलपक्षनिवर्तयितारः । सालो-

---

1 Cp. *Brahmajālasutta*, I, 1, 5: "Brethren, if outsiders should speak against me, or against the Doctrine, or against the Order, you should not on that account either bear malice, or suffer heart-breaking, or feel ill-will. If you, on that account, should be angry and hurt, that would stand in the way of your own self-conquest" (Rhys Davids).

2 The compound is new.

स्थिताः सोदरा । अन्येऽपि ज्ञातिस्वगोत्रबान्धवादयः । तेषामप-
कारिषु । तथा प्रियाणां प्रेमस्थानानां पापकारिषु कोपं
निवारयेत् । इति संबन्धः । कथं पूर्ववत्प्रत्ययोत्पादं दृष्ट्वा ।
यदुक्तं ये के चिदपराधास्तेत्यादिना[1] । अतः सर्वेऽप्यमी पूर्वक-
र्मोपजनितमेव फलमुपभुञ्जते । नात्र कश्चित्प्रतीकारहेतुरस्ति ॥ 5
तदनेन यथापरसमये देवगुरुद्विजातिमातापितृप्रभृतीनामर्थे पापं
कुर्वतोऽपि न दोष इति मतं[2] । न तथेहाभिमतमित्युक्तं भवति ।

किं चेदमपि वस्तुतत्त्वं मनसिकुर्वता न सत्त्वेषु चित्तं दूष-
यितव्यमित्याह ।

**चेतनाचेतनकृता देहिनां नियता व्यथा । 10**
**सा व्यथा चेतने दृष्टा क्षमस्वैनां व्यथामतः[3] ॥ ६६**

समस्तकार्यस्यान्वयव्यतिरेकाभ्यां अनकत्वेनावधारितं साम-
ग्रीलक्षणं कारणं । सा च सामग्री वस्तुधर्मतया का चित् चित्त-
मर्थस्वभावा । तत्र चेतनेन कृता हस्तपादादिप्रहारेण । अचे-
तनेन दुष्टग्रहरोगादिना । तथापि चेतनाव्यापारोऽस्त्येव । 15
साक्षात्पारम्पर्यकृतस्तु विशेषः । स्वयमेव यदृच्छया वा लोष्टकु-
ड्याद्यभिघातजनिता वा देहिनां शरीरिणां नियता व्यथा
नियमेन समुत्पद्यते । नान्यदितो व्यथाकारणमस्ति ॥ सा चैवं
द्विविधकारणसामग्रीप्रसूतापि चेतने सविज्ञानके काये दृष्टा
प्रमाणपरिनिश्चिता । अतस्तदेव तदुत्पत्तिस्थानं । नान्यत् । 20

---

1 See *supra* VI, 15.

2 I cannot give reference but to V, 84.

3 Minaev has: vyathāṁ manaḥ — See the Commentary

अचेतने वेदनायोगात् । ततो यत्रैवोत्पत्तिस्थानं तत्रैव भवति । नान्यत्र । यथा पङ्के पङ्कजं न स्थले ॥ अतोऽस्माद्या- यात्मनस्तु सहस्रैनामनन्तरकथितो[74b]भयरूपां[1] व्यथां ॥

तदानीमुभयोरपि साधारणदूषणतया क्वचिदपि कोपो 5 न युक्त इति कथयितुमाह ।

**मोहादेकेऽपराध्यन्ति कुप्यन्त्यन्येऽपि मोहिताः[2] ।**
**ब्रूमः कमेषु[3] निर्दोषं कं वा ब्रूमोऽपराधिनं ॥ ६७**

आत्मात्मीयग्रहाभिनिवेशविपर्यासादेके केचिदपराध्यन्ति दण्डादिना । समाक्रोशादि वा वदन्तः[4] सदोषमात्मानं कुर्वन्ति । 10 अन्ये पुनस्तदपराधेन कुप्यन्ति रुष्यन्ति । विमोहिता मोहादेव स्वकृतकर्मफलसंबन्धमननुस्मरन्तोऽविद्यावरणात् । प्रतिताडना- क्रोशादिकमारभन्ते ॥ इत्थं ब्रूमः कमेषु क्लेशराक्षसावेश- वशीकृतेषु निर्दोषं । कं वा ब्रूमोऽपराधिनं दोषवन्तं । उभये- षामपि साधारणदोषत्वात् ॥

15 इदमपि चात्मगतमेव चिन्तयता प्रतिघचित्तं निवर्तयित- व्यमित्याह ।

**कस्मादेवं कृतं पूर्वं येनैवं बाध्यसे परैः ।**
**सर्वे कर्मपरायत्ताः कोऽहमत्रान्यथाकृतौ ॥ ६८**

---

[1] Ms. : kathitabhaya°; ubhaya from the Tibetan.

[2] So Min.—According to the Commentary : anye vimohitāḥ.

[3] M, L[3] : kāmeṣu.

[4] Ms. : vadataḥ—Tib. : brdeg-pa am brgyad-bkag smra-bai = tāḍanaṁ nigrahaṁ vā vadantaḥ. . . .

कस्मात्कारणात् किमित्येवमेतत्फलं हेतुकर्म कृतं । येनेति लोकोक्तिरेषा[1] । यदित्यस्यार्थे यदेवं । यदि वा येन कर्मणा-मर्थेन हेतुना । आक्रोशबन्धनताडनादिभिः बाध्यसे पीड्यसे परैरन्यैः । ननु यदि नामैवं तथापि प्रतीकारो युक्त इत्याह सर्व इत्यादि । सर्वे दुःखहेतवः कर्मप्रत्ययोपजनितप्रवृत्तयः । इति कोऽहमपान्यथाकर्तौ[2] तत्फलनिवर्तनाय । न कश्चित् । फलदा-नोन्मुखस्य कर्मणः केन चिन्निवर्तयितुमशक्यत्वात् ॥

इदं पुनरत्र युक्तरूपमित्याह ।

**एवं बुद्धा[3] तु पुण्येषु तथा यत्नं करोम्यहं ।**
**येन सर्वे भविष्यन्ति मैत्रचित्ताः परस्परं ॥ ६९**

एते सत्त्वाः कर्मक्लेशपरायत्ताः परस्परमसमञ्जसकर्म-कारिणो निवर्तयितुमशक्या इति । एवं बुद्धा ज्ञात्वा पुनः पुण्येषु कुशलेषु कर्मसु तथा यत्नं करोम्यहं । तेन प्रकारेण वीर्यं समारभे । येन तथाविधं सामर्थ्यं [75a] प्रतिलभ्य सन्मार्गे प्रवर्तिताः सन्तः सर्वे मैत्रचित्ता हितसुखविधानतत्पराः परस्पर-मन्योन्यं भविष्यन्ति ॥

द्रोहचित्तं विनिवर्त्य प्रियवस्तूपघातकारिणि लौकिकोदा-हरणेन द्वेषं निवर्तयेदिति श्लोकद्वयमुपदर्शयन्नाह ।

---

1 Tib.: hjig-rten-pai smra-bai thsul-lo

2 Tib. Text-translation: bdag-gis hdi-la ci-ste bkon? = aham atra kim vairī?

3 Tib. mthoṅ-nas = dṛṣṭvā.

दह्यमाने गृहे यद्वदग्निर्गत्वा गृहान्तरं ।
तृणादौ यत्र सज्येत[1] तदाकृष्यापनीयते ॥ ७०
एवं चित्तं यदासङ्गाद्दह्यते द्वेषवह्निना ।
तत्क्षणं तत्परित्याज्यं पुण्यात्मोद्दाहशङ्कया ॥ ७१

5 एकस्मिन् गृहे ऽग्निना दह्यमाने यथा तस्माद्गृहादन्यद्गृहं गृहान्तरं गत्वा । अग्निर्यत्र तृणकाष्ठादौ सज्यते लगति । तदन्तर्गतमन्यदपि वस्तु मा धाक्षीदिति शङ्कया । तदाकृष्याप-नीयते पृथक्कृत्वा निर्धार्यते । इति दृष्टक्रमं प्रकृतेऽपि योज-यन्नाह । एवमुक्तोदाहरणन्यायेन चित्तं यदा यत्र वस्तुन
10 आसङ्गादासक्तो दह्यते परितप्यते द्वेषवह्निना प्रतिघानलेन तदासङ्गस्थानं वस्तु तत्क्षणं न कालान्तरपरिलम्बेन परित्याज्यं । तत्राभिनिवेशः परिहर्तव्यः । किं कारणं । पुण्यस्यात्मा शरीरं पुण्यस्कन्ध इति यावत् । तस्योक्तक्रमेणोद्दाहः परिक्षयो मा भूत् । अन्यथा गृहान्तर्गतपदार्थवत् प्रद्वेषवह्निस्तमपि दहेत् ॥
15 अपि च । लाभ एवायं लब्धो यन्मनुष्यदुःखैर्नरकफलं कर्म विपच्यते । इति प्रतिपादयन्नाह ।

मारणीयः करं छित्त्वा मुक्तश्चेत्किमभद्रकं ।
मनुष्यदुःखैर्नरकान्मुक्तश्चेत्किमभद्रकं ॥ ७२

---

[1] Minaev: sajjeta; Ms.: sahyeta. Tib.: rtsva-sogs gaṅ la mched-byed-pa.—mched-par-byed-pa = ausbreiten, weithin verbreiten (Schmidt).—Mched-pai me = eine Feuersbrunst.

[2] Minaev: tathākṛṣya; but L[2], M: tadāk°; Tib.: de-ni phyuṅ-ste doṅ'-yin.—Phyuṅ-ba (hbyin) = avakṛṣṭa, nirvāsita.

यो हि मारणमर्हति स यदि हस्तमात्रं छित्वा मुच्यते । तदा न[1] का चित्क्षतिरस्य । प्रत्युत लब्धलाभमात्मानं मन्यते । अत्यल्पमिदं मरणदुःखात्करच्छेदनदुःखमिति । तथा योऽपि मनुष्यदुःखं ताडनबन्धनतिरस्कारादिकृतमनुभूय नरकदुःखा-विमुक्तो भवति । तस्यापि न किं चिदपचीयते । न किं चिदिदं दुःखं नरकदुःखात् । सुखमेव तत् । ततो यदि विच-[75b]क्षणः स्यात् । तदा सौमनस्यमेवात्र युक्तमस्य ॥

अथापि स्यात् । न मया स्वल्पमात्रेऽपि दुःखे क्षमा कर्तुं शक्यत इति । अत्राह ।

यद्येतन्मात्रमेवाद्य दुःखं सोढुं न पार्यते ।
[2]तन्नारकव्यथाहेतुः क्रोधः कस्मान्न वार्यते ॥ ७३

[3]खटचपेटलोष्टादिप्रहारकृतमीषन्मात्रमपि दुःखमिदानीं सोढुं मर्षितुं न पार्यते न शक्यते । तदत्र भवन्तं पृच्छामः । यद्येवमेव तदयं नारकदुःखसंवर्तनीयः क्रोधः कोपः कस्मात्कारणान्न वार्यते । अयमेव हानितरां नरकेषु दुःखदायक इति दुःखभीरूणामेव [क्रोधं] निवर्तयितुं युक्तं स्यात् ॥

किं च । यद्यपि सोढुं न शक्यते तथापि तद्धेतुककर्मसंभवादनिच्छतोऽपि दुःखमापतयिष्यति भवतः । न च किं चित्फलमुत्पत्स्यते ।

---

1 Ms.: na kadā cit.

2 Tib.: des-na: tasmāt.

3 capeṭa, Apte: The palm of the hand with the fingers extended; khaṭaka = the half-closed hand.—khaṭa given in P.W. from Lexx. only.

सर्वथाप्युपगम्य महार्थलाभो भविष्यतीति श्लोकद्वयेन शिक्षयितुमाह ।

[1]कोपार्थमेवमेवाहं नरकेषु सहस्रशः ।
कारितोऽस्मि[2] न चात्मार्थः परार्थो वा कृतो मया ॥ ७४
न चेदं तादृशं दुःखं महार्थं च करिष्यति ।
जगद्दुःखहरे दुःखे प्रीतिरेवात्र युज्यते[3] ॥ ७५

कोपनिमित्तमेव । एवमेव निष्फलमेव । नरकेषु संजीवादिषु । सहस्रशः अनेकसहस्रवारं । अहं कारितः छेदनभेदनपाटनादिकारणाभिः पीडितः । एवं दुःखमनुभवतापि मया न च नैवात्मार्थो दृष्टादृष्टफलसाधनः कृतो निष्पादितः । परस्यान्यस्य वार्थः सुखविधानलक्षणः । इति निष्प्रयोजनमेव नारकदुःखसहस्रशःपरिभवो जातः ।

तदत्रापि न तथैव ममासहिष्णुता युक्तेत्याह । इदं दुःखं नैव तादृशं यादृशं नरकसमुद्भवं । अपि च महार्थं सर्वसत्त्वहितसुखविधानभूतं बुद्धत्वं साधयिष्यति । अतो जगतो दुःखहरे त्रिजगत्पर्यापन्नसर्वसत्त्वसर्वदुःखप्रशमनकरे दुःखे प्रीतिरेवात्र युज्यते नारतिरिति भावः ॥

पर[76a]गुणश्रवणेर्ष्यामलप्रक्षालनायाह ।

---

1 Tib. hdod-pai don-du, as if: kāmārtham......

2 kārita = pīḍita.—Tib.: myos gyur kyaṅ; kyaṅ points to a reading: kārito' pi.—myos, wrongly for myoṅs?—myo-ba = mada.

3 Quoted ad IV, 39.

**यदि प्रीतिसुखं प्राप्तमन्यैः स्तुत्वा गुणोर्जितं[1]।**
**मनस्त्वमपि तं स्तुत्वा कस्मादेवं न हृष्यसि॥७६**

गुणाधिकं स्तुत्वा यदि प्रीतिसुखं कैश्चित्प्राप्तं। तदा हे मनः त्वमपि तद्गुणसंवर्णने[न][2] किमिति हर्षसुखं नानुभवसि। किमकाण्डमेव तदीर्ष्यानलज्वालायामात्मसंतानमिन्धनीकरोषि[3]॥ 5

ननु सर्वसुखस्यापथ्यात्मतया निषिद्धमेव सेवितुं। ततोऽहं सर्वसुखवैमुख्यादिदमपि नोपाददे। वक्ष्यति हि।

यत्र यत्र[4] रतिं याति मनः सुखविमोहितं।
तत्तत्सहस्रगुणितं दुःखं भूत्वोपतिष्ठते॥ इति[5]।

आह। 10

**इदं च ते हृष्टिसुखं निरवद्यं सुखोदयं।**
**न वारितं च गुणिभिः परावर्जनमुत्तमं॥७७**

न हि सर्वं हृष्टिसुखमपाकृतं[6]। अपि तु यत्सावद्यमकुशल-हेतुः। इदं च परगुणाश्रयं हृष्टिसुखं निरवद्यं तव। न चाकुशलहेतुः। अतः सुखोदयं सुखस्योदयो ऽस्मादिति कृत्वा। 15
अत एव न वारितं च गुणिभिर्भगवच्छासनविधिज्ञैः। अयमपरो

---

1 Minaev: guṇārjitam; M. L[3]: gaṇorjitam.—Ūrjita = adhika of the Commentary.

2 Ms.: saṁvarṇṇena.

3 Ātmasaṁtāna = ātmabhāva = ātmā; the self in his everlasting evolution.

4 Mss.: yatra tatra....

5 VIII, 18.

6 Ms.: Sukhaṁ mayā k°; Tib.: dgag-pa = niṣiddha.

स्य गुणः। यत्पराराधनमुत्तमं परगुणेषु प्रीत्या। गुणेष्वेव-मयममत्सरीति मन्यमाना अन्येऽपि सत्त्वा आवर्जिता भवन्ति॥ अतो युक्तमेवात्र प्रीतिसुखमुत्पादयितुं॥

स्यादेतत्। न परगुणेषु ममाक्षमा काचित्। किं तर्हि

5 तावत्तस्यैव सुखमेतदिति मया सोढुमशक्यमिति। अत्राह।

**तस्यैव सुखमित्येवं तवेदं यदि न प्रियं।**
**भृतिदानादिविरतेर्दृष्टादृष्ट[1] हतं भवेत्॥ ७८**

तस्यैव स्तुतिकर्तुः सुखमिति। एवमनेनाभिप्रायेण भवतो यदीदं परगुणस्तुतिप्रतिबद्धं सुखं न प्रियं। तदातिसंकटे

10 पतितो ऽसि। कथं। भृतिदानादिविरतेः। यदपि च भवतः स्वात्मसुखनिमित्तं सभृत्यादिषु भृतिदानं कर्ममूल्यदानं। तथोपकारिणि प्रत्युपकारकरणं। इत्यादेर्विरतेर्वैमुख्यात्। तदपि न कर्तव्यमेव स्यात्परसुखविद्वेषिण[ः] [76b]। यतस्ते-नापि तस्य सुखमेव संपद्यते। ततो दृष्टमैहिकं फलं। अदृष्टं

15 पारलौकिकं। उभयमपि हतं भवेत्परसुखसंपद्मर्षिणा[2]॥

किं च। मिथ्योत्तरमेवेदं भवत इति प्रतिपादयन्नाह।

**स्वगुणे कीर्त्यमाने च परसौख्यमपीच्छसि।**
**कीर्त्यमाने परगुणे स्वसौख्यमपि नेच्छसि॥ ७९**

---

[1] Minaey :...virate dṛṣṭa°. The first line is translated in Tib.: gzhan yaṅ de-ltar bde gyur zhes, gal-te khyod bde hdi mi hdod: anyo' py evaṁ sukhī iti yadi tava sukham idaṁ na priyam.

[2] Ms. saṁpadyam.°

यदि कश्चिद्भवतो गुणमुदीरयति । तदा तस्य परस्याभिष्ट-
मपि सौख्यमिच्छसि । अथ परगुणाननुवर्णयति । तदा पुन-
रीर्ष्याग्रस्तवितुद्यमानमानसः स्वसौख्यमपि नेच्छसि । यावत्तां
तावत्परसौख्यमित्यपि प्रायः[1] ॥ तस्मात्परसुखसंपदीर्ष्यैव भवतो ।
न स्तावकसुखासहिष्णुता ॥ 5

यदुक्तं ।

तवैव सुखमित्येवं तवेदं यदि न प्रियं । इति ।[2]

तत्र विशेषणदूषणमाह ।

बोधिचित्तं समुत्पाद्य सर्वसत्त्वसुखेच्छया ।
स्वयं लब्धसुखेष्वद्य कस्मात्सत्त्वेषु कुप्यसि ॥ ८० 10

इदमतिगर्हितमेव विशेषेण समुत्पादितबोधिचित्तस्य यत्पर-
सुखसंपदसहिष्णुता नाम । यतः सर्वसत्त्वास्त्रैधातुकान्तचराः
समस्तसुखसंपत्तिसंतर्पिता बुद्धत्वमधिगम्य मया कर्तव्या इति
मनसिकारेण बोधिचित्तमुत्पाद्यते[3] । तदुत्पाद्य कस्मात्सत्त्वेषु
कुप्यते । अद्येदानीं । किंभूतेषु प्रसादस्थानेषु स्वचित्तमभिप्रसाद्य 15
स्वयमात्मनैव प्राप्तसुखेषु । इत्यकरणीयमेव तत्परसुखवैमुख्यचित्तं
बोधिसत्त्वस्येति भावः ॥

यः पुनरुत्पादितबोधिचित्तोऽपि परस्य लाभसत्कार-

---

1 Ms.:..paraḥ saukhyam.
2 VI, 78.
3 Ms.: utpādayitum.

संततिमभिसमीक्ष्य तदीर्ष्याकषायितहृदयस्यैव प्रायेण दृश्यते । तत्र परिभाषणार्थमाह ।

**त्रैलोक्यपूज्यं बुद्धत्वं सत्त्वानां किल वाञ्छसि ।**
**सत्कारमित्वरं दृष्ट्वा तेषां किं परिदह्यसे[1] ॥ ८१**

5 अथ वा स्यादेतत् । न खलु मया तत्सुखमेव न मृष्यते । किं तर्हि तद्गुणोद्भावितान्यगुणश्रवणाभिप्रसन्नमानसैः[2] ते[77a]षा- मुपनामितं[3] लाभसत्कारमित्यपाह । त्रैलोक्येत्यादि ।[4]

त्रयो लोका एव । कामरूपारूप्यधातुलक्षणाः[5] । लोक- प्रतिष्ठा वा स्वर्गादिसंभवाः । त्रैलोक्यं । तत्समुदायो वा ।
10 तत्र पूजामर्हतीति पूज्यमभ्यर्चनीयं । अनेन सर्वातिशायित्वं प्रतिपादितं । तथाभूतं बुद्धत्वं सत्त्वानां किल वाञ्छसि । किले- त्यनेन विपर्ययं दृढारुचिं प्रकाशयति । सत्कारमित्युपलक्षणं लाभमपि । शेषं सुबोधं ।

लाभमभिसंधायाह ।

15 **पुष्णाति यस्त्वया पोष्यं तुभ्यमेव ददाति सः ।**
**कुटुम्बजीविनं[6] लब्ध्वा न हृष्यसि प्रकुप्यसि ॥ ८२**

---

[1] Minaev: parivṛjyase; but Tib. (gduṅ-par byed) confirms the reading of I.[3], M.

[2] ...çravaṇād abhi°... ?

[3] ...lābhasatkāram na mṛṣyate.

[4] It is rather strange that the stanza is introduced by two prefatory sentences.

[5] The same reading (arūpyadhātu) occurs *M. Vyut.* 155 (corrected in PW.K.F.

[6] Tib.: gñen-gyis htsho-ba = kuṭumbena jīvan—Cp. Pāli.

त्वया पौत्रीयं प्रियपुत्रकादिकं त्वदीयं यः पुष्णाति स तुभ्यमेव ददाति। तवैव तेनोपचयः कृतो भवेत्। अतस्त्वत्कुटुम्बजीविनं[1]। त्वदीयं कुटुम्बं जीवयति यस्तं तथाविधं पुरुषं लब्ध्वा प्राप्य प्रहृष्यसि न काक्वा[2] पृच्छति। प्रकुप्यसि न प्रहृष्यसे चेत्यर्थः। तथा प्रकृतेऽपि येन सर्वसत्त्वा आत्मीयत्वेन गृहीतास्तस्य तत्सुखैः सुखमेवोचितमिति॥

स्यादेतत्। बुद्धत्वमेव त्वया तेषां प्रतिज्ञातं। न तु पुनरन्यसुखमित्याशङ्क्याह।

स किं नेच्छति सत्त्वानां यस्तेषां बोधिमिच्छति।

नन्वेतदपि न सम्यक्। यस्मात्।

जगदद्य निमन्त्रितं मया सुगतत्वेन सुखेन चान्तरा[3]।

इति प्रतिज्ञातं। भवतु नामैवं। तथापि यः समुत्पादितबोधिचित्तस्तेषां सत्त्वानां बोधिं बुद्धत्वमिच्छति स किमन्यल्लौकिकलोकोत्तरमर्थजातं नेच्छति। अथ नैवमिष्यते। तदा बोधिचित्तमपि हीयते इत्याह।

बोधिचित्तं कुतस्तस्य यो ऽन्यसंपदि कुप्यति॥ ८६

बोधिचित्तं कुतस्तस्य मिथ्यैव बोधिचित्तप्रतिज्ञस्य। कस्य। यो ऽन्यसंपदि[4] कुप्यति। इतरविभूतौ लाभसत्कारप्रसूतायां।

---

1 Ms. taṁ ku°; but Tib. khyod-kyi.

2 Ms. kātkā or kākvā. Tib. has: zhes zur-gyis hdri-bao = indirectly (Jäschke). See Apte s. voc. kāku and infra ad VII, 19.

3 Supra III, 33.

4 Saṁpad = hbyor-ba.

इति मर्मचोदना[1] बोधिसत्त्वस्य कुशलकर्मनिष्पत्ति[77b]हेतुः ॥ अपि चापरस्य लाभसत्कारसंपदभावे ऽपि न भवतस्तदभाव-संभवः । तत्किमकारणमेव तद्विद्वेषिण्यात्मघाताय यत्नः क्रियते इति प्रतिपादयन्नाह ।

5 यदि तेन न तल्लब्धं स्थितं दानपतेर्गृहे ।
सर्वथापि न तत्ते ऽस्ति दत्तादत्तेन तेन किं ॥ ८४

यदि नाम तेन तवाक्षमाविषयेण यत्नेन तद्दीयमानं वस्तु न लब्धं । तथापि स्थितं दानपतेर्गृहे । भवतस्तु किं तत्रायातं । सर्वथापि तेन लब्धेन गृहावस्थितेन वा न तद्वस्तु तवास्ति ।
10 इति दत्तादत्तेन तेन किं । न किंचित्प्रयोजनं भवतः । अत-स्तदुपेक्षैव युक्ता विदुषः ॥ किं च । इदमपि तावत्परि-भाव्यतामित्युपदर्शयन्नाह ।

किं वारयतु पुण्यानि प्रसन्नान्[2] स्वगुणानथ ।
लभमानो न गृह्णातु वद केन न कुप्यसि ॥ ८५

15 यो ऽसावतिप्रसन्नैर्दायकदानपतिभिर्लाभसत्कारैः पूज्यते । स किं वारयतु पुण्यानि पूर्वजन्मकृतानि विपाकोन्मुखानि

---

1 Tib. does not translate *marman* (See *Çikṣās*. Index s. voc.). codanā = gnod-byed-pa. Query: bādhana.

2 Minaev has: prasannāt; the reading of the Commentary (°ān), in L[3], M.— The Tibetan translation agrees with the Sanskrit: bsod-nams daṅ ni dad-pa am / raṅ-gi-yon-tan ci-phyir hdor = puṇyāny eva prasannāç ca svaguṇā vā kiṁ tyajyante.

वद्गमान्तस्य लाभसत्काराः । उत प्रयत्नात् दायकदानपतीन् वारयतु । अथ तद्गुणान् वारयतु । यानाश्रित्यैषां प्रसादो जातः । मा प्रसादमप्येषां जनयिष्यथेति । अथ वा लभमानोऽपि तेभ्यो न स्वीकरोतु । ब्रूहि केन प्रकारेणाथ न भवतो ऽपरितोषः स्यात् । तत्र पुण्यादीनां वारयितुमशक्यत्वात् । लभ्यमानाग्रहणेऽपि सर्वथापि न तस्मेऽस्तीत्यादिना बाधकत्वोक्तत्वादिति न कश्चित्परितोषकारणमस्ति ॥ 5

अथापि स्यात् । परस्यैव लाभसत्कारसंपत्तिरस्ति न मम । अथ मम नास्ति तदा परस्यापि मा भूदित्येतदसमासंतुष्टिनिबन्धनमित्याशङ्क्याह । 10

न केवलं त्वमात्मानं कृतपापं न शोचसि ।
कृतपुण्यैः सह स्पर्धामपरैः[1] कर्तुमिच्छसि ॥ ८६

सुबोधं । यत्किंचिद्दुःखं तत्सर्वं पापसमुद्भूतं । अभिलाषविघातोऽपि दुःखं । यदपि पर्येषमाणो न लभते तदपि दुःखमिति[2] वचनात् । [78ª] वक्ष्यति । 15

अभिलाषविघाताश्च जायन्ते पापकारिणामिति[3] ।

यत्किंचित्सुखं तत्सर्वं पुण्यप्रसूतमिति सुखाभिलाषिणा शुभे कर्मण्युद्योगः करणीयः । वक्ष्यति । पुण्यकारिसुखेच्छामित्यादि[4] ॥ इति कथं कृतपुण्यैः सह स्पर्धा युज्यते । सुकृत-

1 Minaev has: aparām; Tib.: gzhan-dag daṅ lhan-cig. = aparaiḥ saha.

2 Ms. duḥkham api; Tib.: zhes.

3 See VII, 41.

4 Cp. VII, 42, 43.

क्रियायामेव तद्दुःखाभिलाषिणां स्वार्थो युक्तोऽयं ॥ अपि चेद-
मपि प्रष्टव्योऽसि ।

जातं चेदप्रियं शत्रोस्त्वत्तुष्ट्या[1] किं पुनर्भवेत् ।

तव शत्रोर्दैवविषयस्य त्वदभिलाषमात्रेण अप्रियमनिष्टं
जातमुत्पन्नं चेद्यदि । एतावता भवतः किं पुनर्भवेत् । भवतु
तावत्तस्यानिष्टं । अन्यस्य तु भवतु वा मा वा । मम किं-
चिदिव तावन्मात्रेण प्रयोजनमिति[2] । पराभिप्रायमाशङ्क्याह ।

त्वदाशंसनमात्रेण न चाहेतुर्भविष्यति[3] ॥ ८७

तवाशंसनमिच्छाभिलाष इति यावत् । तावन्मात्रेण न
चाहेतुः । न विद्यते हेतुरस्य । इत्यहेतुरर्थो भविष्यति ॥
अप्रियस्य भवतु नामैवमभ्युपगम्याप्युच्यते ।

अथ त्वदिच्छया सिद्धं तद्दुःखे किं सुखं तव ।

यदि नाम तवेच्छया सिद्धं निष्पन्नमप्रियं शत्रोः ।
तथापि तस्य दुःखे समुत्पन्ने किं सुखं तव । न किंचित् ।
निष्प्रयोजनमिदमभिप्रेतमिति यावत् । नन्विदमेव प्रयोजनं
यत्तद्दुःखे मम संतुष्टिरित्यत आह ।

---

1 Minaev: tvaṁ tuṣṭyā—Tib.: de-la khyod dgar ci-zhig yod = to your pleasure = à vos souhaits.

2 "I do not care if anybody else is unhappy or not; if my enemy be unhappy, there is something good in it for me."

3 Tib.: de-la gnod-pai rgyur mi hgyur: tatra na bādhāhetuḥ.

**यद्यप्यर्थो भवेदेवमनर्थः को ऽन्वतः[1] परः ॥ ८८**

एवमपि परदुःखपरितोषे यद्यर्थः प्रयोजनं भवेत्। तदातः[2] परो ऽनर्थः को नु। नुरित्यतिशये। अयमेवानर्थो महानित्यर्थः ॥ कथं पुनरयमनर्थ इत्याह।

**एतद्धि बडिशं घोरं क्लेशबाडिशिकार्पितं।** 5

**यतो नरकपालास्त्वां क्रीत्वा[3] पक्ष्यन्ति कुम्भिषु ॥ ८९**

यस्मादेतदिदमेवंविधं परानर्थचित्तं बडिशं घोरं महाभयङ्करं। किंभूतं। क्लेशबाडिशिकार्पितं। क्लेशा एव बडिशेन चरन्तीति बाडिशिकास्तैरर्पितमादत्तं[4]। यतः क्लेशबाडि[78b]शिकात्। बाडिशिकादिव मत्स्यं। नरकपाला यमपुरुषास्त्वां क्रीत्वा 10 पक्ष्यन्ति पक्ष्यन्ते। क्व चिन्नीत्वेति पाठः। कुम्भिषु नरकविशेषेषु[5]। तस्माद्वधाभिलाषं मा कार्षीरिति भावः ॥

यदपि स्तुत्यादिविघाते दुःखमुत्पद्यते तदप्यविवेकत एवेत्युपदेशयन्नाह।

**स्तुतिर्यशो ऽथ सत्कारो न पुण्याय न चायुषे।** 15

**न बलार्थं न चारोग्ये[6] न च कायसुखाय मे ॥ ९०**

---

1 Minaev has: ko 'ndhataḥ paraḥ; M. has: arthataḥ paraḥ (= there is not anartha worse than this artha). According to the Tib.: anarthaḥ kas tataḥ paraḥ = de-las phuṅ-ba aṅ gshan ci yod.

2 There is in Ms. between tadā and tas some little mark of omission or interpunction: tadā 'taḥ (?).

3 Supported by Tib.—M. has kṣiptvā; Comm., varia lectio: nītvā.

4 Ms. has: arpitaṁ dattam.

5 See *Çikṣās*. 75, 8, note.

6 See *Çikṣas*. 266, 9.—On ārogya, see *Majjh. N.* Index, stanzas.

**एतावांश्च भवेत्स्वार्थो धीमतः स्वार्थवेदिनः ।**

पञ्चप्रकार एवार्थः पुरुषार्थत्वेनाभिमतो विदुषां । तद्यथा पुण्यं । आयुर्वृद्धिः । बलवृद्धिः । आरोग्यलाभः । कायसुखं चेति । न चैतेषु क्व चिदुपयुज्यन्ते स्तुत्यादयः । इयानेव हि
5 स्वार्थो भवतो[1] भवेत्प्रज्ञावतः स्वार्थवेदिनः । अन्यस्य पुनरन्यथापि भवेत् । इत्यात्मनि परात्मप्रति । जानन्तु यद्यपि स्वार्थं तथापि स्वार्थवेदिनो [ऽनु]पायत्वात्पृथगुपदर्शितः[2] । धीमत इत्यनेन तद्दक्षतया तदपि कथितं ॥ ननु मानसमपि सुखमस्ति । तेनावधारणमयुक्तमित्यथाह ।

10 **मद्यद्यूतादि सेव्यं स्यान्मानसं सुखमिच्छता ॥ ९१**

मानसं सुखं सौमनस्यं । तदिच्छता मद्यं द्यूतं गणिका पारदारिकं सेवनीयं स्यात् । यत्पुनः सद्धर्मादिश्रवणात्सौमनस्यं तत्पुण्यग्रहणेन संगृहीतमित्यदोषः । तस्मात्सौमनस्यहेतुर्भवतोऽपि स्तुत्यादयो बालजनानन्दकारिणो ऽनुपादेया एव । इत्थमपि
15 बालजनोज्ञापकारिणः स्तुत्यादय इत्याह ।

**यशोऽर्थं हारयन्त्यर्थमात्मानं मारयन्त्यपि ।**

के चिन्मोहपुरुषास्ताद्वृग्गुणात् स्वयमतिसुदूरे वर्तमाना अपि प्रज्ञादिगुणैः स्तूयमाना वन्दिजनैरन्यैश्च प्रोत्फुल्लनयनवदना

---

[1] Such seems to be the old reading; from a second hand: bhavan.

[2] Ms. pṛthagāpa°.—Tib. has: raṅ-gi don çes-pai thabs-ma-yin-pai-phyir log-ťu ma bstan-te = svārthajñasya anupāyatvān mithyā na darçitam.—But observe that logs-su = pṛthak.

यशोऽर्थिनो धनस्यादिधनं हृदयवर्तेभ्यः प्रयच्छन्ति । तथा तैरेव गुणैः संभावितात्मानामपि । शङ्कवत् प्रभुविजय[ 79a ]वशुद्धतं यशो मम जगति विपुलतां गमिष्यति । इत्यभिनिवेशाद्दुः सहसंग्रामारोहणान्मारयन्ति ॥ न चात्र परमार्थतः किं चिदुपयोजनं । अन्यच्च मिथ्याविकल्पात् । इति प्रतिपादयन्नाह । 5

किमक्षराणि भक्ष्याणि[1] मृते कस्य च तत्सुखं ॥ ९२

स्तुत्याद्यभिधायकान्यक्षराणि वर्णाः किं भक्ष्याणि चर्वितव्यानि । यशोऽर्थं मृते सति कस्य च तत्सुखं यशःश्रवणसमुत्थं ॥ तस्माद्बालक्रीडासमानमेतदित्युपदर्शयन्नाह ।

यथा पांशुगृहे भिन्ने रोदित्यार्तरवं शिशुः । 10

यथा कश्चिद्बालो धूलिमयगृहेण परमपरितोषेण परिक्रीडमानः । केन चित्तस्मिन् भग्ने महद्दुःखेन परिगृहीतः परमार्तिपीडित इव मद्गृहं भग्नमिति करुणस्वरं क्रन्दति । सैवोपमात्रापि । इत्याह ।

तथा स्तुतियशोहानौ स्वचित्तं प्रतिभाति मे ॥ ९३ 15

तथैव स्तुतियशोहानौ विघाते स्वचित्तं[2] दुःखमाविशत्प्रतिभासते विचारयतो मम [।] अत्रापि न वस्तुसता[3] केन चिद्-

---

1 Tib. has : ...ci-zhig bya = kim akṣaraiḥ kartavyam ?

2 Tib. has : byis-pa bzhin = bālavat.

3 = dravyasatā, paramārthasatā. The opposed notion is expressed by such words as saṁvṛtisat, prajñaptisat.

प्रबन्ध इति परामर्ष्टव्यं ॥ पुनरन्यथा विचारेण बाह्यधर्म एवा-
यमिति चतुर्भिः श्लोकैः पर दूषयन्नाह ।

**शब्दस्तावदचित्तत्वात्स मां स्तौतीत्यसंभवः[1] ।**

शब्दो वर्णात्मको बाह्यार्थतया ऽचित्तो ऽचेतनः । तस्य
5 भावः । तस्मात् । स शब्दो मां स्तौति मदीयं वर्णमुदीरयति ।
असंभवो न संभवत्येतत् ॥ तत्कथं सौमनस्यं जायते इत्याह ।

**परः किल मयि प्रीत इत्येतत्प्रीतिकारणं[2] ॥ ९४**

अन्यः पुरुषश्चेतनात्मकः । किलेति निरर्थकमेतदपीत्य-
रुचिप्रतिपादकं । मयि प्रीतोऽभिप्रसन्न इत्येतदभिसंधानं
10 प्रीतिकारणं ।

तथाप्येवमसंबन्धात्केवलं शिशुचेष्टितं[3] ।

इति संबन्धः । असंबन्धमेव कथयन्नाह ।

**अन्यत्र मयि वा प्रीत्या किं हि मे परकीयया[4] ।**
**तस्यैव तत्प्रीतिसुखं भागो नाल्पोऽपि मे ततः ॥ ९५**

---

1 = *Çikṣās.* 266, 1, with the reading: māṁ stautīti na saṁbhavaḥ.

2 See *Çikṣās.* 266, 2, where occurs the reading, confirmed by Tib.: ity ayaṁ me matibhramaḥ.

3 Infra p. 223, l. 14.

4 = *Çikṣās.* 266, 3.

यस्मादन्यस्मिन् सत्त्वे मयि [वा][1] प्रीत्या परसंतानवर्तिन्या[2] किमायतं म[79b]म । न किंचित् । कुतः । तस्यैव ततो य एव प्रीतः स्तुतिकर्ता तत्प्रीतिसुखं । नान्यस्य । अतो भागो नाप्योऽपि ईषदपि मम ततः परसंतानवर्तिनः प्रीतिसुखात् ॥
स्यादेतत् । परसुखेनैव सुखित्वं बोधिसत्त्वानां । तत्किमिति  5
ततो भागो नाप्नोति । अथाह ।

तत्सुखेन सुखित्वं चेत्सर्वत्रैव ममास्तु तत् ।
कस्मादन्यप्रसादेन सुखितेषु न मे सुखं ॥ ९६

यदि परसुखेन सुखित्वं तदा तस्मिन्नन्यत्र[3] प्रसादेन सुखितेऽपि ममास्तु तत्सुखित्वं । किमात्मन्यभिप्रसादेन प्रीते पर-  10
[स्मिन्] प्रीतिः[4] । न त्वन्यस्मिन्प्रसादेन सुखितेषु[5] मम सुखं ॥
तस्मादयमनमाचममेवैतत् । न परमार्थ इति दर्शयितुमाह ।

तस्मादहं स्तुतोऽस्मीति[6] प्रीतिरात्मनि जायते ।
[7]तथाप्येवमसंबन्धात्केवलं शिशुचेष्टितं ॥ ९७

---

1 vā is translated in the Tib.

2 The Buddhists do not, of course, admit the ordinary Indian notion of self (ātman, puruṣa); everything is only the succession (saṁtāna) of its moments (kṣaṇa), and this succession is no real being apart from the kṣaṇas, or links of the saṁtāna (saṁtānin). The parasaṁtāna is the self of the paras; the svasaṁtāna is our ātman or ālayavijñāna.

3 According to Tib.: sarvatra.

4 Tib.—kim ātmany abhiprasanne parasmin parasmin punaḥ prītiḥ.

5 Tib. adds: sems-can-la (=sattveṣu).

6 M. has: stuta iti.—See Commentary.

7 Tib: de yau de-ltar mi hthad-pas = tad apy evam anupapatteḥ. ...

तदन्यनिमित्ताभावात् । अहं स्तुत इत्येवं विकल्पना[त्] प्रीतिरात्मनि जायते । न पुनः परसुखेन सुखित्वात् । तथापि न केवलमन्यप्रसादेन सुखिते सति । आत्मन्यपि[1] एवमुक्तक्रमेणा-संबन्धादप्रत्यासत्तेः कारणात्केवलं बालविलसितमेतत् ॥

5 अपि च स्तुत्यादयो ममापचयमेव दधतीत्युपदर्शयन्नाह ।

स्तुत्यादयश्च[2] मे क्षेमं संवेगं नाशयन्त्यमी ।
गुणवत्सु च मात्सर्यं संपत्कोपं च कुर्वते ॥ ९८

अमी स्तुत्यादयो मम क्षेमं कल्याणं । अथ क्षेमं कुशल-पक्षपरिपालनं । तथा संवेगं[3] संसारदुःखनिर्वेदनं । नाशयन्ति
10 घ्नन्ति । [4]एतावन्मात्रमेव । किं तु गुणवत्सु च मात्सर्यं[5] । आत्मनि गुणाधिकमानेन परगुणप्रच्छादनात् । तद्गुणासहनतया वा संपदि लाभसत्कारादिस्वभावायां कोपं चामर्षं कुर्वते तेष्वेव । अहमेव गुणाधिको ममैव सर्वा संपत्तिरुचिता नान्ये-षामिति मत्वा ॥ यत एते दोषाः स्तुत्यादिषु संभविनः ।

15 तस्मात्स्तुत्यादिघाताय मम ये प्रत्युपस्थिताः ।
अपायपातरक्षार्थं प्रवृत्ता ननु ते मम ॥ ९९[6]

---

1 tatrāpi = ātmany api.

2 So M.; L[3] has: stutyādayas tu; Minaev: °dayo na me.—Tib. has: bstod-sogs bdag ni gyeṅ-bar byed = disturb the mind.

3 See infra VIII, F. Eight saṁvegavatthus, *Visuddhim*. J.P.T.S., 1893. p. 93.—saṁvega = skyo-ba.

4 So Ms.—According to Tib.: na tāvan°.

5 P.W. (K.F.) has only: möglich; but see *Madhyamakavṛtti* (Bibl. Buddh.), p. 8, n. 3.

6 See V, 81.

तस्मात्कारणात् । स्तुत्यादिघातस्य विरोधा[80a]य ये मम प्रत्युपस्थिता उद्यताः । अपायपातो नरकादिपतनं । ततो रक्षार्थं त्राणार्थं रक्षणनिमित्तं प्रवृत्ता उद्युक्ता ननु ते मम । अतः कल्याणमित्राणि ते नापकारिण इति ॥ लाभादिविरोधिनि सर्वथा प्रतिघचित्तमयुक्तं मम । इत्युपदर्शयितुमाह ।

मुक्त्यर्थिनश्चायुक्तं मे लाभसत्कारबन्धनं।
ये मोचयन्ति मां बन्धाद्द्वेषस्तेषु कथं मम ॥ १००

विमुक्तिकामस्य लाभसत्कारौ बन्धनमिव । सङ्गस्थानत्वात् । अयुक्तं नोचितं मुमुक्षोर्बन्धनं । कल्याणमित्रकृत्यकारिणः प्रत्यु-तेनाभिमता विमोचयन्ति वियोजयन्ति मां बन्धात्संसारदुःखलक्षणात् । लाभादिस्वभावाद्वा । द्वेषस्तेषु परमोपकारिषु प्रीतिस्थानेषु कथं मम । न युक्तमित्यभिप्रायः ॥ कथं न युक्तमित्याह ।

दुःखं प्रवेष्टुकामस्य ये कपाटत्वमागताः[1] ।
बुद्धाधिष्ठानत इव द्वेषस्तेषु कथं मम ॥ १०१

लाभसत्काराभिष्वङ्गप्रसङ्गात् । संसारदुःखैर्निर्मोक्तुकामस्य । ये सत्पुरुषविशेषाः कपाटत्वमपद्वारत्वमागताः[2] । कुतः । बुद्धानामधिष्ठानतोऽनुभावादिव । द्वेषस्तेषु कथं मम ॥

---

1 kapāṭa = sgo-hphar = board or plank of a door.

2 Apadvāra = Seitenthür, Hinterthür (Böhtlingk) = sgo-glegs = board or plank of a door.—According to the Commentary, we have to read: duḥkhān nirmoktukāmasya.—But the first clause: lābhasatkāra°, plainly agrees with the traditional text.

कुशलोपघातकारिण्यपि द्वेषं निवारयन्नाह ।

पुण्यविघ्नः कृतोऽनेनेत्यत्र कोपो न युज्यते ।
क्षान्त्या समं तपो नास्ति नन्वेतत्तदुपस्थितं[1] ॥ १०२

कुशलविघातः कृतोऽनेन । इत्येवं मनसि निधाय अत्र
5 पुण्यविघातकारिणि द्वेषो न युज्यते । कस्मात् । यतः क्षान्त्या
तितिक्षया समं तुल्यं तपः सुकृतं नास्ति सर्वशुभकर्महेतुत्वात् ।
न च क्षान्तिसमं तप इति वचनात्[2] । ननु तदेवेदमयत्नत
एवोपस्थितमुपनतं[3] । पुण्यविघ्नकारिच्छलेन पुण्यहेतुसंनिधेः ॥

तत्र प्रद्वेषे स्वात्मनैव पुण्यविघातः कृतो भवेदित्याह ।

10 अथाहमात्मदोषेण न करोमि क्षमामिह ।
मयैवात्र कृतो विघ्नः पुण्यहेतावुपस्थिते ॥ १०३

अथ यद्यात्मन एव दोषेणासहिष्णुतात्मकेन न करोमि
[80b] क्षमां क्षान्तिमिह विघ्नकारिणि । तदा मयैव न पुन-
रन्येन । अत्र पुण्ये । कृतो विघ्नः । कुतः । पुण्यहेतौ पुण्यवि-
15 घातकारित्वेनाभिमते । उपस्थिते संनिहितीभूते । अत्रेत्यस्मिन्
पुण्यहेताविति वा संबध्यते ॥

यदि पुण्यविघातकारी कथमसौ पुण्यहेतुर्यावतास एव विघ्न
इत्याह ।

---

1 Minaev has : na tv etad

2 See supra VI., 2 (*Dhammapada*, 184).

3 I would take the meaning of the stanza as follows: nanu tad eva kṣāntitapas tena vighātakāriṇopanatam.—But according to the Commentary: tad etat = kṣāntitapas.

यो हि येन विना नास्ति यस्मिंश्च सति विद्यते ।
स एव कारणं[1] तस्य स कथं विघ्न उच्यते ॥ १०४

यो भावः कार्याभिमतः । येन कारणाभिमतेन विना नास्ति । तद्व्यतिरेके न भवति । स एव यद्भावेन भवति । नान्यः कारणं जनकस्तस्य कार्याभिमतस्य । तदन्वयव्यतिरेकानुविधानात् । एवं प्रकृतेऽपि स जनक एव कथं तस्य अन्यस्य विघ्न उच्यते । विघातहेतुरभिधीयते । तथाविधेऽपि तथा व्यवहारं कुर्वतो नास्ति विप्रतिपत्तिः ॥ 5

उक्तमेवार्थं दृष्टान्तोपदर्शनेन व्यक्तं कुर्वन्नाह ।

न हि कालोपपन्नेन दानविघ्नः कृतोऽर्थिना ।
न च प्रव्राजके प्राप्ते[2] प्रव्रज्याविघ्न उच्यते ॥ १०५ 10

न यस्मात्कस्य चिद्दानपतेर्दित्साकाल एव संप्राप्तेनार्थिना । याचनकेन[3] । दानविघ्नः कृत इत्युच्यते । यतः स कारणमेव दानस्य । तथा कस्य चित्प्रव्रजितुकामस्य प्रव्राजकसमवधाने[.] । प्रव्रज्या संवरादिग्रहणस्वभावा । न च तस्या[4] विघ्न उच्यते । अपि तु कारणमेव स तस्यास्तमन्तरेण तस्या असंभवात् । एवं प्रकृतेऽपि द्रष्टव्यं ॥ 15

---

1 Definition of the kāraṇa by the classical notions of anvaya and vyatireka
2 M. has: na hi pra°.—According to the Commentary: pravrājakaprāptiḥ.
3 Yācanaka, in P.W. from *Kāraṇḍavyūha*.
4 The Ms. by a second hand: tasyā naiva vighna.

अपि च क्षान्तिहेतुरतिदुर्लभ इति तल्लाभात् प्रीतिरेव युज्यत इत्युपदर्शयन्नाह ।

**सुलभा याचका लोके दुर्लभास्त्वपकारिणः ।**

अतिप्रचुरप्राप्तिका याचनका लोके सर्वत्र सर्वेषां दीयमान-
5 प्रदानावैमुख्यात् । न तु पुनरपकारिणः । अतस्ते दुर्लभाः प्रत-
सत्त्वेषु यदि कथं चित्कश्चित्प्राप्यते न वेति । कुतः पुनरेत-
देवमित्याह ।

**यतो मेऽनपराधस्य न कश्चिदपराध्यति[1] ॥ १०६**

यस्मादन[81a]पराधस्य निवृत्तपरापकारस्य मम निर्नि-
10 मित्तं न कश्चिदेकोऽपि अपराध्यति । नापकरोति । कर्मणि
षष्ठी । एवमतिदुर्लभतया परमोपकारित्वाच्चाभिनन्दनीय एवाप-
कारीत्याह ।

**अश्रमोपार्जितस्तस्माद्गृहे निधिरिवोत्थितः ।**
**बोधिचर्यासहायत्वात्स्पृहणीयो मम रिपुः ॥ १०७**

15. यस्मात्कथं चित्प्राप्यन्ते अपकारिणः । तस्माद्गृहे प्रादुर्भूतो
निधिरिव श्रममन्तरेणैवाधिगतो रिपुरभिलषणीय एव मया

---

1 This idea is sometimes insisted upon. It is asked how some people abused the Tathāgata; it is said that the wounding of the Tathāgata, with effusion of blood, is only a scholastic "casus," nobody being able to hurt a thoroughly benevolent Being. See Prof. Bendall's contribution to *Mélanges Kern* and *M. Vyut.* 271,a, quoted in loc.—The legend of Pūrṇa can be quoted as a contrary instance, but the power of the ancient karma must not be lost sight of.—Beggars who ask for the blood and flesh of the giver are very difficult to meet with (*Maṇicūḍāvadāna*).

त्वात्। बोधिचर्यायाः कुशलसंभारोपार्जने सहकारित्वाच्च॥ एवं-विधे परमपुरुषार्थे साहाय्यं भजमानस्य प्रत्युपकारकरणमेव कृतज्ञतया मम युक्तमित्युपदर्शयन्नाह।

मया चानेन चोपात्तं तस्मादेतत्क्षमाफलं।
एतस्मै प्रथमं देयमेतत्पूर्वा क्षमा यतः॥ १०८

यस्मादसौ तव साहाय्यं कुर्वन् कारणमेव न विघ्नः तस्मान्मया क्षमामभ्यस्यता। अनेन चापकारं कुर्वता इति द्वाभ्यामेवोपार्जितं। एतदिति यस्य साधनाय साहाय्यं भजते। क्षमाफलं धर्माधिगमलक्षणं। एतस्मै धर्मसहायाय प्रथममग्रतो दातव्यं मया इति प्रणिधातव्यं। यथा मैत्रीबलेन बोधिसत्त्वेन प्रणिहितं पञ्चकानुद्दिश्य[1]। तत्र कारणमाह। यस्मादेतत्पूर्वा। एष एव पूर्वं कारणं यस्याः सा तथोक्ता। न ह्यपकारिणमन्तरेणान्यत्क्षान्तिकारणमस्ति॥

युक्तमेवैतद्यदि तेनैवाभिप्रायेणासौ प्रवर्तते। केवलमपकाराशय एवायमित्याशङ्कयन्नाह।

क्षमासिद्ध्याशयो नास्य तेन पूज्यो न चेदरिः।
सिद्धिहेतुरचित्तोऽपि सद्धर्मः पूज्यते कथं॥ १०९

क्षमास्य बोधिसत्त्वस्य निष्पद्यतामित्याशयो नास्यापकारोद्यतस्य। तेन कारणेन कुशलहेतुरपि यदि शत्रुः पूजनीयो न

1 See Kern, *Buddhism* I, p. 81.

भवति। एवं तर्हि कुशलानिष्पत्तिहेतुर्निरभिप्रायोऽपि सद्धर्मः प्रवचनलक्षणः कथं पूज्यते। सोऽपि तदाशयशून्यत्वात्पूजनीयो न स्यादिति भावः [81b] ॥

अथ सद्धर्मस्य निरभिप्रायतया अपकाराशयोऽपि नास्ति। 5 अस्य पुंनस्तद्विपर्ययो दृश्यते इत्याह।

अपकाराशयोऽस्येति शत्रुर्यदि न पूज्यते।
अन्यथा मे कथं क्षान्तिर्भिषजीव हितोद्यते ॥११०

अपकार आशयोऽस्य शत्रोः। इत्येवमभिसंधाय शत्रुर्यदि न पूज्यते दानमानैर्न सत्क्रियते। अन्यथेति। अपकारिणि द्वेष-10 चित्तमनिवारयतः कथं मम क्षान्तिः। तदपकारमसहमानस्य प्रत्यपकारं वा कुर्वतो नैव युक्तेत्यर्थः। अन्यथापि कथं क्षान्तिः। भिषजीव हितोद्यते। सुवैद्यवद्धितसुखविधायके यत्र प्रेमगौरव-मेव सदा द्वेषनिबन्धनस्य गन्धोऽपि[1] न विद्यते॥ द्वेषचित्त-निवर्तनाच्च क्षान्तिरुच्यते। तस्मादपकारिण्येव प्रतिघचित्तं 15 निवर्तयतः क्षान्तिरिति। एतदेव दर्शयन्नाह।

तद्दुष्टाशयमेवातः प्रतीत्योत्पद्यते क्षमा।
स एवातः क्षमाहेतुः पूज्यः सद्धर्मवन्मया ॥ १११

यतो भिषजीव हितोद्यते[2] क्षान्तिर्न युक्ता। अतो ऽस्मा-द्धेतोः। तस्य दुष्टाशयमेव प्रतीत्य निमित्तीकृत्य समुपजायते

---

1 Ms. has gandho, but Tib sgra = çabda.
2 Ms. has: °dyate ' kṣānti.

क्षमा । न पुनः कस्य चिच्छुभाशयं । अतोऽस्मात् । स एव यस्याशयं प्रतीत्योत्पद्यते क्षमा क्षमाहेतुः । न तु पुनर्यो वैद्यवद्दुष्टाशयः । इति पूज्यः क्षमासिद्ध्याशयरहितोऽपि सद्धर्मवदसौ मया ॥ एतदुक्तं भवति । किं ममानेनाशयविचारेण प्रयोजनं । अभिमतसाध्यसिद्धौ चेदुपयुज्यते । तावतैव ममोपादेयः स्यात् । विशुद्धाशयफलं तु तस्यैव यस्यासौ विशुद्धाशयः । मम तु शुभोदयहेतुरेवायं । इति कथमिव पूजनीयो न भवेदिति । तस्मात्संभारोपयोगिनि हेतौ किं स्वरूपनिरूपणेन ॥

एतदेव संभारहेतुत्वमस्यागमतः प्रसाधयन्ना[82a]ह ।

सत्त्वक्षेत्रं जिनक्षेत्रमित्यतो मुनिनोदितं ।
एतानाराध्य बहवः संपत्पारं यतो गताः ॥ ११२

संभारप्रसूतिप्रवृत्तिहेतुत्वात्सत्त्वाः क्षेत्रं[1] । बुद्धा भगवन्तस्तथैव क्षेत्रं । इत्येवं । अतो बुद्धत्वकारणहेतुत्वात् । अनेकप्रकारं[2] भगवता वर्णितं । कुतः । यतो यस्मादेतान् सत्त्वान् जिनांश्च । आराध्य । आनुकूल्यानुष्ठानेन । बहवो बुद्धत्वमधिगम्य सर्वलौकिकलोकोत्तरसर्वसंपत्तिपर्यन्तं प्राप्ताः ॥

स्यादेतत् । यदि नाम सत्त्वा अपि सर्वसंपत्तिहेतवस्तथापि तथागतैः सह साधारणता न युक्तेति । अत आह ।

---

1 See the texts (*Dharmasaṁgītisūtra*) quoted *Çikṣās.* 153, $_7$ ; also 155, $_6$ (siddhim āgatā bahavaḥ). $_7$ (siddhikṣetra).—On kṣetra, see supra V, 81, *Friendly Epistle*, st. 42 (J.P.T.S., 1886), *Petavatthu*, Comm., p. 7.

2 Tib : rnam-pa hdis = tena prakāreṇa.

**सत्त्वेभ्यश्च जिनेभ्यश्च बुद्धधर्मागमे समे[1] ।**
**जिनेषु गौरवं यद्वन्न सत्त्वेष्विति कः क्रमः ॥ ११३**

उभयेभ्योऽपि बुद्धधर्माणां बलवैशारद्यादीनामागमे प्रतिलम्भे तुल्ये अविशिष्टे । उभयमपि [2]तत्प्रति हेतुत्वमविशिष्टमिति भावः । अतः साधारणेऽपि हेतुभावे जिनेषु गौरवं यद्वत्तद्वन्न सत्त्वेषु । इत्येवं कः क्रमः परिपाटिः प्रेक्षावतां । नैव युक्तेत्यर्थः[3] ॥

ननु च सत्त्वानां रागादिमलदोषैर्हीनाशयत्वात् कारणत्वेऽपि कथं भगवत्समानता युज्यते इत्याशङ्क्याह ।

**आशयस्य च माहात्म्यं न स्वतः किं तु कार्यतः ।**
**समं च तेन माहात्म्यं सत्त्वानां तेन ते समाः ॥ ११४**

यद्यपि भगवतामप[ि]रमितपुण्यज्ञानोपजनितमनुत्तरमिह माहात्म्यं । तथाप्युपयुक्तोपयोगित्वेन हेतुभावस्य तुल्यत्वात्समं माहात्म्यमुच्यते । तेन हेतुना ते सत्त्वाः समा जिनैस्तुल्या उच्यन्ते इति ॥ नात्र विशेषः क्रियते । यच्च पुनः प्रतिनियतात्मगतो विशेषस्तमुपदर्शयितुमाह ।

---

1 See *Dharmasaṁgiti*, loco laud.—The phraseology of this Sūtra is worthy of notice: sattvakṣetraṁ bodhisattvasya buddhakṣetraṁ yataç ca buddhakṣetrād buddhadharmāṇāṁ lābhāgamo bhavati. It is strange that Prajñākaramati gives no reference, as he did before, to the Mahāyānasūtras evidently alluded to by his text.

2 Ms. taṁprati.

3 yuktā paripāṭiḥ

मैत्र्याशयश्च यत्पूज्यः सत्त्वमाहात्म्यमेव तत् ।
बुद्धप्रसादाद्यत्पुण्यं बुद्धमाहात्म्यमेव तत् ॥ ११५[1]

सत्त्वेषु मैत्रचित्तविहारी पुनर्यत्पूज्यते जनैः । तत्सत्त्वस्यैव मैत्र्याशयस्य प्रत्यात्मगतं माहात्म्यं नान्यस्य । तथा तथागत-माहात्म्य स्वचित्तं प्रसादयतो[2] यत्पुण्यमु[42]त्पद्यते तद्भगवत एव माहात्म्यमसाधारणं । अन्यस्य तथाविधगुणाभावात् ॥

इत्यसाधारणं गुणमभिधाय प्रकृतमुपदर्शयन्नाह ।

बुद्धधर्मागमांशेन तस्मात्सत्त्वा जिनैः समाः ।
न तु बुद्धैः समाः केचिदनन्तांशैर्गुणार्णवैः ॥ ११६

इदमत्र बीजं समतोपादान इत्यर्थः । परमार्थतस्तु न बुद्धैर्भगवद्भिः समाः केचित्सत्त्वाः सन्ति । यदि भवेयु-स्तथाविधास्तदा तेऽपि बुद्धा एव स्युः । किंभूतैः । गुणार्णवैः[3] । गुणानामर्णवा गुणरत्नाकराः । अगाधापारत्वात् । तैः । पुनरपि तेषामपरमेव[4] विशेषणमाह । अनन्तांशैः । अनन्तोऽपर्यन्तः । अंश एकदेशो[5]ऽपि येषां गुणार्णवानां । ते तथा । तैः ॥

---

1 = Çikṣāṣ 157. 7-8. (maitrāçaya). Tib. has: byams-sems-ldan = maitryāçayavān.

2 Ms. has: prasādhayato.

3 Ms. has wrongly: anantāṁçair guṇasāgaraiḥ—See below.

4 Ms. has: tegha and two illegible syllables in margin. Our reading from Tib.

5 Tib. points to a reading: aṁça eva deço'pi—The Ms. has: aṅga.

तमेवार्थं व्यक्तीकुर्वन्नाह।

गुणसारैकराशीनां गुणोऽणुरपि चेत्क्वचित्।
दृश्यते तस्य पूजार्थं त्रैलोक्यमपि न क्षमं॥ ११७

गुणेषु प्रधानानामेकराशयो ये भगवन्तस्तेषां गुणोऽणुरपि
5 परमाणुमात्रोऽपि गुणकणिकापीति यावत्। यदि क्व चित्सत्त्व-
विशेषे दृश्यते प्रतीयते। तस्य तद्गुणाधारस्य पूजानिमित्तं
त्रैलोक्यमपि न क्षमं। त्रैलोक्यजातानि रत्नादीनि न प्रति-
रूपाणीति यावत्॥

यद्येवं कथं तर्हि सत्त्वाराधनमुक्तमित्याह।

10 बुद्धधर्मोदयांशस्तु श्रेष्ठः सत्त्वेषु[1] विद्यते।
एतदंशानुरूप्येण[2] सत्त्वपूजा कृता भवेत्॥ ११८

व्याख्यातमेतत्पूर्वं॥ इतोऽपि सत्त्वाराधनमुचितमित्याह।

किं च निश्छद्मबन्धूनामप्रमेयोपकारिणां।
सत्त्वाराधनमुत्सृज्य निष्कृतिः का परा भवेत्॥ ११९[3]

15 निश्छद्मबन्धूनामकृत्रिमसुहृदां बुद्धानां बोधिसत्त्वानां च।
अपर्यन्तोपकारिणां। निष्कृतिः[4] तत्कृतापकारस्य[5] निष्क्रयणं। परि-

---

1 So L.[2]—Minaev has: sattvasya.—Tib.: sems-can-rnams-la.

2 Minaev: °rūpeṇa.

3 = Çikṣās. 155. 10-11.

4 Çikṣās. has the gloss in margin: pratyupakāro buddhānām.

5 The Ms. has the unusual reading: tatkṛtā' pakārasya.—niḥkṛti = repara-
tion of the offences made to the Buddhas.

ग्रोधनमिति यावत्। किमपरं भवेत् सत्त्वाराधनमन्तरेण। एतदेव परं निष्क्रयणमित्यर्थः[1] ॥

प्रभुचित्तानुकूलवर्तिन एव भृत्यस्य वाञ्छितं सिध्यतीत्यवगम्य सत्त्वाराधनमेवोपादेयमिति प्रतिपादयन्नाह।

भिन्दन्ति देहं प्रविशन्त्यवीचीं[2] 5
येषां कृते तत्र कृते कृतं स्यात्।
महापकारिष्वपि तेन सर्वं
कल्याणमेवाचरणीयमेषु ॥ १२०[3]

करचरणशिरोनयनस्वमांसानि छित्त्वा छित्त्वा प्रदत्तानि येषां [83a] हितसुखविधानाय। तथावीचीमपि परदुःखदुःखिनो 10 येषां कृते प्रविशन्ति तत्समुद्धरणाय। प्रकृतत्वात् बुद्धा बोधिसत्त्वाः। तत्र तेषु सत्त्वेषु कृते कृतं स्यात्। अन्यथा तु कृतमपि न कृतं भवेत्। कृतशब्दोऽयमिह प्रकृताधिकारात् साधुकरणे वर्तते। येनैवं तेन परमापकारिष्वपि न चित्तं दूषयितव्यं। किं तु सर्वमनेकप्रकारं कायवाङ्मनोभिर्वा कल्याणमेव हित- 15 सुखमेव विधायितव्यमेषु ॥

उक्तमेव प्रसाधयन्नाह।

---

1 Ms.: niṣkrayaṇam.
2 Minaev has: avīcim. See Commentary and Çikṣās.
3 The following verses down to the çloka 134 (end of the chapter) occur at Çikṣās. 155.14—157.8.

स्वयं मम स्वामिन एव तावद्
यदर्थमात्मन्यपि निर्व्यपेक्षाः ।
अहं कथं स्वामिषु तेषु तेषु
करोमि मानं न तु दासभावं ॥ १२१

5 मम स्वामिन एव बुद्धादयः स्वयमेव[1] आत्मनैव तावदिति परामर्शः । यदर्थं येषां निमित्तं । आत्मन्यपि स्वकायजीवितेऽपि । उपक्रमेण निरपेक्षा[2] निरभिष्वङ्गास्तृणवत्परित्यजन्ति । तदहं पुनः । तेषां भृत्यः । तेषु सत्त्वेषु प्रभुपुत्रेष्वत्यन्तप्रियेषु कथं करोमि मानं । किमिति जानन्नेव तान् प्रतिकूलयामि । न 10 तु दासभावं न पुनर्दासीभूयाराधयामि ॥

इतोऽपि च सत्त्वापकारं परित्यज्य तदाराधनमेव कर्तव्यमित्याह ।

येषां सुखे यान्ति मुदं मुनीन्द्रा
येषां व्यथायां प्रविशन्ति मन्युं ।
15 तत्तोषणात्सर्वमुनीन्द्रतुष्टि-
स्तत्रापकारे ऽपकृतं मुनीनां ॥ १२२

येषां सत्त्वानां प्रियपुत्राणामिव पैतरो मुनीन्द्रा बुद्धा भगवन्तः । सुखे कायमनोजन्मनि । मुदं प्रीतिं यान्ति । येषां च

---

[1] Ms. has: svayam evam ā°.
[2] = nirvyapekṣā.

दुःखे मन्युं प्रविशन्ति । अपरितोषमापादयन्ति । एतच्चानभिमतत्वाद्भगवतामित्यमभिधीयते । न तु श्रावणीयजनकश्रावणान्तत् । श्रावकाणामपि प्रतिघानुनयासंभवः[1] । अन्यत्सुबोधं ॥ कथं पुनस्तथापकारे मुनीनामपकृतं स्यादित्याह ।

आदीप्तकायस्य यथा समन्तान् 5
न सर्वकामैरपि सौमनस्यं ।
सत्त्वव्यथायामपि तद्वदेव
न प्रीत्युपायो ऽस्ति दयामयानां[2] ॥ १२३

समन्तात्सर्वावयवानभिव्याप्य वह्निना प्रज्वलितशरीरस्य यथा पञ्चकामगुणैर्न सौमनस्यं । कायिकमपि सुखं नास्ति तस्य 10 प्र[ 83 ]ज्वलितत्वादेव दुःखेनाक्रान्तत्वात् । तद्वत्तथैव सत्त्वानां व्यथायां दुःखवेदनायां न प्रीतेः सौमनस्यस्योपायो हेतुरस्ति कृपात्मकानां भगवतां ॥

तस्मादपरिज्ञानेन क्लेशपरवशेन वा सत्त्वापकारकर्मणा यदकुशलमुपचितं[3] तदपीदानीमुपसंहारद्वारेण वान्तीकुर्व- 15 न्नाह[4] ।

---

1 It is difficult to make out the meaning of this clause. The Tib. so far as I see, gives no help.—abhimata is correctly translated by mños-pa.—na tu... = de-ni ste dad-can-ldan lta-bu yin-te = tac chraddhāvad-vad.—Of course: *na tu......sambhavaḥ*.

2 *Çikṣās.* has: mahākṛpāṇām.

3 Query: upacitam.

4 Tib. bçags-par-bya-ba.—(See gsor-ba) = to confess, to expiate.—The reading *vyaktīkurvan* seems, on palæographical grounds, inadmissible.

तस्मान्मया यज्जनदुःखदेन[1]
दुःखं कृतं सर्वमहाकृपाणां[2] ।
तदद्य पापं प्रतिदेशयामि
यत्खेदितास्तन्मुनयः[3] क्षमन्तां ॥ १२४

यस्मादेवं सत्त्वापकारे मुनीनामपकृतं स्यात्तस्मात् । पापं । अद्येदानीं प्रतिदेशयामि । संवेगबहुलस्तेषामेव महाकृपाणा-मग्रतः प्रकाशयामि । पुनरेवं संप्रजानन्न करिष्यामि । इत्या-यत्यां संवरमापद्ये । यदि प्रतिरूपमाचरितं तत्र मे क्षान्तिं कुर्वन्तु । अनुकम्पामुपादाय ॥

क्षमयित्वा सांप्रतमाराधनायेत्यादिना तदेकपरायणता-मात्मनो दर्शयति ।

आराधनायाद्य तथागतानां
सर्वात्मना दास्यमुपैमि लोके ।
कुर्वन्तु[4] मे मूर्ध्नि पदं जनौघा
विघ्नन्तु वा तुष्यतु लोकनाथः ॥ १२५

तथागतानामभिप्रेतसंपादनाय लोके लोकविषये सर्वात्मना कायेन वाचा मनसा वा दासीभावं स्वीकरोमि । तेऽपि मे

---

1 *Çikṣās.* has : sarvamahādayānām.

2 *Çikṣās.* has : duḥkhanena.

3 *Çikṣās.* has : te munayaḥ.

4 Minaev has : kurvanti.—Our reading is supported by L[3] and *Çikṣās.*

[ऽ]प्रसादं कुर्वन्तो मस्तके पादं निदधतु । तेषां पादं प्रमुदित-
चित्तः शिरसा धारयामि । अनेन मयि पूर्वापराधमपास्य जगतां
पतिर्भगवान् संतुष्टमानसो भवतु ॥

भगवत्सु च गौरवकारिभिः सत्त्वेष्वनादरो न कर्तव्य इति
प्रसाधयन्नाह ।

आत्मीकृतं सर्वमिदं जगत्तैः
कृपात्मभिर्नैव हि संशयो ऽस्ति[1] ।
दृश्यन्त एते ननु[2] सत्त्वरूपा-
स्त एव नाथाः किमनादरो ऽत्र ॥ १२६

सर्वत्रगधर्मधातुप्रतिवेधात्[3] सर्वसत्त्वसमतापादनपरात्मपरि-
वर्तनादिना[4] वा । आत्मीकृतं स्वीकृतं सर्वमिदं जगत् । न किंचि-
देव । तैर्बुद्धैर्भगवद्भिः करुणामयचित्तसंतानैः । सुनिश्चितमेवै-
तत् । अन्यथा बुद्धत्वायोगात् । तस्मात्सत्त्वरूपेण बुद्धा भगवन्त
एवैते सत्त्वा दृश्यन्ते[5] । तेन किमनादरो ऽत्र मूढ[91a]चेतसां ।
नैव युक्त इति भावः ॥

अनेकार्थत्वादपि सत्त्वाराधनस्य तत्रैव यतितव्यमित्याह ।

---

1 *Çikṣās.* : saṁçayo'tra.

2 According to Dev. 85 and to the *Çikṣās.*—Minaev has : dṛçyantu etena tu.

3 Tib. omits : °traga°.

4 See VII. 16.

5 (5). The Commentary is obscure. "Nanu buddhāḥ sattvarūpeṇa dṛçyante? sattvā eva nāthā iti kiṁ sattveṣv anādaraḥ." Such I take to be the meaning of the sentence.

तथागताराधनमेतदेव
स्वार्थस्य संसाधनमेतदेव ।
लोकस्य दुःखापहमेतदेव
तस्मान्ममास्तु व्रतमेतदेव ॥ १२७

5 स्वार्थस्य बुद्धत्वसंभारलक्षणस्यैव[1] । लोकस्य दुःखापहं तद्धेतुत्वात्[2] । एतदेवेति । सर्वत्र तथाराधनमिति योज्यं ॥ आगामिभयदर्शनादपि च परापकारवैमुख्यमेवाभ्यसनीयमित्युदाहरणोपदर्शनेनाह ।

यथैको राजपुरुषः प्रमथ्नाति महाजनं ।
10 विकर्तुं नैव शक्नोति दीर्घदर्शी[3] महाजनः ॥ १२८

यस्य[4] राज्ञो देशनिव[ा]सिनं [5]तस्यासौ पुरुषो । महाजनं नगरनिगमग्रामकर्वटादिवास्तव्यं[6] । प्रमथ्नाति विमर्दयति । स चागामिराजदण्डभयदर्शितया महाजनो वचनमात्रेणापि याव-द्विकारमुपगन्तुमसमर्थः । तेन ताडितो ऽपि संकुचितवृत्ति-
15 रेवास्ति । कस्मात्

यस्मान्नैव स एकाकी तस्य राजबलं बलं ।

---

1 Ms. has : °lakṣaṇasyāsyaiva.

2 According to Tib. : apahati-hetutvāt.

3 dīrghadarçin = mig-rgyaṅ riṅ-po. — riṅ-po = dīrgha. — mig-rgyaṅ = distance of sight, distance at which a man can be well distinguished from a woman.

4 Ms. has : tasya .—Tib. : gaṅ-gi.

5 Ms. : yasya.

6 Vāstavya = Einwohner (P. W.)

नैव स राजपुरुषोऽसहाय एव द्रष्टव्यः । कथं पुनरयमसहायो न भवतीत्याह । तस्येति । राज्ञो बलमेव तस्य बलं तत्पक्षग्रहणात् ।

**तथा[1] न दुर्बलं कंचिदपराद्धं[2] विमानयेत् ॥ १२९**

तस्मात्सत्त्वमशक्तिमपि कृतापराधं नापकुर्यात् । सो ऽपि न यस्मादेकाकी ।

**यस्मान्नरकपालाश्च कृपावन्तश्च तद्बलं ।**
**तस्मादाराधयेत्सत्त्वान् भृत्यश्चण्डनृपं यथा ॥ १३०[3]**

तस्मादाराधयेत्सत्त्वान् । कुतः । यस्मान्नरकपालाश्च तदपकारमिव प्रत्यपकारिणोऽस्य[।]चरन्तः[4] कृपावन्तश्च जिनादयस्तत्पक्षपातिनो बलं । कथमिवाराधयेत् । चण्डं राजानं सर्वानुवृत्तिकरणानुजीविनो यथा । तथा ॥ किं च लोकप्रसिद्धेन इदमेवमिहोक्तं । न तु पुनः सत्त्वाप्रसत्तिफलस्य[5] राजापराधफलेन समानता समस्तीत्याह ।

**कुपितः किं नृपः कुर्याद्येन स्यान्नरकव्यथा ।**
**यत्सत्त्वदौर्मनस्येन कृतेन ह्यनुभूयते ॥ १३१**

---

1 So Minaev.—M. has : tasmān... ; confirmed by the Commentary.
2 So L³.—Minaev has : aparādhyam.
3 According to the Comm. the second line must precede the first.
4 Ex conj.—MS. is illegible.
5 Aprasatti (compound new) = aprasāda.

किमिति कान्ना पृच्छति । किं तद्दुःखजातमुत्पादयितुं नृपतिः समर्थो भवेत् । नैवेति भावः । किंभूतं । येन दुःखजातेन नारकी वेदनानुभूयते । अतिप्र [94b][1]

[ तुष्टः किं नृपतिर्दद्याद्बुद्धत्वसमं भवेत् ।
5 यत्सत्त्वसौमनस्येन ह्यतेन ह्यनुभूयते ॥ १३२
आस्तां भविष्यद्बुद्धत्वं सत्त्वाराधनसंभवं ।
इहैव सौभाग्ययशःसौस्थित्यं किं न पश्यसि ॥ १३३
प्रासादिकत्वमारोग्यं प्रामोद्यं चिरजीवितं ।
चक्रवर्तिसुखं स्फीतं क्षमी प्राप्नोति संसरन् ॥ १३४

10 ॥ इति प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां क्षान्तिपारमिता षष्ठः परिच्छेदः ॥ ][2]

---

1 The *verso* of the leaf 94 begins with the first sentence of the viith Chapter. As the Commentary of the verses 132-134 is also wanting in Tibetan, I believe that the akṣaras : *atipra* must be read : *iti pra* [*jñākaramatikṛtāyām*...]. The translation of the last çlokas occurs in the Mdo XXVI, fol. 19*a*, at the end. (Text alone, without commentary). Their authenticity, supported by the quotation in *Çikṣās* (p. 157), is confirmed by the Chinese translation.

2 The Tibetan adds the following colophon : Rgya-gar-gyi mkhan-po paṇḍi-ta chen-po su-ma-ti-ki-rti-i zhal-sha-nas daṅ sgra-sgyur-gyi lo-tsa-va ā-tsa-rya mad-pa-chos-gyi dbaṅ-phyug-gis bsgyur-aṅ sus-pa = translated by the Indian Paṇḍita Sumatikīrti and the Lotsava translator (?) Satyadharmeçvara.

# प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां वीर्यपारमिता सप्तमः परिच्छेदः ।



तदेवं विपक्षप्रतिषेधेन त्रिधा क्षान्तिं प्रतिपाद्य वीर्यं प्रतिपादयितुमाह ।

**एवं क्षमो[1] भजेद्वीर्यं वीर्ये बोधिर्यतः स्थिता ।**
**न हि वीर्यं विना पुण्यं यथा वायुं विनागतिः[2] ॥ १**

एवमुक्तक्रमेण क्षमायुक्तः क्षमः समस्ति[3] क्षान्तिः । भजेद्वीर्यं वीर्यमारभेत । अन्यथा दुःखासहिष्णुतया वीर्यस्य प्रवृत्तिर्न स्यात् ॥ कस्मात्पुनर्वीर्यमुपादीयत इत्याह । वीर्ये इत्यादि । यस्माद्वीर्ये बुद्धत्वमवस्थितं । तद्धेतुकतया तदायत्तत्वाद्बुद्धत्वस्य । एतदपि कुतः । यस्मान्न वीर्यमन्तरेण पुण्यं पुण्यसंभारोऽस्ति । उपलक्षणमेतत् । ज्ञानमपि द्रष्टव्यं । वीर्यस्योभयहेतुत्वात् । तदनेन वीर्यात्पुण्यज्ञानसंभारौ ताभ्यां च बुद्धत्वमित्युक्तं भवति ॥
वीर्यस्वरूपापरिज्ञानात्पृच्छति ।

---

[1] Minaev has: kṣami; kṣamo, according to M., Paris-Mss. and a fragment (F.) on Palm-leave (Bendall, 1899).

[2] Minaev has: ... vinā gatiḥ; = vinā agatiḥ.—Cp. Kern, *Lotus* 139: padaviṁ tu vinā 'gatiḥ.—Tib.: rluṅ med gyo-ba med-pa bzhin.

[3] So Ms.—Tib.: raṅ-gis goms-par-byas-pai bzod = svayam abhyasta kṣāntiḥ.

किं वीर्यं कुशलोत्साहस्तद्विपक्षः क उच्यते ।
आलस्यं कुत्सितासक्तिर्विषादात्मावमन्यना[1] ॥ २

किमेतद्वीर्यं नाम । अत्राह । कुशलोत्साहः । यो ऽयं कुशलकर्मणि दानादौ श्रुतादौ च समुद्यमः । तद्वीर्यमभिधीयते । अकुशले तु कौसीद्यमेव[2] । विपक्षेणोपहतं वीर्यमनङ्गमेवाभिमतसिद्धय इति तद्विपक्षमपनयनाय दर्शयितुमाह । तद्विपक्ष इत्यादि । तस्य वीर्यस्य विरुद्धो विनाशाय पक्षो विपक्षः क उच्यते । उत्तरमाह । आलस्यमित्यादि । आलस्यं कौसीद्यं । कायमनसोरकर्मण्यता । कुत्सिते जुगुप्सनीये हास्यलास्यादावासङ्गः । विषादो विषण्णता । दुःकरे कर्मणि चित्तस्य विनिवृत्तिः । अनध्यवसानमित्यर्थः । तेनात्मनो ऽवमन्यना ऽवज्ञा । अयं तद्विपक्षः ॥

तदालस्यनिषेधाय तत्कारणं तावदुपदर्शयितुमाह ।

अव्यापारसुखास्वादनिद्रापाश्रयतृष्णया ।
संसारदुःखानुद्वेगादालस्यमुपजायते ॥ ३

संसारदुःखानुद्वेगादसंवेगात्[3] । यो ऽयमव्यापारो निर्व्यापारता । तत्र तेन वा[4] सुखास्वादः सुखाभिरामः । स च निद्रा

---

1 F. has: kutsitaçaktir; Minaev: kutsitāç°.

2 Tib.: dge-ba-la mi-spro-ba ni le-lo-ñid-do = kuçale 'nudyamaḥ kausīdyam.—Infra, le-lo-ñid = ālasya; sñoms-las = kausīdya.

3 See VI. 21.

4 Tib.: de-la añ des bde-ñoms......

च मि[85a]द्धाक्रमणं । ताभ्यां मिद्धाक्रमणमपाश्रयतृष्णा[1] । अवष्टम्भनाभिलाषः । तया । आलस्यमुपजायत इति योजनीयं ॥ यदि वा । संसारदुःखानुद्वेगाद्व्यापारः । क्वचिदपि कुशल-कर्मणि न प्रवृत्तिः । तस्मात्सुखास्वादः । ततो निद्रा । तस्या-स्वापाश्रयतृष्णा । तया ॥ 5

अतः संसारदुःखानुद्वेगनिवर्तनार्थमियमत्र संवेगभावनामुखी-कर्तव्या । इत्याह ।

क्लेशवागुरिकाघ्रातः[2] प्रविष्टो जन्मवागुरां ।
किमद्यापि न जानासि मृत्योर्वदनमागतः ॥ ४

वागुरिका मत्स्यादिवधिका जालिका उच्यन्ते कैवर्तादयः । 10 क्लेशा एव वागुरिकाः । तैराघ्रात आयत्तीकृतः[3] । कथमिति चेत् । प्रविष्टो जन्मवागुरां । निकायसभागतोत्पत्तिरेव वागुरि-काजालं[4] । तत्प्रविष्टः तदन्तर्गत इत्यर्थः । इदमिह तदात्मसात्करणे कारणं । अद्यापि एतां दशां प्राप्तोऽपि मृत्योर्मुखं प्रविष्टः सन् किमिति न वेत्सि । जातस्य मरणमवश्यंभावीति भावः ॥ 15

इदमपरं संवेगकारणमाह ।

---

1 middhākramaṇam not translated in Tib.

2 Minaev : āghātaḥ ; M. : āghrātaḥ—Tib. : bçor-ba (hohor-ba = to hunt, to chase) ; ña gçor-ba = to fish.—āghrāta = * ākrānta (Böhtlingk).

3 Tib. : dbaṅ-du byas-pa.

4 So Ms.—vāgurikā = vāgurā ? or rather vāgurika° ?

स्वयूथ्यान्मार्यमाणांस्त्वं[1] क्रमेणैव[2] न पश्यसि।
तथापि निद्रां यास्येव चण्डालमहिषो यथा॥ ५

यूथं वर्गः। तत्रभवा यूथ्याः। यैः सह बाल्याद्यवस्थायां क्रीडितरमितादिना विचरितं। तान् स्ववर्ग्यान्। चण्डाला-
5 नामवश्यंमारणीयमहिषवत्[3]। न पश्यसि ममापीयमवस्थितिः स्यादिति॥ अवश्यमिह कियत्कालं परिलभ्य मृत्युरागमिष्यति। तेन तावत्कालं सुखानुभवनमेव मम युक्तमित्यपाह। यदि नामैवं तथापि नावश्यंभाविनि मरणे विश्वासो युक्तः।

यमेनोद्वीक्ष्यमाणस्य बद्धमार्गस्य सर्वतः।
10 कथं ते रोचते भोक्तुं कथं निद्रा कथं रतिः॥ ६

इति वध्यपुरुषस्येव सर्वतो वध्यघातकैरधिष्ठितस्य वध्यभूमिं नीयमानस्य निःशरणमपश्यतः [85b] सुखासिकावलम्बनमनुचित-मेव भवतः। तस्मात्संवेगतो भावनयानया हेतुनिवर्तनादालस्य-मपास्य कुशलपक्षोत्साहवर्धनमनुष्ठेयं॥

15 अथापि स्यात्। यदि नामावश्यंभाविता मृत्योस्तथापि तत्संनिधानमवगम्यालस्यमपहास्यामि। इत्याशङ्क्याह।

---

1 Minaev has: svayūthān.—Beings of the same nikāya (see p. 245, l. 12).
2 So F.—Minaev: evam.
3 Ms. °vasyam°.

यावत्संभृतसंभारं मरणं शीघ्रमेष्यति ।
संत्यज्यापि तदालस्यमकाले किं करिष्यसि ॥ ७

संभृतः सञ्चीकृतः संभारः सामग्री वधाय व्याधिजरादिलक्षणो येन । यावदिति शोकोक्तं । शीघ्रं त्वरितमभिसंनिधानात् । तदा मृत्युमुखान्तर्गतः । अप्रसमये । आलस्यं त्यक्त्वापि किं करिष्यसि । न तदा किंचित्प्रयोजनमिति भावः ॥

अकालतामेवास्य समर्थयितुं श्लोकत्रयेणाह ।

इदं न प्राप्तमारब्धमिदमर्धकृतं स्थितं ।
अकस्मान्मृत्युरायातो हा हतोऽस्मीति चिन्तयन् ॥ ८
शोकवेगसमुच्छूनसास्रुरक्तेक्षणाननान् ।
बन्धून् निराशान् संपश्यन्यमदूतमुखानि च ॥ ९
स्वपापस्मृतिसंतप्तः शृण्वन्नादांश्च नारकान् ।
त्रासोच्चारविलिप्ताङ्गो विह्वलः किं करिष्यसि ॥ १०

इदं यदनागते कर्तव्यतया मनसिकृतं तन्न प्राप्तं । इदमारब्धं यत्कार्यमादित एव कर्तुमिष्टं । इदमर्धकृतं स्थितं यत्किंचिन्निष्पन्नं किंचिदनिष्पन्नं । इति कार्यपर्यन्तमगतस्यैव अकस्मान्मृत्युरागतो मम । अहो बतातिकष्टं । हतोऽस्मीति विचिन्तयन् विह्वलः किं करिष्यसीत्यनागतेन संबन्धः ।

शोकः प्रियविप्रयोगकृतश्चित्तपरितापः । तस्य वेगोऽनिवार्य-

प्रवृत्तिः। तेन सन्त्रस्तानि समुन्नतानि साश्रूणि सबाष्पाणि
रक्तानि ताम्रवर्णानि लोचनानि येष्वाननेषु तानि तथा।
तथाभूतानि आननानि मुखानि येषां बन्धूनां ते तथा। तान्
संपश्यन् विलोकयन्। तत्र कर्मकाधिकारात्परस्मैपदं दृष्टः[1]।
5 किंभूतान्। निराशान्। क। प्रत्युज्जीवनं प्रति त्यक्ताशान्[2]।
तत्त्राणाख्यविकलान् वा॥ मरणसमयोपस्थितकृतान्तानुचरमुखानि
च स[86a]रोषपरुषभ्रुकुटीनि संपश्यन् विकलः किं करिष्यसि।

स्वयं कृतपापकर्मस्मरणेन मरणसमये किमित्येवं मया
कृतमिति पश्चात्तापेन तापितः। नैतावन्मात्रमेव। किं तु
10 पुरुषाकारांश्च नारकान्। तीव्रकारणानुभवनदुःखनिर्मुक्तान् विक्रो-
शितशब्दाकारकसमुद्भूतान् अर्थान्तरकोपाणामेव[3]। तच्छ्रुत्वा ममा-
प्ययमेवावस्थेति संत्रासेन यः पुरीषोत्सर्गो विट्प्रवृत्तिः तेनोप-
लिप्तगात्रः। विकलः। अनायत्तकायवाक्चित्तप्रचारः। किं
करिष्यसि सर्वक्रियासु निवृत्तव्यापारः।

15 इति मत्वा स्वस्थावस्थायामेव यतितव्यं। इति शिक्ष-
यितुमाह।

---

1 Ms. tatrāk°.—This clause is wanting in Tibetan which does not, as a rule, translate grammatical observations.—*Mahābhāṣya* I. 3, 29, *Vart.* 2. Sampaçyan should by I. 3. 29 be ātmanepadam, if the word were intransitive, because in that rule there is the adhikāra 'akarmaka'; but in the clause it is not intransitive, not ātmanepadam. (F. W. Thomas).

2 Tib.: gaṅ-du zhe-na, slar-gson-pai bsam-pa daṅ bral-ba am.

3 So Ms.—Tib. : ḥdon..hba-zhig-la khro-bai sgra bzhin-du = arthāntare kopaçabdam iva.

जीवमत्स्य इवास्मीति युक्तं भयमिहैव ते[1] ।
किं पुनः कृतपापस्य तीव्रान्नरकदुःखतः ॥ ११

जीवन्त एव मत्स्याः क्रमेण भक्षणार्थं प्रायः प्राग्दिग्निवासिभिरेव जनै रक्ष्यन्ते । जीवनोपलक्षिता मत्स्या जीवमत्स्या इति तेषामेव समयः । शाकपार्थिवादिवन्मध्यपदलोपी[2] समासः । तद्वदहमपि । अद्य श्वो वा नियतमेव मरिष्यामि । इति मनसि कृत्वा युक्तं भयमिहैव ते । इहैव संप्रजानदवस्थायामेव तवासंप्राप्तमरणस्य मरणतः । किं पुनः कृतपापस्य भवतो भयं युक्तं न भवति । इत्यध्याहार्यं । अतिदुःसहान्नरकदुःखतः ॥

निर्व्यापारसुखास्वादाभिरतमधिकृत्याह ।

स्पृष्ट उष्णोदकेनापि सुकुमार प्रतप्यसे ।
कृत्वा च नारकं कर्म किमेवं स्वस्थमास्यते ॥ १२

तप्तवारिणापि संस्पृष्टः । सुकुमारेति संबोधनं । अतिमृदुशरीरतया सोढुमशक्तोऽसि । यद्येवं तदा । कृत्वा चेत्यादि सुबोधं ॥

अपरमपि तं प्रत्याह ।

निरुद्यमफलाकाङ्क्षिन् सुकुमार बहुव्यथ ।
मृत्युग्रस्तोऽमराकार[3] हा दुःखित विहन्यसे ॥ १३

सुखहेतूत्पादनाय व्यापारशून्योऽसि । अथ च तस्य फलं

---

1 Minaev has: *me*. See Comm.

2 Çākapārthiva = çākapriyaḥ pārthivaḥ *Mahābhāṣya Vārt.* 8 to Pāṇ 2, 1, 69. (not *Siddh. k.* as stated in the St. Petersburg-Dict.)

3 Minaev: °grasto mara°.

32

सुखमभिलषसि । दुःखा[86b]द्बिभ्युरसि । अथ च बहुभयोऽसि ।
सर्वदुःखाकरत्वात् । मृत्युना च वशीकृतोऽसि । अथ चामरण-
धर्माणमात्मानं मन्यसे । एवं च विपर्यस्तं चरितमस्य विपश्यन्[1]
करुणायमानः सखेदमेनमाह । हा दुःखित विहन्यसे । संमोह-
5 बहुलतया कष्टां दशां प्रविष्टोऽसि । आत्मगतमेव वा विमृ-
शति । एवमन्यत्रापि यथासंभवं द्रष्टव्यं । निश्चमादीनि
चामन्त्रितपदानि ॥

निद्रापरतन्त्रं प्रत्याह ।

**मानुष्यं नावमासाद्य[2] तर दुःखमहानदीं ।**
**10 मूढ[3] कालो न निद्राया इयं नौर्दुर्लभा पुनः ॥ १४**

अष्टाक्षणविनिर्मुक्तं मनुष्यभावप्रतिलम्भं नावमिवाभ्युदयादि-
पारगमनाय प्राप्य । तर प्लवस्व दुःखमयीं महानदीं । सर्व-
दुःखानि पृष्ठीकुरुष्व वीर्यावलम्बनेनेति यावत् । हे मोहपरवश
नायं कालो निद्रायाः । यावदियं नौः संनिहिता । यदि
15 नेदानीमेव यत्नः क्रियते । तदा पुनरियं दुर्गतिगतस्य नौर्दुर्लभा
भविष्यति । यदुक्तं । पुनरप्येष समागमः कुत इति[4] ॥

एवमालस्यं निवार्य कुत्सितासक्तिं निवारयन्नाह ।

---

1 Ms. :...viparyastaḥ / caritam asya vaçyaḥ.—(ḥ = ṁ.)—In margin *na* (°çyan) ; *sya*, corrected to *pya* by a second hand.—Tib. has : mthoṅ-nas = dṛṣṭvā.

2 According to F. : āpādya.

3 Minaev : mūḍhak° (typographical error).

4 Supra, I. 4.

मुक्त्वा धर्मरतिं श्रेष्ठामनन्तरतिसंततिं ।
रतिरौद्धत्यहासादौ[1] दुःखहेतौ कथं तव ॥ १५

शुभकर्मणां रतिं श्रेष्ठामुत्तमां । किंभूतां । अनन्तरतिसंततिं । सुगतिपरम्परासंजननादनन्तापर्यवसाना रतिसंततिः सुखप्रवाहो यस्याः सा तथा । अत एव उत्तमेत्युक्तं । तामपहाय रतिरभिरामः । औद्धत्यमुन्नतता कायचित्तयोः क्रीडनशीलतेति यावत् । हासो वागौद्धत्यं । सरभसस्य[2] वाग्विकार इति यावत् । आदिशब्दाद्गीतादिपरिग्रहः । तत्र कथं रतिस्तव । न युक्तेत्यभिप्रायः । किंभूते दुःखहेतौ । नरकादिदुर्गत्युपनयनाद्दुःखस्य [87a] हेतुर्भवति ॥

एवं कुत्सितासक्तिमपि निराकृत्य विषादात्मावमन्यनां वीर्यविपक्षं निराकर्तुं । अपरमपि च तद्विपक्षनिरसनाय प्रतिपादयन्नाह ।

अविषादबलव्यूहतात्पर्यात्मविधेयता ।
परात्मसमता चैव परात्मपरिवर्तनं ॥ १६

विषादविपरीतोऽविषादः । बलानां व्यूहः समूहो वक्ष्यमाणलक्षणः । तात्पर्यं निपुणता । आत्मविधेयता आत्मवशवर्तिता । एताः सर्वाः कृतद्वन्द्वसमासाः[3] । यदि वा । एभिः सहितात्मविधे-

---

1 So M.—Minaev: °hāsyādau.

2 Tib. has: dga-ba daṅ bcas-pai ṅag-gi...—dga-ba = ānanda, rabhasa = fierce joy.

3 Tib. has: zlas dbye-bai tshig bsdus-pa yin-no (See Jäschke, s. voc. zla-bo)—kṛta, untranslated.

यता। परात्मसमतापरात्मपरिवर्तने ध्यानपरिच्छेदे[1] वक्ष्यमाणे।
इदमपि समस्तं कौसीद्यप्रहाणाय वीर्यसमृद्धये प्रभवतीत्युद्देशः॥

उद्दिष्टमेवार्थं क्रमेण निर्दिशन्नाह।

**नैवावसादः कर्तव्यः कुतो मे बोधिरित्यतः।**

5 कुतो मे बोधिरिति। कथमहं वराकः सम्यक्संबोधिभाजनं।
बुद्धत्वं हि तीक्ष्णेन्द्रियस्यारब्धवीर्यस्य [2]अपरिमितपुण्यज्ञान-
संभारैरतिदुष्करकर्मानुष्ठानैरनेकैश्च कल्पासंख्येयैः कस्य चित्पुरुष-
विशेषस्य साध्यं भवति। अहं तु न तादृश इति कथं मद्वि-
धानां तथाविधं बुद्धत्वं संभाव्येत। इत्येवमाकारमनस्कारादव-
10 सादो विषादो न कर्तव्यः। महार्थभ्रंशस्य हेतुत्वात्। यथोक्तं।
अवसादोऽप्यनर्थ इति[3]॥ कस्मात्।

**यस्मात्तथागतः सत्यं सत्यवादीदमुक्तवान्॥ १७**

यस्मात्तथागत इदं वक्ष्यमाणं सत्यमवितथमुक्तवान् कथितवान्।
कथं ज्ञायत इत्याह। सत्यवादीति। ज्ञानक्रियासंभवादविपरी-
15 तवादी। अतः सत्याभिधानहेतुपदमेतत्॥ किं तत्सत्यमुक्तवान्।

**तेऽप्यासन्दंशमशका मक्षिकाः कृमयस्तथा।**
**यैरुत्साहवशात्प्राप्ता दुरापा बोधिरुत्तमा॥ १८**

इत्याह। तेऽपि बुद्धा भगवन्तः पूर्वं शाक्यमुनिरत्नशिखि-
दीपंकरप्रभृतयः संसारसागरावर्तान्तर्गताः [87b] पृथग्जनावस्थायां

---

1 = In the eighth chapter.
2 Ms.: aparamita°.
3 Cp. *Çikṣās.* 54, 2.

परिभ्रमन्त एवंभूता एवासन् बभूवुः । येनात्मावबलात् वीर्यो-त्कर्षसामर्थ्यात् संभारान् संभृत्य प्राप्ताधिगता दुरापा दुर्लभ-प्रतिलम्भा बोधिरुत्तमानुत्तरा । आरब्धवीर्यस्य न किं सिद्धु-प्करमिति भावः । इदं तत्सत्यं ॥

अतो मम पुनरतितरां न दुर्लभा बोधिरित्याह । 5

किमुताहं नरो जात्या शक्तो[1] ज्ञातुं हिताहितं ।
सर्वज्ञनीत्यनुत्सर्गाद्बोधिं[2] किं नाप्नुयामहं[3] ॥ १९

किं पुनरहं मनुष्यभूतो जन्मना । शक्तो ज्ञातुं हिताहित मिति । इदं हितमिदमहितं । शुभमशुभं च कर्मेत्युपदिष्टं । ज्ञातुमवबोद्धुं समर्थोऽस्मि । इति विचिन्त्य । सर्वज्ञस्य सर्ववस्तु- 10 तत्त्ववेदिनो नीतिर्नय उपादेयतत्त्वप्रतिपादनं । तस्यानुत्सर्गाद् परित्यागात् । तस्यादानोपादानसेवनादित्यर्थः । बुद्धत्वं नाप्नुया-महं । काक्वा[4] पठनाद् आप्नुयामेवेति ।

एतद्भगवता रत्नमेघे[5] दर्शितं । यथोक्तं । इह बोधिसत्त्वो नैवं चित्तमुत्पादयति । दुष्प्रापा[6] बोधिर्मनुष्यभूतेन सता । 15 इदं च मे वीर्यं परीत्तं[7] च हीनं च । कुसीदो ऽहं । बोधिश्चा-दीप्तशिरश्चैलोपमेन बहून् कल्पान् बहूनि कल्पशतानि [बहूनि]

1 Minaev has: jātyāç°.
2 Minaev has: sarvajñānīty°.
3 Minaev has: nāpnuyāmy aham.
4 See Apte, s. voc. kāku.—Tib.: tshig-zur-gyis.
5 = *Çikṣās.* 54, 2-10.
6 *Çi.*: duṣprāpā.
7 Ms.: parītam; *Çi.* omits hīnaṁ ca.

काश्यपश्चापि समुदाचरता[1] समुदानेतव्या। तस्मादस्माभिर
ईदृशं भारमुद्वोढुं॥ किं तर्हि बोधिसत्त्वेनैवं चित्तमुत्पादयि-
तव्यं। ये ऽपि ते ऽभिसंबुद्धास्तथागता अर्हन्तः सम्यक्संबुद्धाः[2]।
ये ऽपि चाभिसंभोत्स्यन्ते। ते ऽप्येवंरूपेणैव नयेन। ईदृश्या
5 प्रतिपदा। ईदृशेनैव वीर्येणाभिसंबुद्धाः। यावच्च ते तथा-
गतभूता एवाभिसंबुद्धाः। अहमपि तथा तथा घटिष्ये। तथा
तथा व्यायंस्ये। सर्वसत्त्वसाधारणेन वीर्येण। सर्वसत्त्वारम्बणेन[3]
वीर्येण यथाहमप्यनुत्तरां सम्य[88a]क्संबोधिमभिसंभोत्स्य इति॥

युक्तमेवैतत्। केवलमतिदुष्करकर्मश्रवणादनध्यवसायो निवर्त-
10 यितुमशक्य इति चिन्तयन्नाह।

**अथापि हस्तपादादि दातव्यमिति मे भयं।**

करचरणशिरःप्रभृतिदानमन्तरेण बुद्धत्वं न प्राप्यत इत्यति-
दुष्करकर्मसु प्रवृत्तिभयादुत्साहो निवर्तत एव। इति चेन्मन्यसे
15 स्वचित्तमेवमाह।

**गुरुलाघवमूढत्वं तन्मे स्यादविचारतः॥ २०**

तदेतद्गुरुलाघवमूढत्वमेव मे। अल्पे बहुतरं बहुतरे
चाल्पतरमिति मोहवशेनाविचारतो ऽविवेकान्मम स्यान्न तु पर-
मार्थविचारतः॥ परमार्थविचारेण गुरुलाघवविपर्यास एवाय-
मित्युपदर्शयन्नाह।

---

1 samudācaratā, omitted by *Çi*.
2 *Çi*. makes here reference to the Buddhas of the present time.
3 Ms. has: ārambhaṇena (Sic).

छेत्तव्यश्चास्मि भेत्तव्यो दाह्यः पाट्योऽप्यनेकशः[1]।
कल्पकोटीरसंख्येया न च बोधिर्भविष्यति॥ २१

संसारचारके निवसंस्तथाविधकर्मवशाच्छेत्तव्यश्चास्मि कर-चरणाद्यङ्गप्रत्यङ्गच्छेदनान्नरकादिषु। तथा भेत्तव्योऽस्मि शक्ति-कुन्तादिभिः। दाह्यो नरकदहनादिना। पाट्यो ज्वलितक्रक-चादिना। अनेकशोऽनेकवारान्। नरकादिषु कारणमनु-भवन्नपर्यन्तपथि संसारे। कल्पानां कोटीरसंख्येयाः संख्यातुम-शक्याः। इत्यकामस्यापि दुःखमपर्यन्तमनेकप्रकारमापतिष्यति। न च बुद्धत्वसंभाराय तत्संपद्यते॥

इदं संसारापर्यन्ततया दुःखं बहुतरं निष्फलं च। बुद्धत्व-प्रसाधकं पुनरल्पतरं सफलं चेत्युपदर्शयन्नाह।

इदं[2] तु मे[3] परिमितं दुःखं संबोधिसाधनं।
नष्टशल्यव्यथापोहे तदुत्पाटनदुःखवत्॥ २२

यद् बुद्धत्वप्रसाधकं तदिदं दुःखं परिमितं मम प्रतिनियत-कालभावितया। दुःख(प्रशमन)हेतुश्च[4]। तत्तथाभूतं शल्यं। तेन व्यथा। तस्या [अ]पोहो निवृत्तिः। तन्निमित्तं तदुद्धारणाय। यावज्जीवं तत्कृतदुःखप्रहाणायेत्यर्थः। तस्य नष्टशल्यस्यो[88b]-

1 So M.—Minaev has: dāhyapāṭyair anekaçaḥ.

2 Minaev has: etat.—See Comm.

3 So Minaev; M. has: etat parimitaṁ duḥkhaṁ saṁbodhisukhasādhanam.

4 This is the reading of the Ms., praçamana being written in the margin by a second hand. It cannot be correct, as the Tib. has: ...sdug-bsṅal-gyi rgyu de-lta-bur gyur-pai zug-rṅu des....=duḥkhahetus tat tathābhūtaṁ çalyaṁ tena....

त्पाटनं । शरीरादुद्धरणं । अपकर्षणमिति यावत् । तेन च दुःखं प्रतिनियतकालमल्पतरं । दीर्घकालिकदुःखोपशमनिमित्तं । तद-त्सोढुमुचितमिदमपि दुःखं ॥

अतो ऽपि समुचितमिदमित्याह ।

5 सर्वे ऽपि वैद्याः कुर्वन्ति क्रियादुःखैररोगतां ।
तस्माद्बहूनि दुःखानि हन्तुं सोढव्यमल्पकं ॥ २३

सर्वे ऽपि न के चिदेव । [1]लङ्घनपाचनादिकैर्यथेष्टाहार-विहारप्रतिषेधजनितैश्च क्रियादुःखैः । रोगपीडितानामारोग्यं विदधति । अन्यथा तत्कर्तुमशक्यं । यत एवं तस्मादति-10 शयेनाल्पमल्पकं दुःखं सोढव्यं । किमर्थं । बहूनि दुःखानि हन्तुं । सर्वसत्त्वानामात्मनश्च दीर्घकालिकसर्वदुःखप्रशमनायेत्यर्थः । एवं तावत्स्वीकर्तुं युक्तं धीमतः ॥ न चेदं युक्तमपि दुष्करं कर्मादि-कर्मिकस्य[2] प्रथममनुज्ञातं भगवतेति दर्शयन्नाह ।

क्रियामिमामप्युचितां वरवैद्यो न दत्तवान् ।

15 क्रियामिमां समनन्तरप्रतिपादितां दुःखोत्पादनीं । उचितामपि सेवनीयामपि । वरवैद्यो[3] भगवान् । सर्वथा सर्व-

---

1 laṅghana = das Fasten, Hungercur, pācana = Digestivum, *Caraka* 1.22, 6.3 St. Petersburg-Dict.

2 We have tried to ascertain the meaning of the word *ādikarmika* (Bouddhisme, Etudes et Matériaux). Our hypothesis was wrong to a certain extent. M. Oldenberg has criticised the translation given by Cowell and Neil (Divyâvadâna): beginning a wrong action without finishing it. (See Buddhistische Studien, p. 650). His own translation refers to a special case.—The *ādikarmika* is the "débutant," who has taken the saṁvara, but who is wanting in *abhyāsa* (See *Çikṣas*. Index, p. 375).

3 See Kern, Manual, p. 47, and *Vyādhisūtra*, J.R.A.S., 1903, III.

व्याधिचिकित्सकः। प्रथमं न दृष्टवान् न कर्तव्यतया प्रतिपादितवानादिकर्मिकस्य ॥

कथं तर्हि रागादिव्याधीनपनयति। आह।

**मधुरेणोपचारेण चिकित्सति महातुरान् ॥ २४**

सुकुमारतरेणोपचारेणोपक्रमेण। यथाक्रमं चिकित्साप्रणयनेनेत्यर्थः। चिकित्सति रोगमुक्तान् करोति। महातुरान् दीर्घरोगिणो रागादिमहाव्याधिग्रस्तान् ॥

कः पुनरयं मधुरोपचार इत्याह।

**आदौ शाकादिदानेऽपि नियोजयति नायकः।**
**तत्करोति क्रमात्पश्चाद्यत्स्वमांसान्यपि त्यजेत् ॥ २५**

मात्सर्यमलापनयनार्थं सुखसुखेन[1] संभारसंवर्धनार्थं च। प्रथमपरित्यागे शाकसक्तुपिण्डिकादिदानेन प्रथमतरं प्र[89a]-वर्तयति नायको भगवान्। पुनस्तथोपायविशेषेण नियोजनं करोति। तदिति लोकोक्तौ वा। यद्यथा दाता मृदुदानाभ्यासक्रमेण अधिमात्राधिमात्रदानाभ्यासप्रकर्षमासादयन् पश्चादुत्तरकालमकष्टेनैव स्वमांसरुधिरादिकमपि प्रयत्न एव प्रयच्छेत् ॥

कथं पुनरेतदेवमित्याशङ्क्याह।

**यदा शाकेष्विव प्रज्ञा स्वमांसेऽप्युपजायते।**
**मांसास्थि त्यजतस्तस्य तदा किं नाम दुःकरं ॥ २६**

---

1 Sukhasukhena, given in St. Petersburg Dict. from Lexx. only.

यस्मिन् काले दानाभ्यासात्परमप्रकर्षगमनात्[1] सर्वथापगतमात्सर्यतया शाकेष्विव स्वमांसेऽपि निरासङ्गा बुद्धिरुपजायते । तदा स्वमांसादिदानेऽपि नाशक्यानुष्ठानबुद्धिरिति तस्मिन् काले किं नाम दुःकरं । नैव किंचिदित्यर्थः ॥

5 यथापि स्यात् । अतिदीर्घकालं परार्थे संसरतो दुःखं कथमिव परिहर्तुं शक्यमित्याह ।

**न दुःखी त्यक्तपापत्वात्पण्डितत्वान्न दुर्मनाः ।[2]**
**मिथ्याकल्पनया चित्ते[3] पापात्काये यतो व्यथा ॥ २७**

द्विविधमेव हि दुःखं बाधकमुपजायते कायिकं मानसिकं
10 चेति । तदेतद्द्वयमपि बोधिसत्त्वस्य न संभवति । कायवचनमनोभिः सर्वावद्यविरतेः कायिकं दुःखमस्य न जायते । युक्त्यागमाभ्यामुभयनैरात्म्यस्य[4] च निश्चयनान्मानसमपि कुतः । यतो मिथ्याकल्पनया ऽसद्विकल्पेनात्मात्मीयपक्षप्रवृत्तेन भावाभिनिवेशकृतेन वा चित्ते दुःखं । पापात्प्राणातिपातादेः काये ।
15 एवं तावद्दुःखहेतुपरिहाराद्दुःखमस्य न जायत इति प्रतिपादितं ॥

इदानीं सुखमेव केवलमवाप्नोतीति प्रतिपादयन्नाह ।

---

1 Prakarṣagamana, see Supra II. 20, *Bodhicaryā* v.t. Index, *Nyāyabindu*. 14, 22.

2 L' has: na saṁkitamanāś (sic).

3 L' has: vikalpacittena.

4 Bāhya°, adhyātmaśūnyatā, or pudgala°, dharma°, to be established by the Sacred Books (āgamas) and by the common pramāṇas (anumāna, yukti).

पुण्येन कायः सुखितः[1] पाण्डित्येन मनः सुखि[2]।
तिष्ठन् परार्थं संसारे कृपालुः[3] केन खिद्यते॥ २८

सुखं जातमस्य कायस्येति सुखितः। सुखं विद्यतेऽस्य मनस इति सुखि। एवमुभयसुखसमन्वागतत्वात् कृपा[89b]वान् परार्थं संसारे संसरन् केन दुःखेन खिद्यते। खेदं गच्छते। यदि वा केन खिद्यते। खेदहेतोरभावान्न केनचिदिति भावः[4]। तत्किमिदमकारणभीरुतया वैमुख्यमुपादीयते॥ 5

स्यादेतत्। दीर्घकालमासेवितभावितबहुलीकृतेन भवता पुण्यसंभारेण सम्यक्संबोधिरधिगम्यते। तद्वरं मुमुक्षूणां शीघ्र-कामतया श्रावकयानमेवाश्रयणीयं स्यादित्याशङ्क्याह। 10

क्षपयन् पूर्वपापानि प्रतीच्छन् पुण्यसागरान्।
बोधिचित्तबलादेव[5] श्रावकेभ्योऽपि शीघ्रगः॥ २९

पूर्वकृतानि यानि पापानि तानि बोधिचित्तबलादेव क्षयीणि कुर्वन्। यथोक्तं प्राक्।

युगान्तकालानलवन्महान्ति 15
पापानि यन्निर्दहति क्षणेनेति।[6]

तथा बोधिचित्तबलादेव प्रतीच्छन्नाददानः पुण्यसागरान्। यदुक्तं।

---

1 L² M. sukhitaḥ kāyaḥ.
2 Minaev has: sukhi.
3 L², M.: dayāluḥ.
4 See supra VI. 106.
5 L²: °balād eṣa.
6 See supra I. 14.

अविच्छिन्नाः पुण्यधाराः प्रवर्तन्ते नभःसमा इति ॥[1]

एवंविधोपायबलजवेन महायानमारूढो बोधिसत्त्वः श्राव-
केभ्योऽपि शीघ्रगत्वरितगामी ॥

**एवं सुखात्सुखं गच्छन् को विषीदेत्सचेतनः ।**
5 **बोधिचित्तरथं प्राप्य सर्वखेदश्रमापहं ॥ ३०**

प्रतिपादितमेवार्थं पिण्डीकृत्य दर्शयति । एवमुक्तक्रमेण सर्वावद्यविरतेः पुराकृतपापक्षयाच्च स्वप्नेऽपि दुर्गतिगमनाभावात् । तीव्राभिप्रायेणानेकसुखेनाचनिंश्रमाकाशधातुव्यापिनः पुण्यसागरस्याभिवर्धनाच्च सुगतिपरम्परासन्मार्गावतरणबोधिचित्त-
10 रथमिवासाद्य । आरुह्येति यावत् । सर्वखेदैः परिक्लेशैः श्रम आयासः । तमपहन्तीति प्रतिपादितनयेन । सर्वखेदश्रमं वापहन्तीति तं । सुखादेकस्मादपरमुत्तरोत्तरमधिकाधिकं सुखं देवमनुष्यसंपत्तिलक्षणं गच्छन्ननुप्राप्नुवन् । को नाम प्रेक्षावान् विषाद[90a]मापद्येत ॥

15 तदेवमनेकविधविषादनिमित्तप्रतिषेधेनाविषादं प्रतिपाद्य बलव्यूहं[4] प्रतिपादयितुमाह ।

**छन्दस्थामरतिमुक्तिबलं[3] सत्त्वार्थसिद्धये ।**
**छन्दं दुःखभयात्कुर्यादनुशंसांश्च भावयन् ॥ ३१**

---

1 See supra I. 19.
2 See *Çikṣâ*. 361, 9.
3 Minaev has: chandaḥ sthāma ratir muktibalam ; M.: chandasthāna°.
4 See VII. 16.

इदमप्युद्देशवाक्यमेव। छन्द इह कुशलाभिलाषः। स्थाम आरब्धदृढता। रतिः सत्कर्मासक्तिः। मुक्तिरसामर्थ्ये तावत्काल-मुत्सर्गः। एतच्चतुरङ्गबलं। अनेकावयवसमुदायात्मकत्वात्। हस्त्यादिबलवत्। सत्त्वार्थसिद्धये। वीर्यहेतुत्वादस्य वीर्यस्य च सर्वाभिमतसाधनत्वादिति भावः॥ 5

तत्र छन्दबलस्य बहुकरत्वाच्छन्दमित्यादिनास्योत्पत्ति-निमित्तमाह। दुःखभयादिति। अशुभकर्मणो दुःखं जायत इति पापाच्छन्दं कुर्यात्। अनुशंसांश्च भावयन्। अनुशंसाः फलद्वारेण गुणविशेषाः। ते चार्थात्कुशलकर्मण एव। तान् भावयन्। शुभकर्मणोऽनेकप्रकारेण मधुरफलोत्पत्तिं पुनः पुनः संचिन्तयन्नित्यर्थः॥ 10

सांप्रतं बलस्य व्यापारमुपदर्शयितुमाह।

**एवं विपक्षमुन्मूल्य यतेतोत्साहवृद्धये।**
**छन्दमानरतित्यागतात्पर्यवशितावलैः॥ ३२**

एवमुक्तप्रबन्धेनेत्यादि। विपक्षमालस्यादि[1]। उन्मूल्य प्रतिपक्ष-भावनाविधिनापसार्य। वीर्यप्रवर्धनाय यत्नं कुर्यात्। केनोपाये-नेत्यादि[2]। मानश्चित्तस्योन्नतिः। अयं स्थामबलस्योपलक्षणं। स्थामबलमेव वा। तेषां बलैः सामर्थ्यैः। सामर्थ्यपर्यायो ऽत्र बलशब्दः॥

तत्र तावच्छन्दस्योत्पादनाय प्रथममाह।

[1] See VII. 2.
[2] Ms.: ityādi—Ex. conj.: ity āha chandetyādi.

अप्रमेया मया दोषा हन्तव्याः स्वपरात्मनोः ।
एकैकस्यापि दोषस्य यत्र कल्पार्णवैः क्षयः ॥ ३३
तत्र दोषक्षयारम्भे लेशोऽपि मम नेक्ष्यते ।
अप्रमेयव्यथाभाज्ये नोरः स्फुटति मे कथं ॥ ३४
5 गुणा मयार्जनीयाश्च बहवः स्वपरात्मनोः ।
तत्रैकैकगुणाभ्यासो भवेत्कल्पार्णवैर्न वा ॥ ३५
गुणलेशेऽपि नाभ्यासो मम जातः कदाचन ।

सर्वसत्त्वानामुपकरणतया ऽऽत्मनश्च समस्तक्लेशप्रहाणाय निः-
शेषगुणोत्पादनाय च मया बोधिचित्तमुत्पादितं । तच्च न
10 निश्चितव्यापारसाध्यमित्यवगम्यापि यदनार[90b]म्भवीर्यतया
मन्दतमारम्भ एव तिष्ठामि तदा दुर्गतिविनिपातमन्तरेण
नान्या गतिरस्ति ममेति विचिन्त्य संवेगमात्मीकुर्वन् छन्द-
मुत्पादयेदिति समुदायार्थः ॥

अवयवार्थस्तूच्यते । अप्रमेयाः प्रमातुमशक्याः । दोषाः
15 काय[वाक्]चित्तसमाश्रिताः । हन्तव्याः प्रहातव्याः । स्वपरात्मनोः
आत्मनः परात्मनश्च । एकैकस्यापीति । आस्तां तावद्बहूनां ।
यत्र येषु । मन्दवीर्येण कल्पार्णवैरनेकैः कल्पशतसहस्रैः । क्षयः
प्रहाणं क्रियते ।

तत्र तेषु । दोषक्षयारम्भे दोषप्रहाणोत्साहे । लेशोऽपि
20 स्वल्पमात्रमपि मम नेक्ष्यते न दृश्यते । अतो ऽप्रमेयव्यथाभाज्ये

ऽपरिमितदुःखभाजनस्य मम घोरः स्फुटति हृदयं विदीर्यते कथं केन प्रकारेण ॥

वृथा मयेत्यादि सुबोधं ॥ इति विचिन्त्य संवेगमुपदर्शयति ।

**वृथा नीतं मया जन्म कथं चिल्लब्धमद्भुतं ॥ २६**

वृथा विफलमेव मया जन्मायुषविनिर्मुक्तं नीतं प्रेरितं । 5
व्यतीतमिति यावत् । कथं चिल्लब्धं महार्णवयुगच्छिद्रकूर्मग्रीवार्पणवत्[1] । सुचिरेण प्राप्तं । अत एवाश्चर्यस्थानत्वादद्भुतं ॥

इतो ऽपि विफलमित्याह ।[2]

**न प्राप्तं भगवत्पूजामहोत्सवसुखं मया ।**
**न कृता[3] शासने[4] कारा[5] दरिद्राशा न पूरिता ॥ २७** 10
**भीतेभ्यो नाभयं दत्तमार्ता न सुखिनः कृताः ।**
**दुःखाय केवलं मातुर्गतोऽस्मि गर्भशल्यतां ॥ २८**

तथागतानां सत्क्रियाभिर्महोत्सवमतिशयवदभिनन्दनं[6] । तेन सुखं सौमनस्यं न प्राप्तं नाधिगतं मया । नापि शासने प्रतिमास्तूपसद्धर्मादिसत्कारैः विहारारामशयनासनादिवस्तुप्रदानैश्च कारा 15
पूजा कृता । नापि दरिद्राणां धनहीनानामाशाभिलाषः सर्वोपकरणसंपत्तिसंपादनेन पूरिता ।

---

1 See supra IV. 20.—The meaning of this simile, as it is given in the Commentary of that passage (Tibetan only), is known from the Friendly Epistle (Journal Pāli Text 1886), p. 18—See Supra p. 9, note; and F. W. Thomas, Candragomin's Epistle to the king Kanika, Intr. (Ind. Ant. 1903).

2 Ms. has: viphalam ityādi.

3 Minaev: kṛtāḥ—M., L[3]: kṛtā.

4 According to L[3] = tathāgataçāsane.

5 According to L[1] = pūjā.

6 Utsava, masc. only in St. Petersburg Dict.

नापि भीतेभ्यः स्वप्नादिभयसमाकुलितेभ्यो मा भैषीरित्यभयं दत्तं। नापि कायमनोदुःखैरार्ताः पीडितास्तदपनी[91a]य सुखिनः कृता इति सर्वैः सत्पुरुषधर्मैर्विरहितत्वादाह। दुःखायेत्यादि सुबोधं॥

कथं पुनरेतां धर्मदशां प्राप्तो भवानित्याह।

**धर्मच्छन्दवियोगेन पौर्विकेण ममाधुना।**
**विपत्तिरीदृशी जाता को धर्मे छन्दमुत्सृजेत्॥ ३९**

धर्माभिलाषस्याभावेन प्राक्तनजन्मोपचितेन। ममाधुनास्मिन् जन्मनि विपत्तिरीदृशी जाता। सर्वसामर्थ्यवैकल्यस्वभावा समनन्तरकथिता समुत्पन्ना। एवं ज्ञात्वा को धर्मे छन्दमुत्सृजेत्। परित्यजेत्। को नाम नोपाददीत विचक्षण इति भावः॥

किं पुनः कुशलार्थिना छन्दोत्पादने यत्न इत्याशङ्क्य यदुक्तं छन्दं दुःखभयात्कुर्यादित्यादि तदङ्गीकर्तुं चाह।

**कुशलानां च सर्वेषां छन्दं मूलं मुनिर्जगौ।**
**तस्यापि मूलं सततं विपाकफलभावना॥ ४०**

न केवलं विपत्तिपरिहारार्थं। शुक्लधर्मोपचयार्थमपि छन्दोत्पादने यतितव्यमिति चकारार्थः। सर्वेषामिति न केषांचिदेव। छन्दं मूलं कारणं भगवानुक्तवान्। न तु स्वयमुत्प्रेक्ष्योच्यत इत्यर्थः। तस्यापि छन्दस्यापि मूलं सततं सर्वकालं विपाकफलभावना। शुभाशुभकर्मणो विपाकफलं परलोक इष्टानिष्टप्राप्तिलक्षणं। तस्य भावना पुनः पुनरामुखीकरणं॥

तथाशुभकर्मणो विपाकफलमुपदर्शयन्नाह ।

दुःखानि दौर्मनस्यानि भयानि विविधानि च ।
अभिलाषविघाताश्च जायन्ते पापकारिणां ॥ ४१

यावन्ति कायिकमानसिकानि नरकादिगतौ दुःखानि विविधानि नानाप्रकाराणि जायन्ते भवन्ति सर्वाणि पापकारिणामेव । भयानि वधबन्धनताडनादिभ्यः । पर्येषमाणस्य लाभविघातेनाभिलाषविघाताश्च ॥

सुकृतकर्मणो विपाकफलमाह ।

मनोरथः शुभकृतां यत्र यत्रैव गच्छति ।
तत्र तत्रैव तत्पुण्यैः फलार्घेणाभिपूज्यते ॥ ४२

इष्टाशंसनविकल्पो मनोरथः । यस्य लोके मनोराज्यमिति [91b] प्रसिद्धिः । शुभकृतां पुण्यकारिणां । यत्र यत्रैवेति वीप्सायां न तु पिदेव । गच्छति प्रसरति । फलार्घेणेति । अभिवाञ्छितफलोपनामनमेवार्घं इवार्घः पूजा ॥ तेन पुनरशुभस्य फलमाह ।

पापकारिसुखेच्छा तु यत्र यत्रैव गच्छति ।
तत्र तत्रैव तत्पापैर्दुःखशस्त्रैर्विहन्यते[1] ॥ ४३

सुखेच्छा सुखाभिलाषः । तत्पापैरिति कर्तरि तृतीया । दुःखशस्त्रैरिति करणे । दुःखान्येव शस्त्राणीव तदिच्छाविच्छेदहेतुत्वात् ॥

[1] So M., L³.—Minaev: hanyase.

पृथग्जनासाधारणसुखभुक्कर्मविपाकफलमसाधारणमाह ।

विपुलसुगन्धिशीतलसरोरुहगर्भगता
मधुरजिनस्वराशनकृतोपचितद्युतयः[1] ।
मुनिकरबोधिताम्बुजविनिर्गतसद्वपुषः
सुगतसुता भवन्ति सुगतस्य पुरः कुशलैः ॥ ४४

प्रतिलब्धमुदितादिभूमयो[2] हि बोधिसत्त्वा अनिच्छन्तो मातृकुक्षौ नोत्पद्यन्ते । किं तर्हि सुखावत्यां[3] विमलदलकमलकोशेषु जायन्ते । तेषां सुखविभूतिमनेन कथयति । विपुलानि विस्तीर्णानि सुगन्धीनि[4] मनोज्ञगन्धानि शीतलानि शीतस्पर्शानि तानि च सरोरुहाणि पङ्कजानि चेति । तेषां गर्भाणि[5] । सरोरुहगर्भाणां वा विशेषणान्येतानि । तेषु गताः संस्थिताः प्रज्ञोपायमहाकरुणानिर्यातपुण्यज्ञानकलसंवर्धितसंबोधिचित्ताः[6] सुगतसुता भवन्ति कुशलैरिति संबन्धः ।

कथं पुनः पद्मगर्भेषु पुष्टिं लभन्त इत्याह । मधुरेत्यादि । मधुरैः सर्वस्वराङ्गोपेततया परमसौमनस्यकारिभिः संबद्धधर्मघोषाशनेराहारैः कृता उपचिता द्युतयो वपूंषि येषां ते तथा ।

---

1 Minaev has: âsana—; M., Dev. 85: °açana°.

2 See *Dharmasaṁgraha* LXIV, LXV; and the *Daçabhūmiçvara* (an older reduction entitled *Daçabhūmaka* was found recently by Professor Bendall).

3 See *Sukhâvatīvyūha*, and infra X. 4.—Birth from lotuses, *Çikṣâs*. 175. 5 *sqq*.

4 Ms.: sugandhâni, but see VIII. 67 and Pâṇini quoted in loco.

5 Garbha, masc. only (St.-Petersburg Dict.)

6 Comp. infra the *lokottarakâya*.

कथं च ततो निर्यान्तीत्यत आह । शुचिकरैरित्यादि । शुचि-
करैः परिपाककालमवगम्य तथागतरश्मिभिर्बोधितानि विका-
सितानि च तान्यम्बुजानि चेति । ततो विनिर्गतानि निर्याता-
[92a]नि सन्ति लक्षणव्यञ्जनालंकृततया शोभनानि वपूंषि येषां
ते तथा । तथाभूताः सन्तः सुगतसुता बोधिसत्त्वा भवन्ति 5
जायन्ते । सुगतस्य पुरः सुखावत्याममिताभस्य भगवतोऽग्रतः ।
कुशलैरेकान्तशुक्लैः कर्मभिः ॥

तदनेन मातृकुक्षौ समुत्पद्यमानानामेतद्विशेषविपर्ययेण
दुःखं वेदितव्यमित्युपदर्शितं भवति । तथा हि तत्र संकटे
दुर्गन्धिनि जठरानलसंतप्ते चोत्पन्नस्य मातापित्रशुचिसंभूतस्य 10
मातुः पीताशितैर्वान्तकल्पैः संवर्धमानस्य गर्भमलपङ्कनिमग्नस्य
परिपाककाले कथं चित्कण्ठगतप्राणस्य यन्त्रनिष्पीडितस्येव
ततो निर्गमनमिति प्रायेण मनुष्यभूतस्य व्यतिमिश्रकर्मविपाक-
फलमुक्तं ॥

एकान्तकृष्णस्य तु विपाकफलमाह । 15

यमपुरुषापनीतसकलच्छविरार्तरवो
हुतवहतापविद्रुतकताम्रनिषिक्ततनुः[1] ।
ज्वलदसिशक्तिघातशतशातितमांसदलः
पतति सुतप्तलोहधरणीष्वशुभैर्बहुशः ॥ ४५

यमपुरुषैः कालदूतैरपनीता विश्लेषिता ज्वलितमुद्गरादि- 20

1 vidrutaka = *vidruta (St.-Pet. Dict.) = liquid.

प्रहारैः सकला समस्ता छविश्चर्मप्रभावो[1] वा यस्य स तथा। अतिशयेनार्तः सन् पतति सुतप्तलोहधरणीषु। पुनरपि किंभूतः। तीव्रानलतापेन द्रवीभूतं यत्ताम्रं तेन निषिक्ता स्नापिता तनुः कायो यस्य। अतोऽप्यपनीतसकलच्छविः। ज्वलन्तोऽसयः शस्त्र-
5 यस्य शस्त्रविशेषाः। तेषां घातशतैरनेकैः प्रहारैः शातितानि विच्छेदितानि मांसदलानि शकलानि यस्य स तथाभूतः सन् पतति। सुष्ठु तप्तासु लोहमयीभूमिषु। अशुभैरकुशलैः कर्मभिः। बहुश इति बहून् वारान् दीर्घकालेन तत्फलस्य परिचयात्॥

तदेवं शुभाशुभकर्मणोर्विपाकफलं प्रतिपाद्य च्छन्दबल-
10 मुपसंहरन्नाह।

**तस्मात्कार्यः शुभच्छन्दो भावयित्वैवमादरात्।**

यत [92b] एवं शुभाशुभकर्मणोर्मधुरकटुकफलविपाकः[2]। तस्मादेवं परिभाव्य शुभच्छन्द एवादरेणाशुभकर्म विहाय कार्यः॥

15 सांप्रतं मानबलं प्रतिपादयितुमाह।

**वज्रध्वजस्य[3] विधिना मानं त्वारभ्य भावयेत्॥४६**

वज्रध्वजसूत्रप्रतिपादितविधानेन मानं पुनः साध्यं कर्मारभ्य भावयेत्। अथ वा आरभ्य भावयेदिति गाढसमारम्भेण भावयेत्। चेतसि स्थिरं कुर्यात् न शिथिलोपक्रमेणेत्यर्थः॥

---

1 So Ms.

2 Supra l. 9, vipākaphala.

3 See *Çikṣâs.* 22. 5 and 278. 14.—On the good *māna*, see *Nettipakaraṇa*, p. 87.

आरम्भमेव शिक्षयितुमाह ।

**पूर्वं निरूप्य सामग्रीमारभेन्नारभेत वा ।**

पूर्वं प्रथमत एव । अभिमतकार्यनिष्पादनाय सामग्रीं कारणकलापं निरूप्य तस्या बलाबलं विचार्य । आरभेत सति बले नारभेत वासति बले । किमेवंविचारेण प्रयोजनमिति चेत् । आह ।

**अनारम्भो वरं नाम न त्वारभ्य निवर्तनं ॥ ४७**

अनारम्भो वरं नाम प्रथमत एव न त्वारभ्य निवर्तनमशक्तत्वे सति ॥ ननु किमत्र दूषणं[1] येनैवं नेष्यत इत्याह ।

**जन्मान्तरेऽपि सोऽभ्यासः पापाद्दुःखं च वर्धते ।**
**अन्यच्च कार्यकालं च हीनं तच्च न साधितं ॥ ४८**

तथा क्रियमाणो ऽन्यस्मिन्नपि जन्मनि सोऽभ्यास इत्यारभ्य निवर्तनं नाम । प्रतिज्ञातमकुर्वतश्च पापं ततो दुःखं वर्धते । अन्यच्च हीनं नष्टं यत्परित्यज्य तदारब्धं । कार्यकालं च हीनं । आरब्धपरित्यक्तकार्यस्य कालो ऽस्य कार्यस्येति[2] । तस्मिन् काले यदन्यत्कार्यं कर्तव्यं तदित्यर्थः । तच्च यदारभ्य परित्यक्तं तदपि न साधितं न निष्पादितं । इति पञ्चप्रकारमत्र दूषणं । तेन नेष्यत इत्यभिप्रायः ॥

---

1 *Nidarçana* erased, *dūṣaṇa* supplied in margin.

2 Ms. Kālasyeti, in margin : *rya*.

अथ किमयं मानः सर्वत्र न कर्तव्यो। नेत्याह।

**त्रिषु मानो विधातव्यः कर्मोपक्लेशशक्तिषु।**[1]

केषु त्रिषु। तदाह। कर्मसु उपक्लेशेषु शक्तौ च। तत्रोप-
क्लेशाः क्षुद्रवस्तुकसंज्ञिताः क्रोधोपनाहम्रक्षप्रदाशादयः[2] पञ्च
5 [93 a]। पञ्चाशत्[3] क्लेशा[4] एव वा रागादय उपक्लेशा उच्यन्ते॥
तत्र कर्ममानं व्याख्यातुमाह।

**मयैवैकेन कर्तव्यमित्येषा कर्ममानिता॥ ४९**

यत्किंचिदनवद्यं कर्मापतितं भवति सत्त्वानां तत्सर्वं मयै-
वैकेन कर्तव्यं। नान्यत्रावकाशो[5] दातव्य इत्यर्थः॥ एतदेव
10 दर्शयन्नाह।

**क्लेशास्वतन्त्रो[6] लोकोऽयं न क्षमः स्वार्थसाधने।**
**तस्मान्मयैषां[7] कर्तव्यं नाशक्तोऽहं यथा जनः॥ ५०**

क्लेशैः परायत्तीकृतः सर्वोऽयं जनकायः क्वचिदपि स्वार्थ-
साधने समर्थो न भवति। इत्येषां सर्वसुखोत्पादनाय मया

---

1 See *Mahāvastu*, II. p. 279 the dvārtriṃçatākāra āryamāna.

2 Ms. mrakṣa pramādayaḥ.– See the "twenty-four minor evil passions" *Dharmasaṃgraha* LXIX; *Madhyamakavṛtti*, Chapter VI; Kern, *Manual*, p. 52; *Çikṣās*. Index.

3 Ms. pañcāsat.

4 *Dharmasaṃgraha*, LXVII: six evil passions; Childers gives a list of ten; see *Madhyamakavṛtti*, loc. laud.

5 Cp. *Çikṣās*. 278. 5.

6 Minaev: Kleçāsvatantro.

7 So M.—Minaev has: mayāsya; see the Commentary.

बोधिचित्तमुत्पादितं । यत एवं तदशक्तोऽयमीदृशं भार-मुद्वोढुं यथायं जनः । अतो मयैवैषां सर्वं कर्तव्यं ॥

हीनेऽपि कर्मणि वैमुख्यं नोत्पादयितव्यमित्याह ।

**नीचं कर्म करोत्यन्यः कथं मय्यपि तिष्ठति ।**

नीचमतिगर्हितं लोके भारोद्वहनादिकं । मय्यपि सर्व- 5
सत्त्वानां दासभूतेऽपि तिष्ठति विद्यमानेऽपि । मत्करणीयं कथ-मन्यः करोति । मयैव कर्तुमुचितमिति भावः ॥ अथाप्रतिरूपं ममैव तत्कर्मेति चित्तस्योन्नतिं निवारयितुमाह ।

**मानाच्चेन्न करोम्येतन्मानो नश्यतु मे वरं ॥ ५१**

कोऽमुष्यपुत्र[1] इदं च कर्मातिनिहीनं । तदयुक्तं मम 10
कर्तुमिति मानाद्यदि न करोमि । तदा मानो नश्यतु मे वरं । किमनेन मानेन महार्थभ्रंशकारिणा मम न तु नीचकर्म-प्रवृत्तिः ॥[2]

इति कर्मसु मानमभिधायोपक्लेशेषु मानमुपदर्शयितुमाह ।

**मृतं डुण्डुभमासाद्य काकोऽपि गरुडायते ।** 15
**आपदाबाधतेऽल्पापि मनो मे यदि दुर्बलं ॥ ५२**

यद्युपक्लेशेषु निहतमानतया दुर्बलवृत्ति मम चित्तं स्यात् ।

---

1 Ms. kādamuṣya°, but *da* is deleted and avagraha supplied by a second hand.—amuṣyaputra, in St. Pet. Dict., from Lexx. only = der Sohn eines berühmten Mannes, der Sohn des und des.

2 Kusalo māno: yaṁ mānaṁ nissāya mānaṁ pajahāti (*Nettip.*)

तदा आपदापत्तिः । आबाधते आक्रामति[1] [यथा] आपत्तिकं स्यादित्यर्थः । अल्पापि मृदुप्रचारोपक्लेशजनितापि । कथमिवेत्याह । मृतमपगतप्राणं दुण्डुभं प्राप्य यथा काको ऽपि गरुडवदाचरति [ 93 ] ॥ कुतः पुनरेवमित्याह ।

5 विषादकृतनिश्चेष्ट आपदः सुकरा ननु ।
व्युत्थितश्चेष्टमानस्तु महतामपि दुर्जयः ॥ ५३

चित्तोन्नतिविरहिते विषण्णतया मन्दकायचित्तप्रवृत्तावालस्योपहते मुषितस्मृतौ । आपदः सुकराः सुलभाः । उत्पद्यन्त एव स्वल्पापदापि गम्यत्वात् । व्युत्थितः समुन्नतचित्ततया
10 पुनरुत्साहसंपन्नः चेष्टमानः स्मृतिसंप्रजन्याभ्यामुपक्लेशानामनवकाशं ददानः । महतामपि दुर्जयोऽजय्यः स्यात् ॥

तस्माद्दृढेन चित्तेन करोम्यापदमापदः ।
त्रैलोक्यविजिगीषुत्वं हास्यमापज्जितस्य[2] मे ॥ ५४

स्वात्मबलावलम्बनं निगमयन् दर्शयति । यत एवं तस्मात् ।
15 दृढेन चित्तेन मानसंनाहः । आपद एवापदमनर्थं करोमि सर्वथा तदनुप्रवेशं निवारयन्नुच्छ्रितसंतानं करोमि । अन्यथा

---

1 Alias: ākramati.

2 So M, L[2], Dev. 85—Minaev has: āvarjitasya me.—L[1] has the gloss: vipattiyā vipattim.

स्थिमविजयारम्भो मम स्यात्समुपहसनीयमापदा[1] । आपदायत्ततया वराकिकया[2] । जितश्च गमिष्यति ॥ कीदृश[म]ेत]दित्याह[3] ।

मया हि सर्वं जेतव्यमहं जेयो न केनचित् ।
मयैष मानो वोढव्यो जिनसिंहसुतो ह्यहं ॥ ५५

कुतः । यस्माज्जिना एव भगवन्तः सिंहाः सर्वमारमृगैरनभिगम्यत्वात् । तेषां सुतो ऽहमपि कथमन्यैः पराजितो नाम [4]नामधेयं वहामि इति मनसि निधाय मयैष मानो वोढव्यः । यथा हि सिंहकिशोरः प्रतिलब्धवैशारद्यः सर्वान्यमृगैरनभिभूत एव वने विचरति तथा मया दृढेन भवितव्यमित्यर्थः ॥

स्यादेतद्यद्येवं तदा ये ऽपि सपत्नादिविजयाय मानमुद्वहन्ति तेऽपि मानिनः प्रशस्याः कथं न भवेयुरित्यत्राह ।

ये सत्त्वा मानविजिता वराकास्ते न मानिनः ।
मानी शत्रुवशं नैति मानशत्रुवशाश्च ते[5] ॥ ५६

मानविजिता मानेनाभिभूता वराकास्तपस्विनः । ते मानिनो भवन्त्येव । कुतः । मानी शत्रुवशं नैति न गच्छति । नासौ वैरिजनानुवृत्तिं करोतीत्यर्थः । ये [94a] भवताभिमता[6]

1 Ms. āpadām ā padāyattatayā, ā from a second hand.

2 Varākikā, See St.-Pet. Dict.

3 Ms. kīdṛçaṁdityāha, ṁ from a second hand.—etat = sthāmabala.

4 = Buddhasutanāmadheyam.

5 M, L3 = vaçās tu te.

6 Ms. ye na bhagavatā ni bhimatā māninas.

मानिनस्ते मानप्रभुत्वप्रज्ञादयस्तत्प्रभृतयः[1]॥ एतदेव श्लोकद्वयेन समर्थयितुमाह।

मानेन दुर्गतिं नीता मानुष्येऽपि हतोत्सवाः।
परपिण्डाशिनो[2] दासा मूर्खा दुर्दर्शनाः कृशाः॥ ५७
5 सर्वतः परिभूताश्च मानस्तब्धास्तपस्विनः।
तेऽपि चेन्मानिनां मध्ये दीनास्तु वद कीदृशाः॥ ५८

सप्तविधमानेष्वन्यतमेन[3] मानेन दुर्गतिं नीता नरकादिषु पातिताः। अथ कथंचिन्मनुष्यभावप्रतिलम्भो भवति तेषां। तदा तथापि तन्निष्यन्दफलेन हतोत्सवा निरानन्दा भवन्ति। 10 दीनदौर्मनस्य इत्यर्थः। परपिण्डाशिन आहारवैकल्यात्परदत्ताभ्यवहारभुजः। दासाः परतन्त्रवृत्तयो भृत्याः। मूर्खाः सर्वविवेकशून्याः। दुर्दर्शना विरूपात्मभावा अप्रीतिजनकाश्च। कृशा दुर्बलशरीराः सामर्थ्यरहिताश्च। सर्वतः सर्वेभ्योऽकृतापराधा अपि कायवचःपरिभवलाभिनो भवन्ति॥

15 के पुनरेवं मानस्तब्धास्तपस्विनो[4] मानेन स्तब्धा अनम्राः। तपस्विनो वराकाः। तेऽपि चेत्। एवंभूता अपि यदि मानिनां मध्ये गच्छन्ति तर्हि दीनाः कृपणाः कृपापात्रमित्यर्थः। पुनरन्ये दीनाः कीदृशा भवन्तीति वद ब्रूहि चोदकमामन्त्रयते॥

---

1 Ms. prabhṛtayaḥ.

2 So Dev. 85.—Minaev has °piṇḍāsino; St.-Pet. Dict. has piṇḍāça, piṇḍāçaka (*Rettler*) from Lexx. only, and açin = *weitreichend, dauernd*, only.

3 See *M. Vyut.* 104. 25—31.

4 Li has the scholion: māno rāgādi jetavān?

यथैवंविधा मानिनो नोच्यन्ते कीदृशास्तर्हि ते भवन्तीत्याह ।

ते मानिनो[1] विजयिनश्च त एव शूरा
ये मानशत्रुविजयाय वहन्ति मानं ।
ये तं[2] स्फुरन्तमपि मानरिपुं निहत्य 5
कामं[3] जने जयफलं प्रतिपादयन्ति ॥ ५९

त एव मानिन उच्यन्ते ये बोधिसत्त्वास्तं स्फुरन्तमपि प्रभवन्तमपि मानवैरिणं निहत्य विधूय । कामं यथेष्टमुद्दामेति यावत् । जने लोके सदेवकादिके जयफलं प्रकाशयन्ति बुद्धत्वावस्थायां । एतादृशं तन्मानशत्रुविजयफलं यादृशमस्मासु दृश्यत 10 इत्यभिप्रायः । त एव विजयिनश्च लब्धविजयाः । त एव शूरास्तेजस्विन इति पदद्वयं यथासंभवं योज्यं [94b] ॥

उपक्लेशेषु मानं प्रतिपाद्य शक्तौ मानमाह ।

संक्लेशपक्षमध्यस्थो भवेद्दृप्तः सहस्रशः ।

संक्लेशानां पक्षो वर्गः । तस्य मध्ये तिष्ठन् सहस्रगुणेन दृप्ततरो 15 भवेत् । अतिशयवच्छौर्यबलमवलम्बेत । किंभूतः सन्नित्याह ।

दुर्योधनः क्लेशगणैः सिंहो मृगगणैरिव ॥ ६०

---

1 M. has dhīrāḥ.
2 L¹: ye tam = sattvā mānam.
3 L¹: kāmam = yatheṣṭam.

दुःखेन धोध्यत इति दुर्धोधनः। कथंचिदपि न परा- जीयत इत्यर्थः। कथमिव। यथा हि सिंहो मृगराजो मृग- कुलमध्ये महातेजोबलसमन्वागतो विहरन् वने सर्वमृगानभि- भवति। न च तैरभिभूयत इति। एवं बोधिसत्त्वो दुर्धोधनो
5 भवेत्॥

इदमपरमपि निमित्तमुद्ग्रहीतव्यमित्याह।

**महत्स्वपि हि कृच्छ्रेषु न रसं चक्षुरीक्षते।**
**एवं कृच्छ्रमपि प्राप्य न क्लेशवशगो भवेत्॥ ६१**

अतिप्रकर्षवत्स्वपि कृच्छ्रेषु दुःखेषु सत्सु रसं मधुरादिकं
10 जिह्वेन्द्रियग्राह्यं न चक्षुरीक्षते न प्रतिपद्यते न विषयीकरोती- त्यर्थः। तस्य[ा]विषयत्वात्। नाविषये प्रवर्तत इति भावः। एवमुक्तरसचक्षुर्न्यायेन कष्टमपि प्राप्य न क्लेशवशं गच्छेत्॥

इत्युक्तेन प्रबन्धेन स्थामबलं विधाय रतिबलमावेदयितुमाह।

**यदेवापद्यते कर्म तत्कर्मव्यसनी भवेत्।**
15 **तत्कर्मशौण्डो ऽतृप्तात्मा क्रीडाफलसुखेप्सुवत्[1]॥ ६२**

कर्म संभारनिबन्धनं ध्यानाध्ययनादिलक्षणं यदेवापद्यते। क्रमकरणयोगेनापतितं भवेत्। तस्मिन्नेव कर्मणि व्यसनीभवेत्। तन्निबारणनिमग्नचित्तः। तत्कर्मशौण्डस्तत्प्रसक्तिलम्पटः। अतृ- प्तात्मा पुनः पुनरभिलाषयुक्तः। क इव। क्रीडाफलसुखेप्सुवत्।
20 द्यूतादिक्रीडाया यत्फलं सुखं तदाप्तुमिच्छुरिव॥

[1] Minaev has: sukhaphalepsuvat.—See the Commentary.

इतोऽपि विचारयता कर्मणि रतिरुत्पादयितव्येत्युपदर्श-यन्नाह ।

**सुखार्थं क्रियते कर्म तथापि स्यान्न वा सुखं ।**
**कर्मैव तु सुखं यस्य निष्कर्मा स सुखी कथं ॥ ६३**

सर्वैरेव [95a] कर्मफलसुखलिप्सया कर्म क्रियते । अन्यथा तत्र प्रवृत्तिर्न स्यात् । तथाप्येवं चेतसा प्रवृत्तावपि कस्य-चित्कर्मणोऽभिवाञ्छितफलं स्यात् । कस्यचित्पुनर्न स्यात् । विघ्नकारणस्यापि संभवात् । तथापि कर्मारम्भात्पुनः फल-संभावनया नैव निवर्तते जनः । यस्य पुनः कर्मैव सुखं न तदु-त्तरमपरसुखाभिलाषः स निष्कर्मा कर्मविरहितः कथं सुखी स्यात् । न कथंचिदित्यर्थः ॥

इदमपि भावयता कर्मण्यभिनिवेष्टव्यमित्याह ।

**कामैर्न तृप्तिः[1] संसारे क्षुरधारामधूपमैः ।**
**पुण्यामृतैः कथं तृप्तिर्विपाकमधुरैः शिवैः ॥ ६४**

रूपादिविषयैः । संसार इति संसरति पुनः पुनः । अभू-तैरतृप्तिरनाप्यायनं । किंभूतैः क्षुरधारामधूपमैः । क्षुरधारायां यन्मधु मधुरसं यदास्वाद्य[2] तृष्णावशाज्जिह्वाच्छेदनोत्तरकाले[3]

---

1 See Commentary : kāmair atṛptiḥ.

2 Ms. : āsvādya.

3 Ms. : tṛṣṇāvaśā jihvā°.

दुःखमुपजायते । तेनोपमा उपमानं सादृश्यं येषां ते । आपात-मात्रमाधुर्येऽपि परिणतिदुःखेन कटुकरसत्वात्तेषामित्यभिप्रायः ॥ पुण्यान्येवामृतानीव । तैः कथं तृप्तिरस्तु । किं विशिष्टैः । विपाकमधुरैरभ्युदयफलसुखहेतुतया परिणामेन मधुररसत्वात् । परमसुखजनकैः शिवैः कल्याणकारिभिर्निःश्रेयसावाहकतया । अजरामरपदप्रदानपरत्वात्सर्वदुःखनिर्वर्तकैरित्यर्थः । अत एव पुण्यामृतैरित्यत्र हेतुपदमेतत् ॥

तस्मादित्युपसंहारेण पुनःकर्माभिरामं दृढयन्नाह ।

तस्मात्कर्मावसानेऽपि निमज्जेत्तत्र कर्मणि ।
यथा मध्याह्नसंतप्त आदौ प्राप्तसराः करी ॥ ६५

तस्मादारब्धस्य कर्मणो ऽवसानेऽपि निमज्जेत् । तदभिनिवेश-रसनिमग्न एव विमुञ्चेत्[1] । कथमिव । यथा ग्रीष्मसमये मध्यं-दिनवर्तिनि सूर्ये [95b] सर्वतो जलमलभमानश्च आत[ा]प-तापितो हस्ती परमाभिनिवेशसंयुक्तः[2] । अतिशयप्रह्लाद-कारिशीतलजलपरिपूरितं ह्रदमासाद्य प्रथमतो निमज्जति । तथा । इति समुदायार्थः । प्राप्तं सरो येन स तथा । पश्चा-त्कर्मधारयः । आदावित्यत्र निमज्जतीत्यनेन संबन्धः ॥

इदानीं रतिबलं व्याख्याय मुक्तिबलं व्याख्यातुमाह ।

बलनाशानुबन्धे तु पुनः कर्तुं परित्यजेत् ।
सुसमाप्तं च तन्मुञ्चेदुत्तरोत्तरतृष्णया ॥ ६६

---

1 So Ms.

2 Ms.: abhiniveçarasasaṃyuktaḥ.

आरब्धकर्मनिष्पादने सामर्थ्याभावमात्मनोऽवगम्य । सामर्थ्यप्रतिलम्भे सति पुनः करिष्यामि । इत्यभिप्रायेण तावत्कार्यं परित्यजेत् सुखेन । न तावतास्य विक्षेपः स्यात् । अन्यथा तथापि तदपरित्यागेऽनर्थसमावेश एव स्यात् ॥ यदापि निष्पन्नं तदारब्धं कर्म भवेत् । तदापि मोक्तव्यं । अन्यथा स्वरस- 5
वाहितयापि तस्मिन् प्रवृत्ते पुनर्व्यापाराद्विक्षेप एव स्यात् ।

तस्मादुपरापरविशेषाकाङ्क्षया तदुत्सृजेत्परित्यजेत् । एतेन यदुक्तं प्राक् । पूर्वं समीक्ष्य सामर्थ्यमित्यादि[1] तस्योत्सर्गस्याय-मपवाद उक्तः ॥

तदेवमवान्तरविशेषोपदर्शनेन यथाव्यूहं सर्वथाभिधाय प्रथ- 10
मोद्देशप्रतिपादितमपि पुनः छन्दादिगणे[2] कथितं तात्पर्यं ख्यापनाय आह ।

क्लेशप्रहारान् संरक्षेत्[3] क्लेशांश्च[4] प्रहरेद्दृढं ।
खड्गयुद्धमिवापन्नः शिक्षितेनारिणा सह ॥ ६७

क्लेशानां प्रहारानुपघातान् संरक्षेत् निवारयेत् । यथा तेषां 15
प्रहारो न प्रभवतीत्यर्थः । क्लेशान् पुनः प्रहरेत् निहन्यात् । दृढं गाढप्रहारेण यथा पुनरवकाशं न लभेरन् ॥ अत्र निदर्शनमाह । यथा शिक्षितेन शस्त्रविद्याकौशलसमन्वा[96a]गतेन शत्रुणा

1 See VII. 47.
2 See VII. 16.
3 So L3. Minaev has : saṁrakṣan.
4 So L3. Minaev has : kleçāṁs tu.

स च निपुणतरः खड्गेन संग्रामयन्[1] तमभिभवति । न च तेनाभिभूत इति ॥

तथा तत्रेत्यादिना पुनस्तात्पर्यं शिक्षयितुमाह ।

**तत्र खड्गं यथा भ्रष्टं गृह्णीयात्सभयस्त्वरं[2] ।**
**स्मृतिखड्गं तथा भ्रष्टं गृह्णीयान्नरकान् स्मरन् ॥ ६८**

तत्र तस्मिन् खड्गयुद्धे यथा खड्गं हस्तात्कथं चिद्विचलितं पुनः संहृत्य गृह्णीयात् । सभयः । मा मामयं छलमनुप्रविश्य शत्रुर्वधीत् । त्वरमिति । शीघ्रमेव न कालप्रतिलम्बनेनेति यावत् । तथा तद्वदेव स्मृतिप्रमोषे । स्मृतिरेव खड्ग इव क्लेशशत्रुविज-याय । तं भ्रष्टमपगतं गृह्णीयात् आमुखीकुर्यात् । नरकान् रौरवादीन् स्मरन् । स्खलिते सति तद्दुःखभागितां मनसिकुर्वन् ॥

ननु सूक्ष्मक्लेशसमुदाचारेऽपि का क्षतिः येन तत्रोपेक्षा न क्रियत इत्यपाह ।

**विषं रुधिरमासाद्य प्रसर्पति यथा तनौ ।**
**तथैव छिद्रमासाद्य दोषश्चित्ते प्रसर्पति ॥ ६९**

अणुमात्रस्यापि दोषस्यावकाशो न दातव्यः । अन्यथा तन्मात्रस्याप्यनुप्रवेशे चित्ते तत्प्रसरावरोधस्य कर्तुमशक्यत्वात् । यथा हि स्वल्पव्रणेऽपि रुधिरसंपर्कवतो विषस्य शरीरे । तस्मा-दणुमात्रक्लेशप्रचारनिवारणेऽपि तात्पर्यं कुर्यात् ॥

पुनरन्यथा तात्पर्यं दृढीकुर्वन्नाह ।

---

1 In St. Pet.-Dict. from Lexx. only.

2 Minaev: gṛhṇīyād bhayasatvaram.

तैलपात्रधरो यद्वदसिहस्तैरधिष्ठितः ।
स्खलिते मरणत्रासात्तत्परः स्यात्तथा व्रती ॥ ७०[1]

यथा कश्चित्पुरुषश्चण्डनृपाज्ञया तैलपरिपूर्णपात्रमादाय पिच्छिलसंक्रमेणासिहस्तैः राजपुरुषैः । बिन्दुमात्रतैलभ्रंशेऽप्यत्रैव त्वां प्राणैर्वियोज[यि]ष्याम इति ब्रुवाणैरधिष्ठितो गच्छन् यदि ममात्र कथंचित्स्खलितं स्यात्तदा नूनममी मां व्यापादयेयु-रिति मरणभयात्तत्परो भवति । तथा व्रती गृहीतसंवरः प्रकृतस्खलिते नरकादिदुःखभयात्तदनवकाशाय तत्परः स्यात् यत्नवान् भवेत् ॥ उक्तमु[96b]पसंहृत्य दर्शयन्नाह ।

तस्मादुत्सङ्गे सर्पे यथोत्तिष्ठति सत्वरं ।
निद्रालस्यागमे तद्वत्प्रतिकुर्वीत सत्वरं ॥ ७१

यत एवं तस्मादुत्सङ्गे क्रोडगते सर्पे आशीविषे यथा त्वरितमेवोत्तिष्ठति । मा मामयमदिदंक्षीत् । तथैव निद्रा-लस्यागमे मिद्धस्त्यानप्रादुर्भावे प्रतिकुर्वीत तत्प्रतिपक्षानित्य-तादिभावनया प्रतीकारं कुर्यात् ॥

यस्य चैवं यत्नवतोऽपि कथं[चित्] किंचित्स्खलितं शूर-स्खलितन्यायेन स्यात् । तदा प्रतीकारं कृत्वा पुनर्यत्नवान् भवेत् । इत्युपदर्शयन्नाह ।

---

[1] See Çikṣâs. 356, 10.

एकैकस्मिंश्छले सुष्ठु परितप्य विचिन्तयेत् ।
कथं करोमि येनेदं पुनर्मे न भवेदिति ॥ ७२

स्मृतिप्रमोषे सत्येकैकस्मिन् प्रत्येकं छले स्खलिते कथं चित्क्लेशानामनुप्रवेशे सति । परितप्याध्याशयेन मनस्तापं कृत्वा विचिन्तयेत् । अहो बत जानन्नेव स्खलितोऽस्मि । तत्केन प्रकारेणाद्य प्रतिविधानं करोमि येन पुनरिदं छलं न स्यात् । इत्येवं दृढसमारम्भं समादाय विहरेत् । न तु पुनः शिथिलः स्यादिति भावः ॥

अत एव विवेककामानां प्रतिषिद्धमप्यनुजानन्नाह ।

संसर्गं कर्म वा[1] प्राप्तमिच्छेदेतेन हेतुना ।

आचार्योपाध्यायतदन्यसब्रह्मचारिप्रभृतिभिः । बहुश्रुतैस्त्रिपिटकवेदिभिः कौकृत्यविनोदनकुशलैः सह संसर्गं समवधानमिच्छेदाशंसेत् । तन्निःश्रित एव तिष्ठेदित्यभिप्रायः । कर्म वा प्राप्तं । तदववादानुशासनीलक्षणं । आपत्तिसमुद्धरणं । तैर्दण्डकर्मप्रणयनं वा समुत्पन्नमिच्छेत् । एतेन हेतुना तेषामवतारसंरक्षणाभिप्रायेण । एतदेवाह ।

कथं नामास्ववस्थासु स्मृत्यभ्यासो भवेदिति ॥ ७३

केन विधिना नाम आस्ववस्थासु क्लेशावतारदशासु स्मृत्य-

[1] So L[2]. M.—Minaev has : prāptum.

भ्यासो भवेत् । स्मृतित एवालम्बना[97a]संप्रमोषो[1] न स्यात् । इत्यनेनाभिप्रायेण । अयं समुदायार्थः । कल्याणमित्रसंनिधाना-त्तदववादानुशासनीतस्तदाचारसंदर्शनाच्च सदा स्मृतिसंप्रजन्य-विहारिणः क्लेशा नावतारं लभन्ते । ततोऽस्याविरोधत एवोत्साहो वर्धत इति युक्तं । 5

सदा कल्याणमित्रं च जीवितार्थेऽपि न त्यजेत् । इति ।[2]

तथा ।

उपाध्यायानुशासिन्या भीत्याप्यादरकारिणां ।
धन्यानां गुरुसंवासात्सुकरं जायते स्मृतिः ॥ इति ।[3]

अधुना तात्पर्यमुपदर्श्यात्मविधेयतामुपदर्शयितुमाह[4] । 10

**लघुं कुर्यात्तथात्मानमप्रमादकथां स्मरन् ।**
**कर्मागमाद्यथा पूर्वं सज्जः सर्वत्र वर्तते ॥ ७४**

सर्वकर्मस्वात्मानं [5]कायवाक्चित्तलघवं तथा कुर्यादुत्साहा-भ्यासादायत्तीं नयेदित्यर्थः । यथा कर्मागमात्कर्मारम्भात्पूर्वं प्रागेव सज्ज आयत्तीकृतः सुदान्ताश्ववत् तन्मार्गनिरीक्षणाधीन 15 इव कर्मणि प्रवर्तते ॥

उक्तमेवार्थमुदाहरणेन व्यक्तीकुर्वन्नाह ।

---

1 Ms. ālambanā sampramoṣo.
2 Supra V. 102.
3 Supra V. 30.
4 See VII. 16.
5 Ms. kāyacittasyukṣaṇam.

यथैव तूलकं वायोर्गमनागमने वशं।
तथोत्साहवशं यायादृद्धिश्चैवं समृध्यति॥ ७५॥

तूलकं कर्पासादिसमुद्भूतं यथा वायोर्गमने आगमने च वशमायत्तं। तथा तद्वदेव उत्साहवशं यायात् वीर्यवशवर्ती भवेत। एवमभ्यासपरायणस्य ऋद्धिराकाशगमनादिलक्षणा समृध्यति संपद्यते॥

परात्मसमतापरात्मपरिवर्तने पुनरुभयत्राप्युपयुक्ते[1] इति ध्यानपरिच्छेद एव व्याख्येये॥

इति प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां वीर्यपारमितापरिच्छेदः[2] समाप्तः॥

---

1 ubhayatra = dhyāne vīrye ca.

2 Tib. (fol. 173b): brtson-hgrus-kyi leu-ste bdun-pao.

# प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां ध्यानपारमिता अष्टमः परिच्छेदः ।

तदेवं क्षान्तेरनन्तरं वीर्यमभिधाय यदुक्तं ।

संश्रयेत वनं ततः ।

समाधानाय युञ्जीत भावयेच्चाशुभादिकं ॥

इति[1] तदर्धयित्वैवमित्यादिना प्रतिपादयितुमुपक्र[97]मते ।

**वर्धयित्वैवमुत्साहं समाधौ स्थापयेन्मनः ।** 5

एवमुक्तप्रतिपक्षासेवनादिना विपक्षमुन्मूल्य वीर्यं वर्धयित्वा ऽनाभोगवाहितया स्थिरीकृत्य समाधौ समाधाने चित्तैकाग्रतायां स्थापयेन्मनः । तत्र निवेशयेत् । आरोपयेदिति यावत् । किमर्थमित्याह ।

**विक्षिप्तचित्तस्तु नरः क्लेशदंष्ट्रान्तरे स्थितः ॥ १** 10

तुरिति हेतौ । यस्मात्समाधानमन्तरेण विक्षिप्तचित्तो ऽसमाहितचित्तसमुदाचारो वीर्यवानपि नरः पुरुषः क्लेशानां राक्षसानामिव दंष्ट्रान्तरे मध्ये स्थितः । कवलित एव तैरास्ते । तस्मात् ॥

---

1 Part of the 20-th kārikā of the *Çikṣās.*, See pp. XLV and 179 5-9.

तत्र तावत्समाधिविपक्षं विक्षेपं निराकर्तुं पीठिकाबन्धं[1] रचयन्नाह ।

**कायचित्तविवेकेन विक्षेपस्य न संभवः ।**
**तस्माल्लोकं परित्यज्य वितर्कान्[2] परिवर्जयेत् ॥ २**

कायविवेको जनसंपर्कविवर्जनता । चित्तविवेकः कामादि-
5 वितर्कविवर्जनता । इति कायचित्तयोर्विवेके निरासङ्गतया
विक्षेपस्य तयोरुन्नततायाः आलम्बनाप्रतिष्ठानस्येति[3] यावत् । न
संभवः न प्रादुर्भावः । यत एवं तस्माल्लोकं स्वजनबान्धवादि-
लक्षणं परित्यज्य विहाय पूर्वं वितर्कांश्चित्तविक्षेपहेतून् परि-
वर्जयेत् परित्यजेत् ॥

10 तत्र लोकापरित्यागहेतुं तावन्निराकर्तुमुपदर्शयन्नाह ।

**स्नेहान्न त्यज्यते लोको लाभादिषु च तृष्णया[4] ।**
**तस्मादेतत्परित्यागे विद्वानेवं[5] विभावयेत्[6] ॥ ३**

आत्मात्मीयपक्षप्रवर्तितोऽभिष्वङ्गः स्नेहः । तस्मान्न त्यज्यते
लोकः । लाभादिषु च तृष्णया । आदिशब्दात्सत्कारयशःश्लोका-
15 दयः परिगृह्यन्ते । तेषु तृष्णया प्रलोभेन । चकारान्न त्यज्यते
लोक इति समुच्चीयते । यत एतत्कारणमपरित्यागस्य तस्मा-

---

1 piṭhikā = Unterlage, Piedestal (*P. W.* from *Kāraṇḍavyūha* 15.9) = introduction.
2 vitarkān, L[1] has the scholion : rāgādibhiḥ.
3 vikṣepa = kāyacittayor unnatatā, cittasya ālambane' pratiṣṭhāna.
4 On priyasneha, VIII 5-16 ; lābhatṛṣṇā, 17.
5 So L[2], M, Dev.—Minaev has : *vidhānevam ?*
6 L[2], M : vicārayet.

हेतस्य स्नेहस्य लोभादीनां वा । यदि वा लोकस्य परित्याग-
निमित्तं विद्वान् विचक्षणः । एवमिति वक्ष्यमाणं विभावयेत् ॥
तदेवाह ।

शमथेन विपश्यनासुयुक्तः
कुरुते क्लेशविनाशमित्यवेत्य । 5
शमथः प्रथमं गवेषणीयः
स च लोके निरपेक्षयाभिरत्या ॥[1] ४

श[ 98ª ]मथः चित्तैकाग्रतालक्षणः समाधिः । तेन सुयुक्त
इत्यपोद्धृत्येहापि[2] योजनीयं । यदि वा हेत्वर्थे तृतीया । शम-
थेन हेतुना विपश्यनासुयुक्तः । सहार्थे वा । शमथेन सार्धं विप- 10
श्यनासुयुक्त इति ।

विपश्यना यथाभूततत्त्वपरिज्ञानस्वभावा प्रज्ञा । तया
सुयुक्तः । युगनद्धवाहिमार्गयोगेन कुरुते क्लेशानां विनाशं
प्रहाणमित्येवमवेत्य ज्ञात्वा क्लेशविमुमुक्षुणा शमथः प्रथममादौ
गवेषणीयः । उत्पाद्य इत्यर्थः । तदनन्तरं विपश्यना । 15

[3]समाहितो हि यथाभूतं प्रजानातीत्यवदन्मुनिः ।
शमाच्च न चलेच्चित्तं बाह्यचेष्टानिवर्तनादिति ॥

स च शमथः । लोके लोकविषये निरपेक्षयाभिरत्या ।

---

1 Metre.

2 Cp. *P. W.* anapoddhārya.

3 It is the 9th kārikā of the *Çikṣās.*, p. XLI, text p. 119.9 and Add-Notes p. 403.—The first part [an old saying of the Master: *Saṁ. N.* III. 13; *Milinda* 39-3] is quoted *Bodhic. p.* IX, 1.

अभिरतिं परिहरत एवोत्पद्यते नान्यथा ॥ तामेवाभिरतिनिर-पेक्षतामुत्तरप्रबन्धेन दर्शयितुमाह ।

**कस्यानित्येष्वनित्यस्य स्नेहो भवितुमर्हति ।**
**येन जन्मसहस्राणि द्रष्टव्यो न पुनः प्रियः ॥ ५**

5 कस्य सचेतनस्य स्वयमेवानित्यस्य । अनित्येषु पुत्रदारा-दिषु । स्नेहो भवितुमर्हति युज्यते । केन हेतुना । येन कार-णेन जन्मनां सहस्राणि अनेकानि जन्मान्यपर्यन्तसंसारे संसरता कदा चिदपि द्रष्टव्यो न पुनः प्रियः[1] । प्रीणातीति प्रिय उच्यते ॥

10 तदपि चास्मिन्नास्ति । इत्याह ।

**अपश्यन्नरतिं याति समाधौ न च तिष्ठति ।**
**न च तृप्यति दृष्ट्वापि पूर्ववद्बाध्यते तृषा ॥ ६**

यदा तावन्न पश्यति तं । तदायमरतिमधृतिं याति । तेनैवासौमनस्येन समाकुलितचित्तत्वात्समाधौ न च तिष्ठति ।
15 नैव स्थितो भवति । तमवलम्बितुमशक्त इत्यर्थः । अथ यदापि प्रियदर्शनमस्य जायते । तदापि न च तृप्यति । दृष्ट्वापि पुन-रधिकतरं बाध्यते [98ᵇ] तृषा । तद्दर्शनाभिलाषेण पूर्ववत् । अदर्शनकाल इव पीड्यते ॥

अपि च सर्वानर्थनिदानं प्रियसंगतिकरणमित्युपदर्शयन्नाह ।

---

1 Mo has: priyaḥ. api ca priṇāti.

[illegible] (Text) Fasc. 1-[illegible] @ [illegible] each [illegible]
[illegible] (English) Part II, Fasc. 1 [illegible]
[illegible]
Parāçara Smṛti, (Text) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /6/ each ... [illegible]
Parāçara, Institutes of (English) ... 0 [illegible]
Prabandhacintāmaṇi (English) Fasc. 1-3 @ /12/ each ... [illegible]
*Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /6/ each Fasc. ... 12 [illegible]
Sāṅkhya Sūtra Vṛtti, (Text) Fasc. 1-4 @ /6/ each ... 1 [illegible]
Ditto (English) Fasc. 1-3 @ /12/ each ... [illegible]
Śraddha Kriya Kaumudi, Fasc. 1-5 ... 1 [illegible]
Suçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ ... 0 12
*Taittereya Saṁhitā, (Text) Fasc. 14-45 @ /6/ each ... 12 [illegible]
Tāṇḍya Brāhmaṇa, (Text) Fasc. 1-19 @ /6/ each ... 7 [illegible]
Trantra Vartika (English) Fasc. 1-2 @ /12/ ... 1 8
Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1-9, Vol. II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /6/ each ... 14 [illegible]
Tattvarthadhigama Sutrom, Fasc. 1-2 ... 0 12
Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1-3 @ /6/ ... 1 2
Upamita-bhava-prapañca-kathā (Text) Fasc. 1-6 @ /6/ each ... 2 4
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ /12/ ... 4 8
Vallala Carita, Fasc. 1 ... 0 6
Varāha Purāṇa, (Text) Fasc. 1-14 @ /6/ each ... 5 4
Varsa Krya Kaumudi, Fasc. 1-6 @ /6/ ... 2 4
*Vāyu Purāṇa, (Text) Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /6/ each 4 8
Vidhano Parigata, Fasc. 1-5 ... 1 14
Viṣṇu Smṛti, (Text) Fasc. 1-2 @ /6/ each ... 0 12
Vivādaratnākara, (Text) Fasc. 1-7 @ /6/ each ... 2 10
Vṛhannāradiya Purāṇa, (Text) Fasc. 2-6 @ /6/ ... 1 14
Vṛhat Svayambhū Purāṇa, Fasc. 1-6 ... 2 4

## *Tibetan Series.*

Pag-Sam Ṭhi S'iñ, Fasc. 1-4 @ 1/ each ... 4 0
Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-5 @ 1/ each ... 13 0
Rtogs *brjod dpag* ḥkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1-5; Vol. II. Fasc. 1-5 @ 1/ each ... 10 0

## *Arabic and Persian Series.*

'Ālamgīrnāmah, with Index, (Text) Fasc. 1-13 @ /6/ each... 4 14
Al-Muqaddasi (English) Vol. I, Fasc. 1-3 @ /12/ ... 2 4
Āīn-i-Akbarī, (Text) Fasc. 1-22 @ 1/ each ... 22 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 1/12/ each ... 29 12
Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/ each ... 37 0
Ditto English Fasc, 1-8 @ 1/ each; Vol II, Fasc. 1 ... 9 0
Arabic Bibliography, by Dr. A. Sprenger ... 0 6
Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /6/ each ... 7 2
Catalogue of Arabic Books and Manuscripts 1-2 ... 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/ each ... 21 0
Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/ each ... 14 0
Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1-4 @ /12/ each ... 3 0
Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1-9 @ /6/ each ... 3 6
Ditto of Azādī, (Text) Fasc. 1-4 @ /6/ each ... 1 8
Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ /12/ each ... 4 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /6/ each ... 1 2
Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... 38 [illegible]
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /6/ each ... 15 [illegible]
Maghāzī of Wāqidī, (Text) Fasc. 1-5 @ /6/ each ... 1 14

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

[illegible] (Text), Fasc. [illegible] @ /6/ each [illegible]
[illegible] (Text) Fasc. [illegible]
[illegible]'s Khiradnāmah-i-Iskandarī, (Text) Fasc. 1-2 @ /12/ each [illegible]
Riyāzu-s-Salāṭīn, (Text) Fasc. 1-5 @ /6/ each ... [illegible]
 Ditto Ditto (English) Fasc. 1-5 ... [illegible]
Tabaqāt-i-Nāṣirī, (Text) Fasc. 1-5 @ /6/ each ... [illegible]
 Ditto (English) Fasc. 1-14 @ /12/ each ... 10
 Ditto Index ... 1
Tārikh-i-Firūz-Shāhi of Ziyāu-d-dīn Barni (Text) Fasc. 1-7 @ /6/ each... [illegible]
Tārikh-i-Firūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1-6 @ /6/ each... 2
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... 3
Wis o Rāmin, (Text) Fasc. 1-5 @ /6/ each ... 1
Zafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /6/ each ... 6
Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... [illegible]

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... 20
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) & 1901 (7), 1902 (9), 1903 (8), @ 1/8 per No. to Members and @ 2/per No. to Non-Members.

*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784–1883 ... 3
 A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... 4
 Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... 2
 Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... 4
5. Anis-ul-Musharrahin ... 3
6. Catalogue of Fossil Vertebrata ... 3
7. Catalogue of the Library of the Asiatic Society, Bengal ... 3
8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... 32
9. Jawāmiu-l-'ilm ir-riyāẓi, 168 pages with 17 plates, 4to. Part I ... 2
10. Khizānatu-l-'ilm ... 4
11. Mahābhārata, Vols. III and IV, @ 20/ each ... 40
12. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... 18
13. Sharaya-ool-Islam ... 4
14. Tibetan Dictionary, by Csoma de Körös ... 10
15. Ditto Grammar " " ... 8
16. Kaçmiraçabdāmṛta, Parts I and II @ 1/8/ ... 3
17. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... 1
18. Memoir on maps illustrating the Ancient Geography of Kaśmir, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... 4

---

Notices of Sanskrit Manuscripts, Fasc. 1-29 @ 1/ each ... 29
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... [illegible]

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.

Books are supplied by V.-P.P.

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1126.



# बोधिचर्यावतारपञ्जिका ।

# PRAJÑĀKARAMATI'S COMMENTARY TO THE BODHICARYĀVATĀRA OF ÇĀNTIDEVA.

EDITED WITH INDICES

BY
LOUIS DE LA VALLÉE-POUSSIN,
PROFESSOR OF SANSKRIT IN THE UNIVERSITY OF GHENT.

FASCICULUS IV.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1905.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*[C]omplete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. |
|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1-4 @ /6/ each ... | 1 |
| Advaitachinta Kaustubhe, Fasc. 1-2 ... ... ... | 0 |
| *Agni Purāṇa, (Text) Fasc. 4-14 @ /6/ each ... ... ... | 4 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 and Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-5 @ /6/ ... ... ... | 7 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1-6 @ /6/ each ... | 2 |
| Açvavaidyaka, (Text) Fasc. 1-5 @ /6/ each ... ... ... | 1 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 2-5; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ... ... | 9 |
| Bāla Bhaṭṭi, Vol. I, Fasc. 1-2 ... ... ... | 0 |
| Baudhayana Srauta Sutra, Fasc. 1-3 @ /6/ each ... ... | 1 |
| *Bhāmati, (Text) Fasc. 4-8 @ /6/ each ... ... ... | 1 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 ... ... ... ... | 1 |
| Bṛhaddēvatā (Text) Fasc. 1-4 @ /6/ each ... ... ... | 1 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1-6 @ /6/ each ... ... | 2 |
| Bodhicaryavatara of Cantidevi, Fasc. 1-3 ... ... ... | 1 |
| Catadusani, Fasc. 1-2 ... ... ... ... ... | 0 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. III, Fasc. 1-6 ... | 4 |
| Çatasahasrika-prajnaparamita (Text) Part I, Fasc. 1-10 @ /6/ each ... | 3 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18. Part II, Fasc. 1-10 @ /6/ each; Vol IV, Fasc. 1-4 ... ... | 21 |
| Çlokavartika, (English) Fasc. 1-4 ... ... ... ... | 3 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 6-17 @ /6/ each ... | 4 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4 @ /6/ each; Vol 4, Fasc. 1 ... ... | 6 |
| Çri Bhāshyam, (Text) Fasc. 1-3 @ /6/ each ... ... ... | 1 |
| Dan Kriya Kaumudi, Fasc. 1-2 ... ... ... ... | 0 |
| Gadadhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ... | 2 |
| Kāla Mādhava, (Text) Fasc. 1-4 @ /6/ each ... ... ... | 1 |
| Kāla Viveka, Fasc. 1-6 ... ... ... ... ... | 2 |
| Kātantra, (Text) Fasc. 1-6 @ /12/ each ... ... ... | 4 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ /12/ each ... ... | 10 |
| Kūrma Purāṇa, (Text) Fasc. 1-9 @ /6/ each ... ... ... | 3 |
| Lalita-Vistara, (English) Fasc. 1-3 @ /12/ each ... ... | 2 |
| Madana Pārijāta, (Text) Fasc. 1-11 @ /6/ each... ... ... | 4 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1-9 & Vol. II, Fasc. 1-12 @ /6/ each. Vol. III, Fasc. 1-2 ... ... ... ... | [illegible] |
| [illegible] Saṅgraha, (Text) Fasc. 1-3 @ /6/ each ... ... | [illegible] |
| [illegible] Purāṇa, (English) Fasc. 1-9 @ /12/ each ... ... | [illegible] |
| [illegible] Darçana, (Text) Fasc. 7-19 @ /6/ each ... ... | 4 |
| [illegible], (Text) Fasc. 1-6 @ /6/ ... ... ... | 2 |
| [illegible], (Text) Vol. IV, Fasc. 1-8 @ /6/ each ... ... | [illegible] |
| [illegible] Fasc. 1-7 (Text) @ /6/ ... ... ... | [illegible] |
| [illegible] Fasc. 1-[illegible] ... ... ... | [illegible] |
| [illegible] (Text) [illegible] ... ... ... | [illegible] |

न पश्यति यथाभूतं संवेगादवहीयते ।
दह्यते तेन शोकेन प्रियसंगमकाङ्क्षया ॥ ७

यथाभूतमविपरीतं दोषगुणांश्च पश्यति। न जानाति। प्रियसंगमकाङ्क्षया तेनैव मोहेन संवेगादवहीयते[1] । भ्रष्टो भवति । तथा तेनैवाभिष्वङ्गेण दह्यते । तेन शोकेन मुहूर्तमपि विच्छेदे । तथा तेन शोकेन दह्यते । परितप्यते तेनैव मनस्तापेन प्रियसंगमकाङ्क्षया । प्रियस्य संगमः संप्रयोगः । तस्मिन्या काङ्क्षा तृष्णा । तया हेतुभूतया । पुनरुत्तरोत्तरमधिकाधिकप्रार्थनया ॥

इतोऽप्यनर्थहेतुरेव तत्संगतिरित्याह ।

तच्चिन्तया मुधा याति[2] ह्रस्वमायुर्मुहुर्मुहुः ।

तस्य प्रियस्य तत्संगमस्य वा चिन्तया तद्गुणानां सदा परिभावनया । कथं नाम ममास्य प्रियसंगमस्य विच्छित्तिर्मा भूदिति तल्लीनचित्ततया वा । निःफलमेवायुःसंस्काराः प्रतिक्षणं क्षीयन्ते । न च कञ्चिदपि कुशलकर्मणि समुपयुज्यन्त इति भावः ॥

न च यदर्थमायुः क्षयमुपनीयते तन्मित्रं[3] स्थिरमित्यत आह ।

---

1 There are eight saṃvegavatthus (jāti, jarā, etc); See *Visuddhimagga* (*J. P. T. S.* 1893) p. 93.

2 L[1] has : yānti.

3 Ms. has : tadamitram—Tib. has : gaṅ-gi don-du tshe zad-par byas-pa ma yin-no zhes-so. de-ltar-na yaṅ hdza-çes brtan-pa yin-no zhe-na.

अशाश्वतेन मित्रेण धर्मो भ्रश्यति शाश्वतः ॥ ८

अवश्यं भङ्गुरतयाऽनवस्थानादशाश्वतेन मित्रेण हेतुना धर्मो भ्रश्यति परिहीयते शाश्वतो दीर्घकालावस्थायी संभारात्मक-त्वात्[1] फलसंभवाच्च ॥

5 स्यादेतत् । अवश्यं हि किं चित्तसंगमाद्धितसुखनिबन्धनं प्राप्यते । तत्किमिति सर्वथा तन्निषिध्यत इत्यत आह ।

बालैः सभागचरितो नियतं याति दुर्गतिं ।
नेष्यते विषभागश्च[2] किं प्राप्तं बालसंगमात् ॥ ९

नापि तत्संगमादनर्थमन्तरेण किंचिदपरमिह लभ्यते 10 [99 a] । तथा हि बालैः पृथग्जनैः सह सभागचरितः[3] समानशीलः । नियतमवश्यं याति दुर्गतिं तत्कर्मसदृशसमाचरणात् आर्यधर्मपरिहाणाच्च । अथार्यधर्मानुवर्तनात्ततोऽसदृश-कर्मकारी स्यात् । तदा नेष्यते द्विष्यते विसभागश्चेति असमा-नचरितः । बालैरिति संबन्धः । अत्र कर्तरि तृतीया ॥

15 इत्युभयलोकबाधनात्किं प्राप्तमधिगतं हितसुखनिमित्तं बालसंगमात् । नैव किंचिदित्यर्थः ॥

न चाटुकचरितैरप्यात्मसात्कर्तुं शक्या इत्याह ।

---

1 Two *sambhāras*, equipments, (*Dharmasaṃgraha*, CXVII), puṇya° (=dharma, *Çikṣās.* $191._5$) jñāna°; four, Lalitav. 39.4 sqq., çamatha°, vipaçyanā°.

2 The Ms. of the Commentary has: visabhāga.

3 See *Jātakamālā*, 22.11 (sabhāga = übereinstimmend, entsprechend. P. W.)

क्षणाद्भवन्ति सुहृदो भवन्ति रिपवः क्षणात् ।
तोषस्थाने प्रकुप्यन्ति दुराराधाः पृथग्जनाः ॥ १०

क्षणमात्रेण सुहृदो मित्राणि भवन्ति । किं [illegible]-मुपलभ्य । क्षणादेव च विषमाभिप्रायत्वात्किंचिन्निमित्तमासाद्य त एव रिपवः शत्रवो भवन्ति । न च निमित्तमपेक्षां नियतं । यत्कदा चित्ततोषस्थाने प्रीतिविषये विपर्यासवशात्प्रकुप्यन्ति । इति दुराराधा दुःखेनाराधयितुं शक्याः पृथग्जना[2] बालाः ॥ अपरमपि बालधर्मं तद्विवर्जनार्थमुपदर्शयन्नाह ।

हितमुक्ताः प्रकुप्यन्ति वारयन्ति च मां हितात्[3] ।
अथ न श्रूयते तेषां कुपिता यान्ति दुर्गतिं ॥ ११

इदं करणीयमिदमकरणीयमित्युक्ता अभिहिताः प्रकुप्यन्ति विद्विषन्ति न पुनस्तदुक्तं हितमिति मन्यन्ते । अन्यत्र वारयन्ति च मां हितात् । किं तवानेन केवलप्रयासफला[illegible]नेनेति तव प्रवृत्तं मां निषेधयन्ति ततः । अथ न श्रूयते तेषां बालानां वचनमिति शेषः । यदि तद्वचनमवमन्य हिते प्रवृत्तिः क्रियते । तदा कुपिता [illegible] निवर्तंत इति तस्मिन् हितकर्मकारिणि कोपं कृत्वा[4] [99b] तत्कर्मप्रेरिता दुर्गतिं प्रयान्ति ॥

---

1. Cp. Çikṣās. 194. ६.
2. pṛthagjana, See *Pugg.-p.*, p. 12.
3. Minaev has: hitān. Cp. Çikṣās. 194. ७.
4. Here the Ms. has again: tatkarmakāriṇi kopaṁ kṛtvā.

इमं च बालधर्ममपरं तद्विवेकाय भावयेदित्युपदर्शयन्नाह।

**ईर्ष्योत्कृष्टात्समाद्द्वन्द्वो हीनान्मानः स्तुतेर्मदः।**
**अवर्णात्प्रतिघश्चेति कदा बालाद्धितं भवेत्॥ १२**

आत्मनो विद्याकुलधनादिभिरुत्कृष्टादुत्तमादीर्ष्या परसंपत्त्य-
5 सहनता जायते। अर्थात्तेष्वेव। आत्मना समात्तुल्याद्द्वन्द्वो विवादः। आत्मनो हीनादधमान्मानोऽभिमानः। अहमितः श्रेष्ठ इत्यभि-
मननात्। स्तुतेर्मदः सद्भूतां तद्गुणानामाख्यानादहं महीया-
नित्यारोपादवलेपः। अवर्णादात्मनो दोषकीर्तनश्रवणाद्द्वेषश्च। अर्थादवर्णवादिनि। इत्येवं कदा कस्मिन् काले बालाद्धितं
10 भवेत्। न कदाचिदित्यर्थः॥

इतोऽपि बालान् परित्यज्य विहरेदिति प्रतिपादयितुमाह।

**आत्मोत्कर्षः परावर्णः संसाररतिसंकथा।**
**इत्याद्यवश्यमशुभं किंचिद्बालस्य बालतः॥ १३**

एकस्य बालस्यापरस्माद्बालादित्येवमादि किंचिदशुभम-
15 कुशलमवश्यं नियमेन जायते। किं तत्। आत्मन उत्कर्षः प्रकर्षः श्रुतज्ञानादिप्रशंसया। परेषामवर्णो दोषप्रकाशनं श्रुतादिप्रच्छादनं। या संसारे रतिरभिरामः तस्य संकथा संवर्णनं कामगुणानां संप्रमोदनात्। इत्यादि एवंप्रकारं॥

**एवं तस्यापि तत्सङ्गात्तेनानर्थसमागमः।**

20 अपरस्यापि। तत्सङ्गाद्द्वितीयस्य सङ्गात्। किंचिदशुभमवश्यं

स्यात् । येनैव तेन कारणेन यथार्थलाभलाभस्य समागमः संप्राप्तिरेवार्थं बालसमागमः । अत आर्यधर्मानुशिक्षणार्थं ॥

एकाकी विहरिष्यामि सुखमक्लिष्टमानसः ॥ १४[1]

बालजनसंगमवियुक्तोऽद्वितीयो विहरिष्यामि । तद्विवेका- त्सुखं क्रियाविशेषणमेतत् । कथमक्लिष्टमानस इति [100a] तत्संपर्कविवर्जनात् तज्जनसंक्लेशाभावात् । पूर्वस्मिन् हेतुपद- मेतत् । यदि वा सुखं कायिकं । अक्लिष्टमानस इति मानसं ॥

तस्माद्बालजनसंपर्कजदुःखपरिजिहीर्षुणा तत्संगतिर्न कार्येति कथयितुमाह ।

बालाद्दूरं पलायेत प्राप्तमाराधयेत्प्रियैः ।
न संस्तवानुबन्धेन किं तूदासीनसाधुवत्[2] ॥ १५

बालात्सर्वतो दूरमारात्पलायेत । अपसरेत् । यथा तैः[3] सह का चिदपि संगतिर्न स्यात् । अथ कथं चिद्दैवायोगाद्भवेत् । तदा प्राप्तं मिलितमाराधयेत् । आरागयेत्[4] । प्रियैः प्रीति- करैरुपचारैः । आराधयन्नपि न संस्तवानुबन्धेन न परिचया- पत्तिकरणाभिप्रायेण । यदि वा न संस्तवानुनयेन । किं तर्हि प्रतिघानुनयवर्जनादुदासीनसाधुवत् सदाचारमध्यस्थजनवत् ॥

---

1 Cp. Çikṣās. 196. 4.
2 Cp. Çikṣās. 194. 9, 197. 8.
3 So Ms.
4 Çikṣās. 80, n. 3, 244, n 1.

इदमपरं चातुर्गमवस्थाचारं विवक्षुराह ।

धर्मार्थमाचमादाय भृङ्गवत्कुसुमान्मधु ।
अपूर्व इव सर्वत्र विहरिष्याम्यसंस्तुतः ॥ १६

धर्मार्थिदं धर्माय तदेव केवलं तन्मात्रं । तदादाय गृहीत्वा । 5 दारादानं ग्रस्तेत्यर्थः । भृङ्गवत् षट्पदीकवत् । मधु मकरन्दं । यदि वा धर्म एवार्थः प्रयोजनमस्य चीवरपिण्डपातादेरिति विग्रहः । बाह्यसंपर्कविमुक्तः अपूर्व इव नवचन्द्रोपमः सर्वत्र देशे ग्रामे वा[1] विहरिष्यामि । असंस्तुतः अपरिचितः । तन्निवासि-जनैः प्रत्यासत्तिरहित इत्यर्थः ॥

10 तदेवं प्रियसंगतिकारणं स्नेहमपाकृत्य सांप्रतं लाभादितृष्णा लोकापरित्यागकारणं परिवर्तयेत्तुपदर्शयन्नाह ।

लाभी च सत्कृतश्चाहमिच्छन्ति बहवश्च मां ।
इति मर्त्यस्य संप्राप्तान्मरणाज्जायते भयं ॥ १७

लाभो विद्यतेऽस्येति । चीवरपिण्डपातादिलाभयोगाल्लाभी 15 चाहं । सत्कृतश्च पूजितो जनैः । इच्छन्ति अभिलषन्ति बहव-श्चानेके मां । [100b] बहुजनसंमतोऽहमित्यर्थः । इत्येवं चिन्त-यत एवं मर्त्यस्य मनुष्यस्य मरणाज्जायते भयं । किंभूतात्संप्रा-प्तात् अचिन्तितोपस्थितात् । इति सर्वदावश्यंभाविमरणमनवि-

---

1 Tib. bsa'i gnas-skabs kun-tu am yul kun-tu = sarvadaçāyām sarvadeçe vā.

कुर्यात् [illegible]
न किं चित्प्रयोजनमनुपश्यामादिति भाव[1]।

इत्थमपि बालजनसंगतिर्दुःखहेतुरेवेत्याह।

निन्दन्त्यलाभिनं सत्त्वमवध्यायन्ति लाभिनं।
प्रकृत्या दुःखसंवासैः कथं तैर्जायते रतिः ॥ २६ ॥

निन्दन्ति कुत्सयन्ति। अलाभिनं लाभविरहितं सत्त्वं। अकृतपुण्योऽयं वराको येनायं पिण्डपातादिमात्रकमपि नैवा-परिक्लेशेन[2] प्राप्नोतीति। लाभिनं पुनरवध्यायन्ति प्रवरैर्दायक-दानपतिभिश्चीवरादिप्रदानैः पूजितं। कुहनादिभिरपि[3] दायक-दानपतीन् प्रसाद्य चीवरादिलाभमासादयति। अन्यथा 10 किमन्यस्य तथाविधा गुणा न सन्ति येनायमेव वरं लभते

---

1 Neither the Sanskrit Ms. nor the Tib. translation show any lacuna, but it seems that these last words refer to the stanza 22 : tasmāt kiṁ lokacintayā. According to the Text-Mss., we have :

Yatra yatra ratiṁ yāti manaḥ sukhavimohitam
tat tat sahasraguṇitaṁ duḥkhaṁ bhūtvopatiṣṭhati [18]
tasmāt prājño na tām icched icchāto jāyate bhayam
svayam eva ca yāty etad dhairyaṁ kṛtvā pratīkṣatām (a) [19]
bahavo lābhino 'bhūvan bahavaço yaçasvinaḥ
saha lābhayaçobhis te na jñātāḥ kva gatā iti [20]
mām evānye jugupsanti kiṁ prahṛṣyāmy ahaṁ stutaḥ
mām evānye praçaṁsanti kiṁ viṣīdāmi ninditaḥ [21]
nānādhimuktikāḥ sattvā jinair api na toṣitāḥ
kiṁ punar mādṛçair ajñais tasmāt kiṁ lokacintayā [22]

(a) Minaev has pratīkṣya.

2 According to Tib. : naiva parikleçena...as he cannot obtain the alms, even with difficulty ; ... as he does not obtain ... but with difficulty.

3 On kuhanā, see Çikṣā., index.

नापर इत्यस्मिंश्चित्तमप्रसादयन्ति वचनं चैवमुद्गिरन्ति । इत्थं-
भवथापि तेभ्यो न चेतसि शान्तिरस्ति ॥

तदेवं प्रकृत्या स्वभावेन दुःखहेतुत्वात् । दुःखं [सं]वासो
येषां बालानां ते तथा । तैस्तथाविधैः सह संवसतः कथं जायते
5 रतिः । नैवेत्यर्थः । न च ------ [1] सौमनस्येन च विहाराय
विवेककामेन मयाऽरण्यनिषेवणाय यतितव्यमिति तदनुशंसां
दर्शयन्नाह ।

नावध्यायन्ति तरवो न चाराध्याः प्रयत्नतः ।
कदा तैः सुखसंवासैः[2] सह वासो भवेन्मम ॥ २६

10 तरवो वृक्षा नावध्यायन्ति न चाराध्या आराधयितव्याः

---

1 A lacuna in the Ms.

Tib. (fol. 168 a 5) has: byis-pa sñiṅ-hgrogs kyaṅ brtan-pa ma yin-par | gaṅ-gi-phyir byis-pa zhes-pa la sogs-pa gsuṅs-te | grogs-pa ni sñiṅ-du-sdug-pa yin-la | de-bzhin-gçegs-pas gsuṅs-pa ni luṅ-rnams-su gsuṅs-pa yin-no | cii-phyir zhe na | gaṅ-gi-phyir raṅ-la dgos-pa med-par byis-pa gaṅ-la yaṅ dga-ba skye-bar mi hgyur-te | dei-phyir de med-pa-las bslog-par hgyur-ro | de kyaṅ byis-pa daṅ hgrogs-pa yin-na yaṅ bstan-pa ma-yin-no | de-la byams-par byas-pas kyaṅ so-soi skye-bo mgu-bar mi-nus-so | de-lta-bas na de-daṅ-hgrogs-pa-las byuṅ-bai ñes-pa spaṅ-bai ched-du bde-ba daṅ yid-bde-bas dben-pa-hdod-pas,....
na ca bālo dṛdhasuhṛd bhavati. Yasmān [na] bāla ityādy āha

[na bālaḥ kasyacin mitram iti coktaṁ tathāgataiḥ
na svārthena vinā prītir yasmād bālasya jāyate. 24]
(svārthadvāreṇa yā prītir ātmārthaṁ prītir eva sā
dravyanāçe yathodvegaḥ sukhahānikṛto hi saḥ 25) (a)

mitram iti suhṛt. uktaṁ tathāgatenety āgameṣūktam. kasmād? yasmāt svaprayojanena vinā bālasya na karhi cid api prītir jāyate. tasmāt tadabhāve viparyayaḥ. tad api bālasaṁvāse saty api na nirdiṣṭam (?). tatra maitrīkṛtenāpi pṛthagjanasya prītir açakyā. evaṁ sati tatsaṁvāsodbhūtadoṣaparihārārtham sukhena saumanasyena ca;........

(a) The Çloka 25, given by Mss. is wanting in the Tibetan translation.

2 Cp. M. Vyut. 126. 10.

प्रचलत इति। तद्गुणबहुमानाचरणेन चर्यादिषु सदा चित्त-माभिप्रायरचितत्वात् [101a]। इति कदा तैस्तरुभिः सह वासो भवेन्मम। किंभूतैः सुखसंवासैरित्यामंत्रयति। सुखहेतुत्वात्सुख-मिति पूर्ववत्॥

पुनरेकाकिताविहारेऽभिरतिमाह।

**शून्यदेवकुले स्थित्वा वृक्षमूले गुहासु वा।**
**कदानपेक्षो यास्यामि पृष्ठतोऽनवलोकयन्॥ २७**

शून्यदेवकुले जनसंकीर्णतारहिते स्थित्वा निवस्य। रात्रि-मेकामुषित्वा द्वे वा यथाभिलाषं वृक्षमूले वृक्षच्छायायाम्। पर्वतादिषु गुह्यप्रदेशा गुहाः। तत्र वा। अनपेक्षः कदा यास्यामि। ममत्वस्थानस्य कस्य चिदभावात्। अत एव पृष्ठतो-ऽनवलोकयन् पश्चादनिर्वृतेरभावात्॥

पुनरन्यथा प्राह।

**अममेषु[1] प्रदेशेषु विस्तीर्णेषु स्वभावतः।**
**स्वच्छन्दचार्यनिलयो विहरिष्याम्यहं कदा॥ २८**

केन चिद्विरोधकारिणा पूर्वममीकृतेषु। विस्तीर्णेषु विपु-लेषु सौमनस्यकारिषु। स्वभावतः स्वयमेव तथाविधेषु। न कृत्रिमतया। विहरिष्याम्यहं कदा। इत्याशास्ते॥ एवं विहरतो

---

1 Cp. *Prajñāpāramitā*, 487. 10.

जन्ममरणयोर्न कश्चित्कस्य चिद्दुःखसंभागी स्यात् । [illegible] च स्वकर्मोपचितमेव सुखदुःखमुपभुज्यते सर्वैः । यतोऽभिमानमात्रमेवैतत् । यतो नान्यस्य तदात्मनो[1] व्यतिरिक्तस्य तद्व्यथाभागः । तस्याशुभकारिणो व्यथा । तस्या भागः प्रत्यंशो जायते । तस्य वा । तेनैव तस्याः संवेद्यमानत्वात् । यतो न किं चित्प्रयोजनं प्रियैः कुशलपक्षविघातकारिभिः ॥

परमार्थतो न कस्य चित्केन चित्संगति[102a]रस्तीत्युपदर्शयन्नाह ।

अध्वानं प्रतिपन्नस्य यथावासपरिग्रहः[2] ।
तथा भवाध्वगस्यापि जन्मावासपरिग्रहः ॥ ३४

मार्गप्रस्थितस्य कां चिद्दिशं गन्तुमुद्यतस्य यथाऽपरैरध्वगैः सहैकस्मिन्नावासे क्व चिन्मण्डपादौ वावासपरिग्रहो भवति । तथा संसारेऽपि कर्माध्वगतेः संसरतो[3] ज्ञातिसगोत्रबान्धवोचितादिभिरेकस्मिन् जन्म[न्य]ावासपरिग्रहो जायते । पुनरपि तत्परित्यज्य क्व चिदेकाकितया याति । न च तत्र केचित्सहायास्तमनुगच्छन्ति । यतो न केन चित्कस्य चिच्चिरस्थायी संगतिः संभवति । तस्मादात्मानर्थसंचयोपनेयीं व्ययमुपकल्प्य केन चित्संगतिं कुर्यात् ॥

---

1 Ms. first hand: tavātmano.

2 Minaev has *yathā vāsa°*.

3 saṁsarataḥ jñāti° (first hand); saṁsarato jñāti° (second hand).

तदेवमभिधाय संगतिदोषं । एकाकितायाः पुनरिमे गुणा इति दर्शयितुमेनोपदर्शयन्नाह ।

चतुर्भिः पुरुषैर्यावत्स न निर्धार्यते ततः ।
आशोच्यमानो[1] लोकेन[2] तावदेव वनं व्रजेत् ॥ ३५ ॥
असंस्तवाविरोधाभ्यामेक एव शरीरकः ।
पूर्वमेव मृतो लोके म्रियमाणो न शोचति ॥ ३६ ॥
न चान्तिकचराः के चिच्छोचन्तः कुर्वते व्यथां ।
बुद्धाद्यनुस्मृतिं चास्य विक्षिपन्ति न के चन ॥ ३७ ॥

अवश्यमनिच्छन्नपीदानीं जीवदवस्थायां मरणमुपगतो बला-
त्त्याजयितव्यो . . . . [आशोच्य]मानः[3] । हा वत्सेत्यादि- 10
विलापवचनैः परिदेव्यमानः लोकेन बन्धुप्रभृतिना तावदेव
ततः पूर्वमेव वनं व्रजेत् ॥

कः पुनरत्र गुणविशेष इत्याह । असंस्तवेत्यादि । अनुनय-
प्रतिघाभावात् । म्रियमाणो न शोचति । शोकोपजनितदुःख-

---

[1] Minaev according to L³, M, has: açocyamāno; such the reading of the Tib. (See n. 3). L¹: āçocyamāno, and the Commentary: paridevyamāna (yoṅs-su gduṅs-pa) supports this reading.

[2] Minaev has: loke na

[3] A lacuna in the Ms.—Tib. (Fol. 170a4.) has: da ni gson-pai mtha mi hdod-kyaṅ ṅes-par hchi-bar bgyur-pas khyim-na gnas-pai stobs-kyis dor-bar bya-ba yin-pa, de-bas-na de-ltar raṅ-ñid-kyis gson-pa-ñid-na dor-bar rigs-so. de-nas zhes-pa-ni kyim-nas-so. mya-ṅan med-par zhes-pa ni =...balāt tyājayitavyo gṛhāvāsaḥ; tasmād evaṁ svayam jīvann eva tyaktum arhati. tata iti gṛhāt. açocyamāno......

श्च [103a][1] . . . . . . . . . . . . . . . [104a] रूपः। पूज्यते तथा स्रगादिभिः। तैर्गृध्रैरन्यैश्च गोमायुप्रभृतिभिर्मांसोच्छ्रयं मांसपुञ्जमिमं भक्षितं बीभत्सं दृष्ट्वा किमीर्ष्यालो न रक्षसीति योजयितव्यं।
5 किमिदानीं पलायस इति वा व्यवहितेन संबन्धः॥ नन्विद-मपि प्रष्टव्यो भवानित्याह।

निश्चलादपि ते त्रासः कङ्कालादेवमीक्षितात्।

निश्चलादपि काष्ठलोष्टसमानात्। तव त्रासो जायत इति काका पृच्छति। कङ्कालात्। अस्थिपञ्जरात्। एवमपि

---

1 One folio wanting in the Ms.—Tib. fol. 171 a 5–172 b 2—Tibetan translation will be found in Appendix. Here we give the Sanskrit stanzas

yadarthaṁ dūtadūtīnāṁ kṛtāñjalir anekadhā
na ca pāpam akīrtir vā yadarthaṁ gaṇitā purā. 41
prakṣiptaç ca bhaye 'py ātmā draviṇaṁ ca vyayīkṛtam
yāny eva ca pariṣvajya babhūvottamanirvṛtiḥ. 42
tāny evāsthīni nānyāni svādhīnāny amamāni ca
prakāmaṁ sampariṣvajya kiṁ na gacchasi nirvṛtim. 43
unnāmyamānaṁ yatnād (a) yan nīyamānam adho hriyā
purā dṛṣṭam adṛṣṭaṁ vā mukhaṁ (b) jālikayāvṛtam. 44
tan mukhaṁ tvatparikleçam asahadbhir ivādhunā
gṛdhrair vyaktīkṛtaṁ paçya kim idānīṁ palāyase. 45
paracakṣurnipātebhyo 'py āsīd yat parirakṣitam
tad adya bhakṣitaṁ yāvat kim īrṣyālo na rakṣasi. 46
māṁsoccbrayam imaṁ dṛṣṭvā gṛdhrair anyaiç ca bhakṣitam
āhāraḥ pūjyate 'nyeṣām (c) srakcandanavibhūṣaṇaiḥ. 47

---

(a) So L[3], M.—Minaev has: yannād.
(b) Minaev has: sukham.
(c) Minaev has: yeṣām; L[3] teṣām; but Tib. gzhan-gyi zas.

बीभत्सरूपात्[1] । ईक्षिताद्दृष्टात् । यदि वा[2] एवं त्रासः । यद्दूरादपि दूरतरं[3] पलायध्व इति योजनीयं । यदेवं पश्यतः कथं न त्रास इत्याह ।

वेताडेनेव केनापि चाल्यमानाद्भयं न किं ॥ ४८[4]

भूतग्रहेण चाल्यमानाज्जीवतश्शवतः । किं न भयं भवति । 5
तस्मादतिप्रयत्नेन भयं युक्तमित्यर्थः ॥ एवं तावज्जुगुप्सनीयतां प्रतिपाद्य पुनरन्यथा प्रतिपादयितुमाह ।

एकस्मादशनादेषां लालामेध्यं च जायते ।
तत्रामेध्यमनिष्टं ते लालापानं कथं प्रियं ॥ ४९

यो हि नाम मोहावृतविवेको रागविषमूर्छितचैतन्यः । 10
तस्यातिकमनीयतया कामिनीवदनमधुपानबुद्ध्या तन्मुखविन्यस्तलालापानाभिलाषिणः[5] । पर्यनुयोगमाह । एकमेव कारणं द्वयोरप्याहारपानस्वभावात् । तत्र तयोर्मध्ये अमेध्यं पुरीषमप्रियं भवतः । लालायाः श्लेष्मणः पानं कथं प्रियं । केन प्रकारेण तत्राभिरतिर्नान्यत्र । द्वयोरपि युक्तेति भावः ॥ 15
अथापि स्यात् । यद्यपि द्वयोरपि कारणमभिन्नं । तथापि

---

1 Ms. bhibhatsa.

2 Yaṅ-na de-ltar zhes-pa ni skrag-pa ste.

3 Ms. dūrata [ ]m p°; illegible syllable in margin.—Tib. çin-tu riṅ-bar.

4 Stanza 50th in Minaev's edition and in Tib. translation of the text (Mdo XXVI 24 a 4). Stanza 49th of Minaev is the 51th in our commentary and the 52th according to the Ms. L.

5 So Ms.

तस्मिन्नतिदुर्गन्धतया वैमुख्यं । इतरस्मिंस्तु तदभावात्प्रीतिरिति ।
तदेतदपि न सम्यगभिधानमित्युपपादयन्नाह ।

**तूलगर्भैर्मृदुस्पर्शै रमन्ते नोपधानकैः ।**
**दुर्गन्धं न स्रवन्तीति[1] कामिनो ऽमेध्यमोहिताः ॥ ५०**

5 कर्पासादितूलपरिपूरितैर्मसू[ 104b ]रकादिभिरुपधानैः सु-
कुमारस्पर्शैः कामिनो न रमन्ते । न धृतिमधिवासयन्ति ।
कुतः । दौर्गन्ध्यमशुचिनिस्यन्दं न मुञ्चतीति[2] कृत्वा ऽशुचि-
परिपूरिते स्त्रीकडेवर एव रमन्ते । एतदपि कुतः । कामिनः
कामसुखाभिलाषिणः । अमेध्यमोहिता यतः । हेतुपदमेतत् ।
10 अमेध्यविषये ऽमेध्येन वा मोहिताः । अशुचौ शुचिविपर्या-
सात्तत्रैवातिशयवतीमभिरतिमनुभवन्ति ॥ स्यादेतत् । यदि
नामाशुचिलममेध्ये स्त्रीकडेवरे च साधारणं । तथापि तदेकं च
विवृतमन्यच प्रच्छादितं । अतस्तदन्यपरिहारेणास्मिन्नभिष्वङ्ग
इत्यथाह ।

15 **यत्र छन्ने ऽप्ययं रागस्तदच्छन्नं किमप्रियं ।**
**न चेत्प्रयोजनं तेन कस्माच्छन्नं विमृद्यते ॥ ५१**

यस्मिन्नमेध्यस्वभावे प्रच्छादितरूपे ऽदृष्टे ऽपीति यावत् ।
एतादृशो ऽभिष्वङ्गः । तदच्छन्नं दृश्यतां गतमतिशयेन
प्रीतिकरमुपजायत इत्युचितं । तत्किमिति तथाभूतमप्रियं

---

1 Commentary has *daurgandhyam...muñcati.*
2 So Ms.; read *muñcanti.*

भवतः । अथ तथाभूते सर्वथा वैमुख्यमेव ते नाच्छन्नेन किं चित्प्रयोजनं तवास्ति । यद्येवं तर्हि कस्माद्धेतोः इदं विशेषेण स्पृश्यते । तदन्यपरिहारेण तत्रैव घटनाय यत्नः क्रियते ॥ अपि चेदमपि प्रष्टव्यस्त्वं किं भवानशुचिविरागो न वेति । अथ प्रथमं विकल्पमधिकृत्याह । 5

यदि ते नाशुचौ रागः कस्मादालिङ्गसेऽपरं ।

यदि भवतोऽशुचौ न रागो न सर्वथा आसङ्गोऽस्ति । तर्हि कस्मादालिङ्गसेऽपरमन्यं । किं तदित्याह ।

मांसकर्दमसंलिप्तं स्नायुबद्धास्थिपञ्जरं ॥ ५२

मांसमेव कर्दम इव लेपनसाधर्म्यात् । तेन लिप्तमुपदिग्धं । 10 किमेवं भूतमिति चेत् । स्नायुबद्धास्थिपञ्जरं । स्नाय्वावद्धं सङ्गीकृतं । आयत्तीकृतं । अस्थिपञ्जरं । अस्थिसंकलं[1] । अन्यथा खण्डशो विसकलितं[2] स्यात् । इति विरागविषयतामस्य द[105a]र्शयति । अथ शुचौ राग इति द्वितीयो विकल्पः स्वीक्रियते । तत्राह । त्वमेवेत्यादि । 15

अथ वान्यथावतार्यते । यदुक्तं परेण । इह चर्मादिना रागो भवति नाच्छन्ने । तत्राह । यदीत्यादि । यदि तेन हेतुना चर्मादिना पिहितत्वादिति कृत्वाऽशुचौ रागो भवति

---

[1] Ms. çaṁkalam—new word.

[2] New word.

भवतः । तदा कथमद्यापि स्पृहसे परमन्यदीयं पञ्जरं । अन्य-त्पूर्ववत् ॥

किं तर्हि समुचितमत्रेत्याह ।

त्वमेव बह्वमेध्यं ते तेनैव धृतिमाचर ।
5 अमेध्यभस्त्रामपरां गूथघस्मर विस्मर ॥ ५३

त्वमेवात्मनैव बहुतरमशुचिलालाशिङ्घाणमस्तकलुङ्गमूत्रपुरीषादि[1] तवास्ति । तेनैवाशुचिना संतोषं कुरुष्व । ततोऽप्यमेध्यभस्त्रां[2] पुरीषप्रसेविकां[3] । अपरामन्यां स्त्रीशरीरस्वभावां । गूथघस्मर पुरीषभक्षणशील विस्मर तत्र मनस्विकारं मा कार्षीः ॥

10 मांसप्रियोऽहमित्यादिना पुनरन्यथा परिहारमाह ।

मांसप्रियोऽहमस्येति[4] द्रष्टुं[5] स्प्रष्टुं च वाञ्छसि ।
अचेतनं स्वभावेन मांसं त्वं[6] कथमिच्छसि ॥ ५४

मांसं प्रियं यस्य । एषोऽहं मांसप्रियः । अस्याक्षिपञ्जरस्य । यदि वा । मांसस्य प्रियो मांसप्रियोऽहमस्येति पूर्ववत् । मांस-

---

1 M. *Vyut.* 189. 114 : çiṅghāṇaka.

2 Ms. : pi maidhya°

3 See P. W: sub voc. prasevaka (Sack) ; prasevikā only in the compound carma°.

4 L³, M : 'ham asmîti

5 Minaev has : sprastum drastum. So Tib. (24 b1) but see the Commentary.

6 Minaev has : māṃsatvam—Tib. ça ni khyod go cis mi hdod.

प्रियोऽहमस्य प्रिय इति यावत् । वापेक्षणेऽपि समानो ममक-
त्वात् । इत्येवं तत्प्रलोभात्प्रत्युपकारधिया वा द्रष्टुं स्प्रष्टुं च
वाञ्छसि । दर्शनं स्पर्शनं चाभिलषसि ॥ अथाह । अचेतनं
चैतन्यशून्यं मृत्पिण्डप्रायं[1] । स्वभावेन प्रकृत्या । न तु पुनर्यथा-
परे वर्णयन्ति । चैतन्ययोगादचेतनमपि चेतनमभिधीयते । 5
तादृशं मांसं त्वमचेतनस्वभावं कामुकः सन् कथमिच्छसि ।
तद्दृष्टौ[2] च मृत्पिण्डेऽपि स्यात् । तथा च सति भवानपि न
चेतनः स्यात् ॥

अस्ति तव चित्तस्वभावं चित्तं । तेन तदिच्छामीति चेदाह ।
[ 105b ] 10

यदिच्छसि न तच्चित्तं द्रष्टुं[3] स्प्रष्टुं च शक्यते ।
यच्च शक्यं न तद्वेत्ति किं तदालिङ्गसे मुधा ॥ ५५

यच्चित्तं चित्तस्वभावमिच्छसि । तदरूपित्वाद्द्रष्टुं न शक्यते ।
यच्च मांसास्थिस्वभावं कडेवरं[4] द्रष्टुं च स्प्रष्टुं च शक्यते । न
तद्वेत्ति न जानाति । अचेतनत्वात् । अतः किमिति तदचेतन- 15
मालिङ्गसे आश्लिष्यसि । मुधेति निष्फलं । नैवालिङ्गितुमुचित-
मिति भावः । अन्यथा[1] लोष्टाद्यालिङ्गनप्रसङ्गः ॥

---

1 Mṛtpiṇḍa = hjim-goṅ; infra, = hjim-pai dum-bu.
2 Ms.: taddṛṣṭau; Tib.: de hdod-pa na = tadicchāyām.
3 See p. 308 n. 5.
4 The Ms. has once only (in this chapter) the reading: kalevara.

किं चेदमप्यतिगर्हितमित्यादर्शयन्नाह ।

नामेध्यमयमन्यस्य कायं वेत्सीत्यनद्भुतं ।
स्वामेध्यमयमेव[2] त्वं तं नावैषीति विस्मयः ॥ ५६

अन्यस्य कायं यदमेध्यमयं न वेत्सि तत्र किं चिदाश्चर्यं । युक्तमेव तदवेदनं परसंतानस्यात्मना व्यवहितत्वात् ॥ इदं पुनरतिशयेनाश्चर्यस्थानं । यत्स्वस्यात्मनोऽमेध्यमयं त्वं तं कायं नावैषि । नावगच्छसि ॥

इदानीं शास्त्रकारस्तं संवेजयन्नाह[3] ।

विघनार्कांशुविकचं मुक्त्वा तरुणपङ्कजं ।
अमेध्यशौण्डचित्तस्य का रतिर्गूथपञ्जरे ॥ ५७

विघनार्कांशुभिर्विकचं विकसितं । तादृशं तरुणपङ्कजं अभिनवसरोरुहं हित्वा । अमेध्याभिनिविष्टचित्तस्य का रतिर्गूथपञ्जरे । न युक्तेति भावः ॥

पुनरन्यथा प्राह ।

मृदाद्यमेध्यलिप्तत्वाद्यदि न स्प्रष्टुमिच्छसि ।
यतस्तन्निर्गतं कायात्तं स्प्रष्टुं कथमिच्छसि ॥ ५८

---

1 The reading of the Ms. is possibly loṣṭra, a wrong reading according to P. W.

2 So L[3], M.—Minaev has : °maya eva.

3 taṁ saṁvejayann āha. Tib. (174 b5) de-la skyo-bar mdzad-pa......

आदिशब्दाद्वसादि । अशुचि वर्जितत्वात् । यदि स्प्रष्टुं न वाञ्छसि । यतः कायात्तदमेध्यं निर्गतं निर्यातं तं कायं कथमिच्छसि स्प्रष्टुं ॥

अथापि स्यात् । नायमुपालम्भो मम युक्तरूपो यतो न मे कश्चिदभिनिवेशोऽमेध्य इत्याह । 5

**यदि ते नाशुचौ रागः कस्मादालिङ्गसे परं ।**
**अमेध्यक्षेत्रसंभूतं तद्बीजं तेन वर्धितं ॥ ५९**

अमेध्यक्षेत्रं मातुर्जठरं । अनेकाशुचिस्थानत्वात् । तत्र संभूतं समुत्पन्नं । तद्बीजं । तदेवामेध्यं मातापितृशुक्रशोणितस्वभावं बीजं यस्य तत्तथोक्तं । तेन वर्धितमिति । तेनामेध्येन मातृ- 10 पीताशितस्य वान्तकल्पस्य रसेन वर्धितं गर्भस्थितमुपबृंहितं । बहिर्निर्गत[ 106a ]मपि स्वयमशितपीतपरिपाकाशुचिरसेन । कस्मादालिङ्गसे परमिति संबन्धः । परं स्त्रीकडेवरं । इत्युपालम्भोऽस्त्येव भवतः ॥

अथाशुचिरागोऽस्त्विति पक्षस्वीकारः । तदाप्युपालम्भास्प- 15 दस्य एवेत्याह ।

**अमेध्यभवमल्पत्वान्न[1] वाञ्छस्यशुचिं कृमिं ।**
**बह्वमेध्यमयं कायममेध्यजमपीच्छसि ॥ ६०**

---

1 So Minaev.—M. : amedhyabhavam eva tvam ..

पुरीषाद्यशुचिसंभूतं कृमिं प्रायश्चातं न वाञ्छसि। कायं
पुनर्मांसग्रामस्य बहुतराशुचिस्वभावमशुचिसंभूतमपि पूर्वकमे-
वेच्छसि॥

अथापि स्यात्। किमत्रोत्तरं वक्तव्यं। यतोऽहमपि यादृग्-
5 यादृशं तस्याः शरीरं। तेनाशुचेर्नाशुचिसंपर्को दोषः।[1] यादृशो
यक्षस्तादृशो बलिरपीत्यत्राह।

न केवलममेध्यत्वमात्मीयं न जुगुप्ससि।
अमेध्यभाण्डानपरान् गूथघस्मर वाञ्छसि॥ ६१

अयमिह महामोहस्य प्रभावः। यदात्मगतमेव तावदशुचि-
10 स्वभावं न विगर्हसि। प्रत्युतापरानप्यशुचिकुम्भानभिलषसि। इति
धिक् परामर्शविकलता। गूथघस्मरेति तिरस्कारवचनेन तस्यैव
संबोधनं॥

इदानीं साक्षात्तस्याशुचिस्वभावतां प्रतिपादयन्नाह।

कर्पूरादिषु हृद्येषु शाल्यन्नव्यञ्जनेषु वा[2]।
15 मुखक्षिप्तविसृष्टेषु भूमिरप्यशुचिर्मता॥ ६२

एवं शुचिपवित्रवस्तून्यपि यदेकदेशनिष्यन्दसंपर्कादपवित्र-

---

1 See Col. Jacob, Second handful of popular maxims, p. 36.
2 Minaev has: çālyaṁ na vyañjaneṣu vā.

स्वभावतां व्रजन्ति। यावता तावन्ति वस्तूनि तत्संसर्गाद्भूमि-रपि शुचिस्वभावाऽशुचित्वं प्रयाति॥

**यदि प्रत्यक्षमप्येतदमेध्यं नाधिमुच्यसे।**
**श्मशाने[1] पतितान्घोरान् कायान् पश्यापरानपि॥ ६३**

एवं तावदध्यक्षसिद्धोऽयं व्यवहारः। तथापि यदि नाधि- 5
मुच्यसे न संप्रत्येषि दृष्टापि न श्रद्धासीत्यर्थः। तदा श्मशाने
पूतिनिवासे कायान् पश्य। किंभूतान्। घोरानिति। विखा-
दितकविनीलकविपूयकादिस्वभावतया[2] बीभत्सान् भयंकरान्
वा। अपरानिति। अतोऽधिकान्[3]॥

किं च। प्रकृत्या विरक्त एवायं सर्वदा कायो नाभिरति- 10
स्थानं युज्यत इत्यु[10 b]पदर्शयन्नाह।

**चर्मण्युत्पाटिते[4] यस्माद्भयमुत्पद्यते महत्।**
**कथं ज्ञात्वापि तत्रैव पुनरुत्पद्यते रतिः॥ ६४**

उत्पाटिते वियोजिते। यस्मादिति कायात्। भयो
जायते महान्। किमेतदिति। एवं तत्स्वभावं विदित्वापि कथं 15
तस्मिन्नेव स्थाने भयस्थानत्वेनैकदा प्रतिपन्ने पुनरन्यदा जायते
रतिरभिष्वङ्गः॥

---

1 Patita = bor-ba.

2 See *M. Vyut.* 52, 1. 2. 6. (vinīlakasaṁjñā, etc., parts of the Açubhabhāvanā) vipūyaka also in P.W.

3 gshan yaṅ zhes-pa ni hdi-bas lhag-pao. (Sol. 175 b5.)

4 So Minaev; M, L[3]: udghāṭite.

स्यादेतत्। यदि नामाशुचिस्वभावता कायस्यावसिता। तथापि चन्दनादिसुरभिवस्तूपलिप्तोऽसौ कमनीयो भवति। इत्यपाह।

काये न्यस्तोऽप्यसौ गन्धश्चन्दनादेव नान्यतः।
5 अन्यदीयेन गन्धेन कस्मादन्यत्र रज्यते[1] ॥ ६५

शरीरे निवेशितोऽप्यसौ गन्धः। चन्दनादिप्रसूतः। यद्वशात्काये कमनीयबुद्धिरुपजायते। चन्दनादेव केवलात्। नान्यत इति कायात्। अतः कस्मात्परकीयेन गन्धेन चन्दनसमुद्भूतेनान्यत्र यत्रासौ गन्धो न भवति। तत्राभिरतिः क्रियते॥

10 अपि च। चन्दनादिसंस्कारोऽपि केवलात्मोपघाताय वर्तते न हितायेति प्रतिपादयन्नाह।

यदि स्वभावदौर्गन्ध्याद्रागो नात्र शिवं ननु।
किमनर्थरुचिर्लोकस्तं[2] गन्धेनानुलिम्पति ॥ ६६

स्वभावदौर्गन्ध्यात्सहजात्पूतिगन्धवत्त्वात्। अत्रेति काये। यदि 15 रागो नोत्पद्यते तदा शिवं ननु कल्याणमेव स्यात्। एवं गुणसंभवेऽपि किं कारणमनर्थप्रियो लोकस्तं कायं गन्धेनानुलिम्पति। सर्वथा न युक्तमेतदित्यर्थः॥

न चास्य संस्कारसद्भावेऽपि स्वभावान्यथात्वमस्तीत्याह।

---

1 Minaev, rakṣyate.—M. L³: rakṣyase. Tib. chags-par byed.

2 Minaev has : lokas tad gandhena.

**कायस्यास्य किमायातं सुगन्धि यदि चन्दनं ।**

कायस्य स्वभावदुर्गन्धस्य किमायातं। किं भूतं। न किंचित्। सुगन्धि यदि चन्दनं। शोभनो गन्धोऽस्येति बहुव्रीहि-समासान्तादित्[1]। तथापि न तस्य स्वभावप्रच्युतिरस्तीति भावः॥

अथ तद्गात्तस्मिन् कमनीयतामुपादायाभिरतिरुत्पद्यते। इत्यताह।

**अन्यदीयेन गन्धेन कस्मादन्यत्र रज्यते ॥ ६७**

एवं च न विचक्षणता स्यादि[107a]त्यर्थः॥ केशादिसंस्कार-द्वारेणाप्यनर्थहेतुरेवायं काय इति श्लोकद्वयेनोपदर्शयन्नाह।

**यदि केशनखैर्दीर्घैर्दन्तैः समलपाण्डुरैः[2]।**
**मलपङ्कधरो नग्नः कायः प्रकृतिभीषणः ॥ ६८**
**स किं संस्क्रियते यत्नादात्मघाताय शस्त्रवत्।**
**आत्मव्यामोहनोद्युक्तैरुन्मत्तैराकुला मही ॥ ६९**

दीर्घैः यथाजावस्थितैरच्छिन्नैरित्यर्थः। दन्तैर्दशनैः। समल-पाण्डुरैः दन्तधावनक्रमुकादिभिरसंस्कृतैः। मलपङ्कधरः। मल एव पङ्कः कर्दमः। तं धारयतीति तथा स्नानाभ्यञ्जनादि-विरहात्। नग्न इति वस्त्रविविक्तत्वात्। यथा जात इत्याद-

---

[1] See Pāṇini, 5.4. 135.
[2] Minaev has: pāṇḍaraiḥ; M. has: paṇḍaraiḥ.

स्थितः । [1] तथाभूतः सन् । यदि कायः प्रकृत्या भीषणः प्रेता-
नामिव स्वभावेन भयंकरः ॥

स एवंभूतः किमिति संस्क्रियते । यस्मादिति । केश-
नखादिरचनाविशेषैः । दन्तधावनताम्बूलादिभिः । स्नानाभ्यञ्ज-
5 नानुलेपनादिभिः । वस्त्रादिभिर्वा । किमिव । आत्मघाताय
शस्त्रवत् । आत्मनो वधार्थं खड्गादिर्यथा संस्क्रियते । तद्वत् ॥

इत्येषां मोहवशीकृतं विचेष्टितं परिदेवयन्नाह । आत्मे-
त्यादि । आत्मनैव संचिन्त्यात्मनो व्यामोहमुत्पादयितुं यत्नवद्भि-
रुन्मत्तैरस्वच्छचित्तैः । एवं च विपरीतकर्मानुष्ठानान्नैते वराकाः[2]
10 सचेतना इति खेदं करोति शास्त्रकारः । न चात्र कश्चिदात्मज्ञो
दृश्यत इत्युन्मत्तैराकुला समाकीर्णा मही पृथिवीति ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमनुबध्नन्नाह ।

**कङ्कालान् कतिचिद्दृष्ट्वा श्मशाने किल ते घृणा ।**
**ग्रामश्मशाने रमसे[3] चलत्कङ्कालसंकुले ॥ ७०**

15 शवानामस्थिपञ्जरान् । कतिचित् प्रतिनियतान् । एतदुक्तं
भवति । चर्मण्युत्पाटित[4] इत्यादिकमुक्त्वा यदुक्तं कथं शाला-
पीत्यादि । तत्र परस्योत्तरं । न श्मशानगतकलेवरसादृश्यमस्य

---

1 Ms. : yathā.

2 Ms. has : naite vakārāḥ. In margin : te varākāḥ.

3 L[3], M : ramate.

4 VIII. 64.

येन तस्मिन्नेवाद्यापि रतिर्न स्यात्। किं तर्हि श्मशाने तस्य घृणास्थानत्वात्। नाचेति। [107b][1] अथाभिधेयकङ्कालानित्यादि ग्रामश्मशान इति। नैवात्र कश्चिद्विशेषोऽस्ति। तदेव शरीरं श्मशाने घृणास्थानं ग्रामे वाऽभिरतिस्थानमिति काका ब्रूते[2]। नैतद्विचक्षणधियां[3] समायुक्तमिति भावः। चलत्कङ्कालसंकुल इत्यनेनैतद्दर्शयति। एतावांस्तु विशेषो न चानेन विशेषेणाशुचिस्वभावता घृणाहेतुर्निवर्तते येन प्रवृत्तिरियं स्यादिति। संकुल इति समाकीर्णे॥

भवतु नामेदृशमशुचिस्वभावमपि सूकराणामिवाभिरतिस्थानं। तथा चैवंविधमपि द्रविणविकलस्य नैतल्लभ्यमित्युपदर्शयन्नाह।

एवं चामेध्यमप्येतद्विना मूल्यं न लभ्यते[4]।
तदर्थमर्जनायासो नरकादिषु च व्यथा॥ ७१

विना मूल्यं द्रव्यमन्तरेण न लभ्यते न प्राप्यते। अतस्तदर्थिनां प्रथमतो धनमेवार्जनीयं। तदर्जनेनायासात्। कृषीवणिज्यसेवादिसमाश्रयेण परिश्रमादिनैव दुःखमुपजायते। अधर्मेण चोपार्जनान्नरकादिषु। इत्युभयलोकेऽनर्थहेतुरेव तदर्जनं।

---

1 Tib.: hdir brjod-par-bya-ba ni rus-goṅ zhes...

2 Tib.: hdri-ba = pṛcchati.

3 Ms. :-dhiyām samatāmapi yuktam. Tib.: mkhas-pai blo-can-gyis mñam-par rigs-so.

4 So L², M.; Minaev: labhyase.

नापि तत्सुखप्राप्तिरस्ति । दुःखेनैव तु केवलं तदर्जनमेवेति प्रति-
पादयन्नाह ।

**शिशोर्नार्जनसामर्थ्यं केनासौ यौवने सुखी ।**
**यात्यर्जनेन तारुण्यं वृद्धः कामैः करोति किं ॥ ७२**

5 बालावस्थावस्थितस्य न धनोपार्जनशक्तिरस्ति । बालत्वादेव । येन धनेन प्रकारेण वासौ बालो यौवने युवावस्थायां सुखी स्यात् । धनविकलत्वान्न कश्चिदित्यर्थः । यदपि कस्य चित्पि-तृपितामहोपार्जितधनेन यौवने सुखित्वं दृश्यते । तदपि प्रति-नियतस्यैव न सर्वस्य । न चापि पूर्वोक्तदुःखदयादिमुच्यतेऽसौ ।
10 अतो धनार्जनमुपादेयमादौ सुखसाधनोपायत्वात् । तदर्जयत एव गलितवयसो न कश्चिदुपयोगो वि[108a]षयैरिति ॥

अथापि स्यात् । तदर्जयतापि कामसुखमनुभूयत एवेत्य-त्राह ।

**के चिद्दिनान्तव्यापारैः परिश्रान्ताः कुकामिनः ।**
15 **गृहमागत्य सायाह्ने शेरते स्म मृता इव ॥ ७३**

के चित्कुत्सितकामाभिलाषचेतसः काष्ठतृणपत्राद्याहरणकृति-कर्मक्रियाकलापैर्दिनपर्यन्तव्यापारैः परिखिन्नकायमनसो निष्-सुकाः । अस्तंगते सवितरि स्वगृहमागत्य गाढनिद्राक्रान्तत्वात् मृतकल्पाः शेरते स्म स्वपन्ति । प्रभाते पुनरुत्थाय तत्रैव
20 नीचकर्मणि युज्यन्ते । अपरश्चोऽपि बालाहंकारेऽतीतार्थविष-

त्वात्[1]। एवमायुःसंस्कारान् ये त्विकुकामिनः क्षपयन्ति न च कामसुखास्वादमुपलभन्ते ॥

परसेवकानधिकृत्याह।

दण्डयात्राभिरपरे प्रवासक्लेशदुःखिताः।
वत्सरैरपि नेक्षन्ते पुत्रदारांस्तदर्थिनः[2] ॥ ७४ 5

अपरे पूर्वकेभ्योऽन्ये सुकामिनः सेवका इत्यर्थः। ते दण्डयात्रादिभिः। दण्डोऽपरचक्रविजयाय यात्रा प्रयाणं। पर्राष्ट्रद्रव्यग्रहणाय वा यात्रा। तदादिर्येषां देशान्तरप्रेषणादीनां। तैः प्रवासो देशान्तरगमनं। तेन क्लेशः परिश्रमः। तेन दुःखिताः पीडिताः। सर्वदा तथाभूता वत्सरैरपि। अनेकव- 10 र्षात्ययेऽपि। पुत्रान्दारांश्च नेक्षन्ते न पश्यन्ति। तदर्थिन इति तैः पुत्रदारादिभिरर्थिनस्तदभिलाषकाः। तदर्थमेव परसेवादिस्वीकारादित्यर्थः ॥

अहो वतामीषां निष्फलमनुष्ठानमिति प्रोषयन्नाह।

यदर्थमिव विक्रीत आत्मा कामविमोहितैः[3]।
तन्न प्राप्तं मुधैवायुर्नीतं[4] तु परकर्मणा ॥ ७५ 15

यदर्थं सुखप्रतिलम्भनिमित्तं। विक्रीतः पराधीनः कृत आत्मा

1 According to the Tib.: (Fol. 178 a1) atitârtha°; smaçabda = gyur cespai sgra.

2 Mss. putradârârthinas.

3 See Comm. and stanza FF.

4 Minaev: mudhair vâyur; M.: yunaivâyun°.

कामविडम्बितैः । तच्च प्राप्तं । तदिति सुखं न प्राप्तं । न प्रतिलब्धं । आयुःसंस्कारा एव हि केवलमनर्थकं परकर्मानुष्ठानेन क्षयमुपनीताः । न साधुकर्मणि क्वचिदपि योजिता इति भा[108b]वः ।

5 सुखलिप्सया प्रवृत्तानां प्रत्युत दुःखमेवापतितमेषामित्युपदर्शयन्नाह ।

**विक्रीतस्वात्मभावानां सदा प्रेषणकारिणां ।**
**प्रसूयन्ते स्त्रियोऽन्येषामटवीविटपादिषु ॥ ७६**

सुखबुभुक्षयाऽन्येषु विक्रीतः परायत्तीकृतः स्वात्मभावः 10 स्वकायो यैस्ते तथा । तेषामन्येषां सेवकानामित्यर्थः । अत एव सदा प्रेषणकरणशीलानां । अन्येषामपरेषां प्रभुप्रयोजनेन गच्छतां । मार्ग एव प्रसूयन्ते स्त्रियः । अटवीविटपादिषु । आदिशब्दात्पर्वतनितम्बनदीकूलादिषु कष्टस्थानेषु ॥

अयमपरो विपर्यासस्तेषामिति प्रतिपादयन्नाह ।

15 **रणं जीवितसंदेहं विशन्ति किल जीवितुं ।**
**मानार्थं दासतां यान्ति मूढाः कामविडम्बिताः ॥७७**

विक्रीतस्वात्मभावाः संग्रामं चतुरङ्गसंघट्टं[1] प्रविशन्ति । किंभूतं जीवितसंदेहं । तत्र प्रविष्टस्य जीवितं स्याद्वा न वेति जीवितस्य संदेहोऽस्मिन्निति कृत्वा । जीवितुमिति जीवनार्थं । 20 अर्थं प्रतिलभ्यैर्भिर्जीविकां कल्पयिष्याम इति मत्वेत्यर्थः ।

---

[1] New expression.

मानार्थं दासतां यान्ति । बलवता केन चिदभिभूताः कामा-
नोद्धरणार्थं[1] । अङ्गुलीच्छेदवेदनासहनेनैवाङ्गीकारात् । मूढा
मोहान्धीकृतविवेकचक्षुषः । के ते । कामविडम्बिताः कामाय
कामेन वा विडम्बितास्तिरस्कृताः ॥

इहैव जन्मनि कामासक्तचेतसां यद्दुःखं दृश्यते तत्कथयन्नाह । 5

छिद्यन्ते कामिनः[2] के चिदन्ये शूलसमर्पिताः ।
दृश्यन्ते दह्यमानाश्च हन्यमानाश्च शक्तिभिः ॥ ७८

परदारधनापहरणादेः । शेषः सुबोधः ॥ किं चायं सुख-
साधनत्वेनोपादीयमानोऽपि चानर्थपरंपराप्रसूतिहेतुरेवार्थः ।
इति कथयन्नाह । 10

अर्जनरक्षणनाशविषादैर्
अर्थमनर्थमनन्तमवेहि ।
व्यग्रतया धनसक्तमतीनां
नावसरो भवदुःखविमुक्तेः ॥ ७९

अर्जनमनुत्पन्नस्योत्पादनं दुःखं । उपार्जितस्यापि रक्षणं जला- 15
नलादिभ्यः[3] पञ्चप्रत्यवायेभ्यः परिपालनं कष्टतरं । तथा रक्षित-

---

1 Ms. manorddharaṇa—Tib. : raṅ-gi ṅa-rgyal dbyuṅ-bai-phyir (178b 6.)

2 So L³ M.—Minaev has : kāmena.

3 The original reading of the Ms. appears to be : pañcapratyayavāye-bhyaḥ ; by a second hand : pratyayāyebhyaḥ. Tib. (179 a 3) chus (?) za-bar-byed-pa lṅa-las.

[109ᵃ]चापि कर्म चित्तक्षरादिभिर्मांसादिविकारो दौर्बल्यं परितापहेतुरनर्थः । तदेवमनर्थपरंपरानिदानत्वात् कायस्ये[1] कार्योपचारादयं एवानर्थ उक्तः । इत्येवमनर्थनादिभिः सर्वदा व्याकुलत्वात् । धनार्जनक्लेशतश्च क्षणमपि समाधानावकाशालाभात् ।
5 नावसरः [2]संसाराद्गलजात्यादिदुःखनिर्मोक्षाय यद्वा तद्गतमन-विकारैरेवायुःसंस्काराणां क्षपणात् ॥

सर्वमेतदुपसंहृत्य कामासङ्गपरित्यागाय संवेगकथया प्रोत्सा-हयत्येवमित्यादिना ।

एवमादीनवो भूयानल्पास्वादस्तु कामिनां ।
10 शकटं वहतो[3] यद्वत्पशोर्घासलवग्रहः ॥ ८०

एवमित्युक्तप्रकारपरामर्शः । आदीनवोऽनर्थः । भूयाननेक-प्रकारः । न चात्र सुखोत्पादवार्त्ताप्यस्ति । यदपि विपर्या-सात्कथं चित्सुखमिति प्रतिभासते । तदपि न किं चित् । गुरुतरभाराक्रमणपरिक्लान्तवपुषः पशोरिव घासलवग्रासग्रहणं ॥

15 तस्यास्वादलवस्यार्थे यः पशोरप्यदुर्लभः ।
हता दैवहतेनेयं क्षणसंपत्सुदुर्लभा ॥ ८१

तस्यैवंभूतस्यातितुच्छस्य सुखास्वादलेशस्य पशोरपि साधा-

---

1 *M. Vyut.*
2 So Ms.—āçrta = āçrita = brtan-pa.
3 Minaev: çakatavahano yadvat...

इत्यस्यार्थे। तच्च गिलितं। इदं क्षणसंपत्। महार्थविनि-र्मुक्ता। यता विनाशिता। दुष्प्राप्तेत्यर्थः। किंचिन्मिता सुदुर्लभा व्याख्याता[1]। येन दैवहतेन। दैवं पुरातनं कर्म। तेन हता। हिताहितपरिज्ञाने विपर्यस्तमतिः अतो विमोहित इत्यर्थः। वस्तुतस्तु तिरस्कारवचनमेतत्। भाग्यविहीन एव-मुच्यते॥

अवश्यं गन्तुरित्यादिना श्लोकद्वयेन विपर्यासरूपतामेव प्रति-पादयति।

अवश्यं गन्तुरल्पस्य नरकादिप्रपातिनः
कायस्यार्थे कृतो योऽयं सर्वकालं परिश्रमः॥ ८२

अवश्यं गन्तुरित्यनित्यतयाऽस्थिरस्वभावस्य। अल्पस्य। [2]लोको-त्तरकायमपेक्ष्यातिदूरतरं निःसारस्य। नरकादिप्र[109b]पा-तिन इत्यपरमितदुःखभागिनः[3]। सुखोत्पादनेऽप्यसमर्थस्ये-त्यर्थः। कायस्यात्मशरीरस्यार्थे[4] सुखोत्पादनाय। योऽयं नर-कादिदुःखमविगणय्य कृतः सर्वकालं संसारस्य पूर्वस्यां[5] कोटौ परिश्रमः प्रयासः॥

---

1 See I. 4.

2 Tib = lokottaram apekṣya = hjig-rten bdas-pa-la bltos-nas.

3 Parimita (dpag-tu med-pa), of course, is correct; but the wrong writing is of frequent enough occurence to be kept into consideration.

4 Âtmaçarîra = raṅ-gi lus = svakâya.

5 Shar-byas-pai bye-bar (bye-ba = 10,000,000.)

ततः कोटिशतेनापि श्रमभागेन बुद्धता ।

ततस्तस्मात्परिश्रमात् । [कोटिशते]नापि परिश्रमभागेनांशेन बुद्धत्वं स्यात् । तदपेक्षयात्यल्पीयसा आयासबलेन बुद्धत्वं स्यात् । तथापि तदर्थं मन्दबुद्धयो नोत्सहन्त इत्यर्थः ॥ अथ बोधि-
5 चर्यां[या]मपि चरतोऽनेकदुष्करशतसमारम्भादतिशयबहुःखसद्-सद्भुत्पद्यत एवेत्यपाह ।

चर्यादुःखान्महद्दुःखं सा च बोधिर्न कामिनां ॥ ८३

चर्यादुःखमपेक्ष्येदमेव महद्दुःखं यत्कामार्थं चरतां संसारे तेषामवीच्यादिनरकपतनात् । पारतन्त्र्येण दीर्घकालमनुभव-
10 नाच्च । न तु बोधिसत्त्वानां प्रतिनियतकालं स्वेच्छया तदनु-भवतां । तदेवं दुःखमनुभवतामपि कामार्थं कामिनां सा च बोधिर्न भवति या बोधिसत्त्वानां परार्थं दुःखमनुभवता-मित्यर्थः ॥

पुनर्विशेषेण कामनिदानदुःखं प्रतिपादयन्नाह ।

15 न शस्त्रं न विषं नाग्निर्न प्रपातो न वैरिणः ।
कामानामुपमां[1] यान्ति नरकादिव्यथास्मृतेः ॥ ८४

अमी शस्त्रादयो दुःखजनकत्वेन प्रसिद्धा न सादृश्यं भजन्ते प्रति कामानां । कस्मात् । नरकादिदुर्गतिदुःखस्यागमात्प्रति-

---

[1] Minaev has: kāminām.

पञ्चत्व मरणात् । मरणेनासुखीकरणात् । शस्त्रादयो हि नियतकालं मरणमात्रदुःखदायकाः । कामास्तु दीर्घकालिकतीव्रनरकादिदुःखहेतव इति कीदृशी तैरेषामुपमा भवेत् ॥

तदेवं कायविवेकानन्तरं चित्तविवेकं प्रतिपाद्य प्रकृते योज[110a]यितुमाह । 5

एवमुद्विज्य कामेभ्यो विवेके जनयेद्रतिं ।

कामेभ्यो भयहेतुभ्यः । एवमुक्तक्रमेण उद्विज्य संत्रासं कृत्वा पूर्वोक्तविवेके रतिमभिरतिमुत्पादयेत् । क्व स्थित्वा । तत्राह ।

कलहायासशून्यासु शान्तासु[1] वनभूमिषु ॥ ८५

प्रतिद्वन्द्विनामभावात्कलहायासशून्यास्ताः । व्याडमृगचौरोपद्रवादिविरहाच्च रम्याः । तथानुशंसामाह । 10

धन्यैः शशाङ्ककरचन्दनशीतलेषु
रम्येषु हर्म्यविपुलेषु शिलातलेषु ।
निःशब्दसौम्यवनमारुतवीज्यमानैः
चंक्रम्यते परहिताय विचिन्त्यते च ॥ ८६

धन्यैः सुकृतिभिः । शशाङ्कस्य चन्द्रमसः कराः रश्मय एव शुक्लताशैत्यसाधर्म्याच्चन्दनानीव तैः । शीतलानि यानि शिला-

1 So Mss. and Tib. translation of the text (25 b3)—According to Commentary: ramyāsu.

तथापि तेषु चङ्क्रम्यत इति संबन्धः । किंविशिष्टेषु । प्रकृत्यैव शुचिपवित्रेषु कर्कशादिदोषरहितेषु च । हर्म्यविपुलेषु । भवन-तलवद्विस्तीर्णेषु । कीदृशैः सद्भिश्चङ्क्रम्यते । निःशब्दैः प्रतिकूल-शब्दविरहितैः । सौम्यैरनुत्कटैः सुखसंस्पर्शैरित्यर्थः । वनमारुतैः
5 वनपवनैः । वीज्यमानास्तैश्चङ्क्रम्यत इति परावृत्त्या[1] पुनः पुन-र्मन्दं भ्रम्यते । न केवलं चङ्क्रम्यते । किं तु परहिताय सत्त्वानां सुखोत्पादनाय विचिन्त्यते ॥ सर्वमेतदयत्नसिद्धं योगिनां । कामिनां तु प्रयत्नसाध्यं । तदनेनैश्वर्यसुखादिमिष्यते ॥

विवेकसुखमित्युपदर्शितं भवति ॥ इदमपरमसाधारणं सुखं
10 विवेकविहारिण इत्युपदर्शयन्नाह ।

विहृत्य यत्र क्व चिदिष्टकालं
शून्यालये वृक्षतले[2] गुहासु ।
परिग्रहरक्षणखेदमुक्तः
चरत्यपेक्षाविरतो यथेष्टं ॥ ८७

15 सुबोधं ॥ स्वच्छन्दचारीत्यादिना कथितमेवार्थं व्यक्ती-करोति ।

स्वच्छन्दचार्यनिलयः प्रतिबद्धो न कस्य चित् ।
यत्संतोषसुखं भुङ्क्ते तदिन्द्रस्यापि दुर्लभं ॥ ८८

---

1 P. W. has only the meaning *Wiederkehr* in the compound *aparāvṛtti*.
2 Minaev has *talaṃ*, but L², M: *tale*.

स्वात्मनः छन्दोऽभिलाषः । तेन चरितुं शीलमस्येति स्वेच्छाचारीत्यर्थः ॥

इति विवेकगुणानभिधाय प्रकृतमभिधित्सुराह[1] ।

**एवमादिभिराकारैर्विवेकगुणभावनात् ।**
**उपशान्तवितर्कः सन् बोधिचित्तं तु भावयेत् ॥ ८९[2]** 5

एवमिति पूर्वोक्तैः । आदिशब्दादन्यैरप्येवंविधैराकारैः । वि[110b]वेकस्य कायिकचैतसिकस्य गुणानां भावनात् । इति हि सर्वसुखसंपत्तिहेतुर्विवेक इति चेतसि पुनःपुनरामुखी-करणाद्धेतोः उपशान्तो वितर्कोऽसमञ्जसविकारो यस्य स तथा-भूतः सन् बोधिचित्तं तु भावयेत् । एवं परिशुद्धे चेतसि 10 भाव्यमानं बोधिचित्तं प्रकर्षपदमधिरोहतीति विशेषं तुशब्देन दर्शयति ॥

तत्र यावदेकत्वं परेषु नात्मना क्रियते न तावत्परहित-सुखाय सम्यक् चित्तं घटति[3] । आत्मपरयोरात्मन्येव विशेषेण प्रवृत्तेः । अतोऽस्य निवृत्तये । 15

**परात्मसमतामादौ भावयेदेवमादरात् ।**

आदौ प्रथमतः । पश्चात्परात्मपरिवर्तनमिति भावः[4] ।

---

1 Abhidhitsu, not in P. W.
2 Compare this line and the following one (90 a) with *Çikṣās.*, 357-16,
3 So Ms.
4 Parâtmasamatâ, VIII 90-113; parâtmaparivartana, VIII 112.

एवमिति वक्ष्यमाणनीत्या । आदरादिति महताभिनिवेशेन ॥
तथा[1] एवाकारं दर्शयति ।

समदुःखसुखाः सर्वे पालनीया मयात्मवत् ॥ ९०

मत्तो नामीषां कश्चिद्विशेषो ऽस्ति । अतो यथा मम दुःखं
5 बाधकं तथैषामपि । यथा मम सुखमनुग्राहकं तथैषामपि ।
इति तुल्यदुःखसुखाः सर्वे प्राणिनो भवन्ति । तस्मात्पालनीया
मयात्मवत् । यथात्मा दुःखादुःखहेतोर्वा समुद्धियते । तथान्येऽपि
सत्त्वाः समुद्धरणीयाः । यथात्मा सर्वथा सुखीकर्तुमिष्यते
तथान्येऽपीति परिपालनीया आत्मवत् ॥

10 ननु कथमात्मनानेकप्रकारगतिभेदभिन्नानां सत्त्वानामेकत्वं
येत्स्यति । अभिन्नदुःखसुखस्वभावत्वं च कथं । इत्यत्राह ।

हस्तादिभेदेन बहुप्रकारः
कायो यथैकः परिपालनीयः ।
तथा जगद्भिन्नमभिन्नदुःख[2]-
15 सुखात्मकं सर्वमिदं तथैव ॥ ९१

करचरणशिरःप्रभृतिभेदादनेकप्रकारः कायो यथैकत्वेना-
ध्यवसितः परिपालनीयो भवति दुःखनिवर्तनात्सुखोपधानाच्च ।

---

1 Parātmasamatāyāḥ.
2 Minaev has: °duḥkhaṁ.

तथा जगत्सत्त्वलोकः[1]। [2]अभि[111a]न्नैकत्वेनाध्यवसितमात्मनः परिपालनीयं भवति। अभिन्नदुःखसुखात्मकं च तुल्यप्रकारो निर्देशः। तथैव हस्तादिभेदवदेव सर्वमिदमिति बहुप्रकारगतिभेदभिन्नमपि।

अयमभिप्रायो। यथाभ्यासादेकत्वाध्यवसायोऽस्मिन् काये 5 एकत्वमन्तरेणापि। तथानेकप्रकारे जगत्यपीति न कश्चिद्विशेषः॥

स्यादेतत्। यदि भवता सह जगदेकस्वभावं तदा कथमिव भवतो दुःखमन्यसन्तानेषु न बाधकं स्यात्। एवं विपर्ययेऽपि योज्यमित्याशङ्क्याह।

यद्यप्यन्येषु देहेषु मद्दुःखं न प्रबाधते। 10
तथापि तद्दुःखमेव[3] ममात्मस्नेहदुःसहं॥ ९२

अन्येष्वपरेषु शरीरेषु मम दुःखं यदि नाम प्रबाधकं न भवति। तथापि तद्दुःखमेव मम[4]। कुतः। आत्मनि स्नेहेन दुःसहं [सोढु]मशक्यं। हेतुपदमेतत्। अंशेन प्रवृत्तावपि दुःखस्वभावतां न मुञ्चतीत्यर्थः। एवं विपर्ययोऽपि व्याख्येयः॥ 15

तथा यद्यप्यसंवेद्यमन्यद्दुःखं मयात्मना।[5]
तथापि तस्य तद्दुःखमात्मस्नेहेन दुःसहं॥ ९३

---

1 Sattvaloka opposed to the bhājanaloka.

2 So Ms. and Tib.

3 L[3] has the scholion: tasya duḥkham (tad duḥkham = tan mama duḥkham) —Tib. unaccurately: de-lta-aṅ de-dag sdug-bsṅal de bdag-tu zhen-pas mi bzod-ñid.

4 Sdug-bsṅal de-ñid bdag-gi yin-no (182a 3).

5 This line, in the Tib. (25 b7) = the second line of 92, but for the last words: bzod-par-dka.

अतः स्वपरविशेषमपास्य दुःखस्वभावतैव निवर्तनहेतुः । अत आह ।

**मयान्यदुःखं हन्तव्यं दुःखत्वादात्मदुःखवत् ।**

यद्दुःखं तत्तन्मया हन्तव्यं । यथात्मदुःखं । दुःखं चेदमन्यसत्त्वदुःखमिति स्वभावहेतुप्रयोगः । दुःखस्वभावतामात्रभाविनी हन्तव्यता[1] । न चासिद्धता हेतोः । अविशेषेण दुःखस्वभावतायाः प्रसाधितत्वात् । न चाप्यनैकान्तिकता । आत्मदुःखस्यापि हन्तव्यता न स्यादविशेषादिति विपर्ययबाधकं । विरुद्धताप्यत एव न स्यात् ॥

तथायमपरः प्रयोगः ।

**अनुग्राह्या मयान्येऽपि सत्त्वत्वादात्मसत्त्ववत् ॥ ९४**

ये सत्त्वास्ते सर्वे मयानुग्राह्या यथात्मसत्त्वः । सत्त्वाश्चान्येऽपि प्राणिन इति स्वभावहेतुरेव । सत्त्वात्मकतामात्रभाविन्यनुग्राह्यस्वभावता च । अयमपि नासिद्धः सत्त्वात्मकता[111b]याः पक्षे प्रसिद्धत्वात् । आत्मनो ऽनुग्राह्यताऽभावप्रसङ्गेनानैकान्तिकोऽपि न स्यात् । पूर्ववच्च विरुद्धः ॥

नन्वस्ति विशेषोऽन्यस्मादात्मनि सुखाभिनिवेशो नाम । तथा ततोऽयमनैकान्तिको हेतुरिति । अत आह ।

**यदा मम परेषां च तुल्यमेव सुखं प्रियं ।**
**तदात्मनः को विशेषो येनात्रैव सुखोद्यमः ॥ ९५**

---

1 See *Nyāyabindu* p. 104-14.

तुल्यमेव सममेव सुखं प्रियमिष्टं । तदात्मनः परस्मात्को विशेषो । नैव कश्चित् । येन तथैवात्मन्येव सुखोत्पादनाय तात्पर्यं न परस्मिन्नित्यर्थः ॥

प्रथमे हेतावनैकान्तिकतां परिहरन्नाह ।

**यदा मम परेषां च भयं दुःखं च न प्रियं । 5**
**तदात्मनः को विशेषो यत्तं रक्षामि नेतरं ॥ ९६[1]**

भयमिति दुःखहेतुः । नेतरमिति नान्यं ॥

स्यादेतत् । यदि नाम दुःखात्मकता न विशिष्यते तथापि यस्य दुःखेन बाधा स्यात् स एव रक्षितुमुचितो नान्य[2] इत्याह ।

**तद्दुःखेन न मे बाधेत्यतो यदि न रक्ष्यते । 10**
**नागामिकायदुःखान्मे बाधा तत्केन रक्ष्यते ॥ ९७[3]**

तस्य परस्य दुःखेन मम बाधा पीड़ा नास्तीत्यतोऽस्मा-त्कारणाद्यदि न रक्ष्यतेऽन्यः । तदाऽपरमिदं व्याहतं स्यात् । यतो नागामिनः कायस्य परलोकभाविनो नरकादिजातस्य दुःखात्मकस्य [दुःखान्मे] तस्योपात्तस्य[4] कायस्य काचिद्बाधा 15

---

1 First kārikā of the Çikṣāsamuccaya, see Çi. p. 2, l. 10 and Additional Notes (quoted supra ad III 21, p. 87).

2 Ms.....syāt sādhava rakṣitum ucitā nānyā iti.

3 = *Çikṣās*, 358, 3-4 varia lectio: rakṣasi—So L⁹.

4 Ms. first hand: duḥkhātmi ityasyopāttasya; second hand: duḥkhātmakasyopāttasya—Tib. (fol. 182-b7) does not support my conjecture: sdug-bsṅal-gyi bdag-ñid (?) hdir skyes-pai lus po hdi-la cuṅ-zad kyaṅ gnod-par mi ḥgyur-ro; sdug-bshal-gyi bdag-ñid (?) hdir skyes-pai lus po hdi-la cuṅ-zad kyaṅ gnod-par mi arid-do (duḥkhātmakasya tasya ihajātasya kāyasya).

संभवति[1] तस्यान्यत्वात् । इति[2] लोकोक्तौ तस्मादर्थे वा । यत
एवं तस्मात्केनाभिप्रायेणासौ रक्ष्यते । काय इति प्रकृतत्वात् ।
पापान्निवर्तनात् कुशले प्रवर्तनाच्च ॥

अथापि स्यात् । अहमेक एव सर्वदा । तेनात्र भिन्नत्वं
5 नास्ति शरीरयोः । नायं दोष इत्यथाह ।

**अहमेव तदापीति मिथ्येयं परिकल्पना ।**

आत्मनो निराकरिष्यमाणत्वात् । निरस्तत्वाच्च लेशतः[3] ।
तत्कोऽयमहंप्रत्ययस्य विषयो[4] भविष्यति । तस्मादहंप्रत्ययविष-
यस्य कस्य चिदेकस्याभावात् । मिथ्येयं परिकल्पनाऽध्यवसायः ।
अहमेव तदापी[112a]ति भवान्तरेऽपि । मायोपमपञ्चोपा-
10 दानस्कन्धमात्रालम्बनत्वादस्य । इतीदमप्यध्यवसायवशादुच्यते ।
न तु पुनरस्य वस्तुतः किं चिदालम्बनमस्ति । विकल्पा-
त्मकत्वात् ॥ कुतः पुनरियं मिथ्याकल्पनेत्याह ।

**अन्य एव मृतो यस्मादन्य एव प्रजायते ॥ ९८[5]**

यदा आत्मादिः कश्चिदेकः परलोकगामी संभवति ।
15 स्कन्धमात्रमेव केवलं । तदा न खलु यदेव स्कन्धपञ्चक-
मिह विनश्यति तदेव पुनरप्युत्पद्यते परलोके । अपि तु ।

---

1 Ms. kā cid bādhā *na* saṁbhavati.
2 Tib.: de zhes-pa ni = tad iti.
3 So Ms. = cuṅ-zad bkag-pai yaṅ phyir.
4 Ms.: viçeṣa; Tib.: yul.
5 *Çikṣās*, 358, 5-9 (anyas tatra prajāyate.)

अपूर्वमेव[1] पूर्वनिवृत्तौ तथेदंप्रत्ययताविशिष्टं क्लेशकर्माभिसंस्कृत-
मन्तराभवसंतत्या[2] समुत्पद्यते। तस्मादनादिसंसारप्रवृत्तवितथ-
विकल्पाभ्यासवासनावशादहंप्रत्ययो वितथ एवोपजायते॥

किं च। इदमपरं तत्र बाधकमिति। आह।

यदि यस्यैव यद्दुःखं[3] रक्ष्यं तस्यैव तन्मतं। 5
पाददुःखं न हस्तस्य कस्मात्तत्तेन रक्ष्यते॥ ९९

आस्तां तावद्यदागमिकायदुःखरक्षार्थं न यतितव्यं। इहै-
कस्मिन्नपि काये प्रत्यङ्गभेदाद्भिन्नं दुःखं। ततो यद्यन्यदुःख-
मन्यस्य रक्षितुं न युज्यते। तदा कथं पादादौ प्रहारं पतन्तं
दृष्ट्वा हस्तं प्रसार्य रक्ष्यते। अन्यत्राविशेषाच्च युक्तमेतदित्यर्थः॥ 10
अथ।

अयुक्तमपि चेदेतदहंकारात्प्रवर्तते।
यदयुक्तं निवर्त्यं तत्स्वमन्यच्च[4] यथाबलं॥ १००[5]

अहंकारोऽस्मिन् कायेऽहमित्यात्मग्रहादात्मनोऽभावेऽपि।
प्रवर्तते। जायते पादादौ रक्षणमनसिकारः[6]। नैतत्साधु। यतो 15
यदयुक्तं। युक्त्या संगतं न भवति। तन्निवर्त्यमपनेयं स्वकीयं

1 Tibetan translates the word apūrva in the middle of the compound antarābhava⁰ (bar-ma-doi srid-pa sñar med-pa rgyud).

2 Antarābhavasaṃtati, see Journal Asiatique, 1902, II, p. 295.

3 So L³.—Minaev has tad duḥkham.

4 So Minaev.—L³ and Çikṣās.: anyadvā.

5 See Çikṣās, 360-3; the second pāda being: svātmany astitaratra na.

6 Ms. has: rakṣasi manasikāraḥ.

परकीयं च यथाबलं यथासामर्थ्यं। शक्तिवैकल्यादेव तदुपे-[f]क्षणमुचितमिति भावः॥

स्यादेतत्। यदि नामात्मादिर्नास्ति तथापि संतानो[1] नामैकः संभवति। तथा बहूनां करच[112b]रणादीनां समु-
5 दायः शरीरमेकं। तदेतद्द्वयं यथासंभवमिहलोके परलोके चात्मदुःखापहरणादेर्नियामकं भविष्यति॥ ततोऽयमविशेषादि-त्यसिद्धो हेतुः। पूर्वकस्यानैकान्तिक इत्याशङ्क्याह।

**संतानः समुदायश्च पङ्क्तिसेनादिवन्मृषा।[2]**
**यस्य दुःखं स नास्त्यस्मात्कस्य तत्स्वं भविष्यति॥१०१**

10 संतानो नाम न कश्चिदेकः परमार्थसन् संभवति। किं तर्हि कार्यकारणभावप्रवृत्तक्षणपरंपराप्रवाहरूप एवायं। ततो व्यतिरिक्तस्यानुपलम्भात्। तस्मादेतेषामेव क्षणानामेकपदेन प्रतिपादनाय संकेतः कृतो बुद्धैर्व्यवहारार्थं संतान इति। इति प्रज्ञप्तिसन्नेवायं[3]। तेनात्राभिनिवेशो न कार्यः। अन्यथात्मना
15 किमपराद्धं येनासौ न स्वीक्रियते। एवं समुदायोऽपि[4] न समुदायिभ्यो वस्तुसन्नेको विद्यते। तस्य तेभ्यः पृथगनुपलब्धेः। तस्यान्यत्वविकल्पस्वभावयविविचारेणैव गत इति नेह प्रतार्यते। ततश्चायमपि संवृतिसन्नेव पूर्ववत्॥

---

1 See Journal Asiatique, loc. cit.
2 = Çikṣās. 359, 14.
3 Prajñaptisat, see *Madhyamakavṛtti* (Bibl. Buddhica) p. 28, n. 1.
4 Ms.: samudāye'pi.

अनयोर्यथासंख्यमुदाहरणमाह । पङ्क्तिसेनादिवदिति[1] । पङ्क्तिस्संतानः । सेनादिस्समुदायः । आदिशब्दाद्ग्रामवनादयो गृह्यन्ते । यथानेकेषां पिपीलिकादीनां पूर्वापरभावेन अवस्थितानां स्वरूपमन्तरेण पङ्क्तिर्नास्ति वस्तुरूपवदेका । यदा[2] च हस्त्यश्वपदातिप्रभृतिभ्यो मिलितेभ्यो व्यतिरिक्ता नान्या सेना का चिदेका तत्त्वास्ति । तथा समुदायोऽपि । एतच्चान्यत्र विस्तरेण विचारितमिति नेह विचार्यते[3] । [4]तस्माद्वस्तुसदात्मनाभावान्मृषायं प्रत्ययः[5] । अपार्थो वा । विचारासहत्वात् ॥

एवमात्मादेः स्वामिनः कस्य चिदभावाद्यस्य संबन्धि दुः[113a]खं स नास्ति । अतः कस्य तद्दुःखं स्वात्मीयं भविष्यति । नैव कस्य चिदित्यर्थः ॥

ननु यद्यात्मादिर्नास्ति तदा कथमयं दृष्टान्तो भविष्यति । आत्मवदिति[6] । आत्मसत्त्ववदिति च ॥ सत्यमेतत् । किं तु नेदं व्यवस्थितया[7] साधनमभिधीयते । किं तर्हि परस्यात्मग्रहाभिनिवेशनिवारणाय । तद्यदि परस्य निवृत्त एवात्मग्रहाभिनिवेशः । तदा न किं चित्प्रयोजनमनुमानप्रयोगस्य । अथ न निवृत्तः तदा तदभिप्रायेणैव स्वपरविभागं कृत्वा तत्प्रत्यायनार्थं[8]

1 See Journal Asiatique, loc. cit. p. 287, n. 1.
2 gaṅ-gi-tshe (fol. 184 a 7)
3 See IX. 73.
4 dei-phyir...rtag-tu dṅos-par... = nityavastu-ālambana.
5 So Tib.: çes-pa hdi ni.
6 See VIII, 90-94.
7 So Ms. and Tib. (phoṅs-pai sgo-nas).
8 See *M. Vyut.* 245 (742).

साधनं दृष्टान्तश्चोच्यते। इति न दृष्टान्तस्यासिद्धिर्व्यवहारप्रवर्तनाय[1]। किं चेदमुपात्तपञ्चस्कन्धमात्रमभिसंधाय[2] दृष्टान्ते दीयमाने[3] न काचित्क्षतिः। अत्रैवात्मशब्दस्य प्रवृत्तेरिति॥

इदानीं प्रकृतमुपसंहरन्नाह।

5 अस्वामिकानि दुःखानि सर्वाण्येवाविशेषतः।
दुःखत्वादेव वार्याणि नियमस्तत्र किंकृतः॥ १०२

न विद्यन्ते स्वामिनो येषामुपक्रमेणेति विग्रहः। अममानि न कस्यचित्प्रतिबद्धानीत्यर्थः। कुतः[4]। किं कानिचिदेव। न। सर्वाण्येवाविशेषतः। न हि कस्यचित्कश्चित्स्वामित्वमस्ति। विशेषा-
10 भावात्। दुःखत्वादेव स्वपर[ा]विभागं कृत्वा वार्याणि निषेध्यानि भवन्ति। नान्यन्निमित्तमस्ति तथात्मीयत्वादि। तेनायं नियमः किंकृतः। केन विशेषेण कृतः। येन स्वकीयानि च वार्याणि न परकीयाणीति। एवं दुःखत्वादिति हेतुरनैकान्तिको न भवतीति समर्थितं॥

15 ननु यदि दुःखी नाम न कश्चित्संसारे संभवति। तर्हि दुःखमनिवार्यमेव स्यात्। कृपापात्रस्य दुःखिनः कस्यचिद्भावादित्याशङ्क्याह।

---

1 tha-sñad-la hjug-par-bya-bai don yin-pas so = °pravartanârthatvât.

2 upâtta = zin-pa.

3 = mdzad-pa.

4 So Ms.—Wanting in Tib. (184 b7).

दुःखं कस्मान्निवार्यं चेत्सर्वेषामविवादतः।
वार्यं चेत्सर्वमप्येवं न चेदात्मनि सर्ववत्[1] ॥ १०३

न[2] वा[ 113b ]र्यमेव नैरात्मकत्वादेव यदि मन्यसे तदा न युक्तमेतत्। कुतः। सर्वेषामविवादादविप्रतिपत्तेः। चार्वाकस्यापि स्वदुःखपरिहारेणैवेह प्रवृत्तेः। न च तेषामात्मनोऽभ्युपगमाद्दोषः। तत्स्वभावस्यानुपलब्धेः। न चाभ्युपगममात्रेण तस्य सत्ता भविष्यति। तत्साधकप्रमाणाभावात्। बाधकस्य चानेकप्रकारस्याभिधानात् ॥ एवं सति यदि वार्यं दुःखं तदा सर्वं वार्यं। न चेत्सर्वं वार्यं तदात्मापि[3]। उपात्त[पञ्च]स्कन्धस्वभावमपि दुःखं न वार्यं। [4]सर्ववदविशेषादित्युपसंहारः ॥

स्यादेतत्। करुणापरतन्त्रतया परदुःखदुःखिनः सर्वदुःखापहरणाय यत्नः। तद्वरं बहुदुःखनिदानं सैव[5] प्रथमतो नोत्पादयितुं युज्यत इति परवचनावकाशं पश्यन्नाह।

कृपया बहु दुःखं चेत्कस्मादुत्पद्यते बलात्।

बलादिति प्रयत्नात्। अत्रोत्तरमाह।

जगद्दुःखं निरूप्येदं कृपादुःखं कथं बहु[6] ॥ १०४

---

1 So Mss.—de min bdag kyaṅ sems-can bzhin = *na ced ātmāpi sattvavat.*—See the commentary.

2 Ms.: na kāryam.

3 bdag-ñid kyaṅ (185a 7).

4 sarvavad = thams-cad bzhin-du.

5 saiva = karuṇāparatantratā.

6 = *Çikṣās.* 360, 5.





जगतो दुःखं नरकादिकृतमनेकप्रकारं समीक्ष्य । इदं कृपा-कृतं दुःखं कथं बहु । नेदं बहु कृपादुःखमिति भावः ॥

किं चापरमिदमयोत्तरमित्याह ।

बहूनामेकदुःखेन यदि दुःखं विगच्छति ।
5 उत्पाद्यमेव तद्दुःखं सदयेन परात्मनोः ॥ १०५[1]

एकस्य पुरुषस्य दुःखेन बहूनां सत्त्वानां यदि दुःखं विग-च्छति निवर्तते । तदा उत्पाद्यमेव जनयितव्यमेतत्ताद्दृशं दुःखं । सदयेन कृपात्मकेन परस्यात्मनश्च ॥

[2]उत्सूत्रतामस्य परिहरन्नाह ।

10 अतः सुपुष्पचन्द्रेण जानतापि नृपापदं ।
आत्मदुःखं न निहतं बहूनां दुःखिनां व्ययात् ॥ १०६

यत एवोत्पाद्यमेव तद्दुःखं कृपालुणा स्वपरात्मनोः । अत एव सुपुष्पचन्द्रेण बोधिसत्त्वेन नृपादापदं । नृपस्य वा राज्ञ आपदं । जानतापि बुध्यमानेनापि । आत्मदुःखं न निहतं न 15 निवर्तितं [114a] उपेक्षितमिति यावत् । तथा राज्ञोऽपि परलोकदुःखं । किमिति बहूनां दुःखिनां व्ययात् । दुःखक्षयेति

---

[1] See Çikṣās. 281, 4: varaṁ khalu punar aham eko duḥkhitaḥ syāṁ na ceme sarvasatvā apāyabhūmiprapatitāḥ.

[2] utsūtra, Nyāyavārttikatātparyaṭīkā, 481. 7.—Abstract is new. Tib.: brtags-pa-ni ma yin-no zhes...

मकलं बह्वन्तया संवध्यते[1]। यदुक्तं सुपुष्पचन्द्रस्येतिवृत्तके[2]। तथा हि। अतीतेऽध्वनि रत्नपद्मचन्द्रविशुद्धाभ्युद्गतराजो नाम तथागतोऽभूत्। स भगवान् बुद्धकृत्यं कृत्वा चिरतरकालमव-स्थाय परिनिर्वृतः। तस्मिंश्च परिनिर्वृते शासनान्तर्धानसमये राजा शूरदत्तो[3] नाम बभूव। तस्य रत्नावती नाम राजधानी। 5 तस्मिन् काले दृष्टिविपन्नाः सत्त्वाः[4]। तेषामनुकम्पार्थं बहवो बोधिसत्त्वा उत्पन्नाः प्रव्रजिताः। ते च ततो राष्ट्रजनपदेभ्यो निर्वासिताः। समन्तभद्रं नामारण्यवनखण्डमुपसृत्य विहरन्ति स्म सार्धं सुपुष्पचन्द्रेण धर्मभाणकेन। अथ खलु सुपुष्पचन्द्रस्य बोधिसत्त्वस्य सत्त्वान् करुणायमानस्य रहोगतस्य चेतसि वितर्क 10 उदपादि। यन्न्वहं जनपदराष्ट्रराजधानीर्गत्वा सत्त्वान् कुमार्ग-प्रपन्नान् कल्याणे वर्त्मनि प्रतिष्ठापयामि। स तमर्थं सब्रह्म-चारिभ्यो निवेदयामास। तैर्निवार्यमाणोऽपि स्वयं च व्यापदं प्रतिपद्यमानस्तस्य राज्ञोऽपि ततो वनखण्डान्निर्जगाम। स क्रमेण धर्मं देशयन् तस्य राज्ञो राजधानीमनुप्राप्तो बहून् सत्त्वान् 15 राजपुत्रामात्यपुरोहितप्रभृतीन्प्रकारं[5] विनीय सत्पथे व्यवस्थाप-

---

1 = bahūnāṁ duḥkhasya vyayāt. The fourth pāda of the stanza is translated in Tib. (26a 7): maṅ-poi sdug-bsṅal zad-hgyur-phyir = bahuduḥkhasya vyayārtham, or bahūnāṁ duḥkhavyayārtham.

2 See Rājendralāl Mitra (*Buddhist Literature of Nepal*, p. 217) on *Samādhi-rāja*. (Ch. xxxii) and Cowell's Cat. of Hodgson Coll., J.R.A.S. n. ser. viii. p. 6 (Ch. xxxv, Supuṣpa°).

3 Rājendralāl Mitra has: Suradatta; but Tib. = dpa-byin.

4 blta-ba-log-par gyur.

5 So Ms.—Tib.: ji-ltar hdul-bar thabs-rnams-pa du-mas: yathāvinayaṁ bahūpāyaiḥ...

वन् । तेन राज्ञा राजमार्गे दृष्टः । तद्दर्शनेन प्रहृष्टः सर्वं च
जनकायं तदावर्जितं प्रतिपद्य ईर्ष्यादूषितहृदयः । तद्वधार्थं
वधपुरुषानाज्ञापयामास । तांश्च तद्वधविमुखान् प्र[114b]तिपद्य
वधिकं वध्यघातकमाज्ञापयामास । तेन तदाज्ञामनुवर्तमानेन
5 करचरणादिच्छेदक्रमेणाजीवोऽपि च संदंशिकेनोद्धृत्य[1] जीविताद्व्यप-
रोपितः । अथ तस्य भिक्षो राजमार्गगतस्य जीविताद्व्यपरोपि-
तस्य शरीरेऽनेकान्यद्भुतानि बभूवुः । तानि प्रतिपद्य स राजा
निश्चितं बोधिसत्त्व एवायं भिक्षुरिति परितापगतो बहुतरं
परिदेवते स्म । इति सुपुष्पचन्द्रस्येतिवृत्तकं संक्षिप्य कथितं ।
10 विस्तरेण पुनः समाधिराजसूत्रे निर्दिष्टमिति तत्रैवावधार्यं ॥

न चापि कृपावतां परदुःखदुःखिनां महदपि दुःखं
बाधकमिति प्रतिपादयन्नाह ।

एवं भावितसंतानाः परदुःखसमप्रियाः ।
अवीचिमवगाहन्ते हंसाः पद्मवनं यथा ॥ १०७[2]

15 एवं परात्मसमतया भावितसंतानाः । अनाभोगप्रवृत्त-
चित्तसंततयः । परदुःखेन समं तुल्यं प्रियं सुखहेतुर्येषां ते
तथा[3] । आत्मसुखमपि परदुःखेन दुःखमेव येषामित्यर्थः ।

---

1 See St. Pet. W. (saṁdaṁçikā).

2 = Çikṣās. 360, 9.—Prof. Bendall refers to Kāraṇḍavyūha, Ch. II. on which see Cowell, J. of Philology, 1876, n. 12.—Tib. (second pāda) gshan-gyi sdug-bshal zhi dga-bas. [= Çamapriyāḥ.]

3 = gshan-gyi sdug-bshal zhi-zhin ñams-dga-ba ste bde-baí rgyu... = paraduḥkhaṁ çamayitvā prītiḥ sukhahetur.

तेऽवीचिमवगाहन्ते परदुःखसमुद्धरणाय तद्दुःखं सुखमेव मन्य-
मानाः। इदमेवाह। हंसाः पद्मवनं यथा। आवीचिकमपि दुःखं
सुखमेव परार्थं येषां ते केन दुःखहेतुनान्येन दुःखिनो भवि-
ष्यन्ति॥

अपि च सुखमपि तेषामसाधारणमेवोपजायते परसुखेन। 5
इत्युपदर्शयन्नाह।

मुच्यमानेषु सत्त्वेषु ये ते प्रामोद्यसागराः।
तैरेव ननु पर्याप्तं[1] मोक्षेणारसिकेन किं॥ १०८[2]

दुःखबन्धनादिसंमुच्यमानेषु सत्त्वेषु सत्सु। ये ते इति।
तेषामेवानुभवसिद्धत्वादिदंतया कथयितुमशक्याः। अत एव 10
प्रामोद्यसागराः संतुष्टिसमुद्राः कृपावतां संतानेषु प्रादुर्भवन्ति।
तैरेव प्रामोद्यसागरैः। पर्याप्तं तदन्यसुखवैमुख्यात् परि-
समाप्तं [115a][3] + + + + + + + + + + + +

---

1 So L³ and Commentary (= Tib. thob-pa).—Minaev has: paryantam.

2 = Çikṣās. 360, 9: sattveṣu mucyamāneṣu...mokṣeṇāpy arasena kim.

3 The leaves containing the last part of the Commentary of the eighth chapter are lost—See the Appendix.

# प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां
# प्रज्ञापारमिता नवमः परिच्छेदः[1] ।



ओं लोकपालाय नमः । ओं लोकेशाय नमः ॥[2]

या[3] निर्लेपतया निरुत्तरपदं[4] सर्वप्रपञ्चोज्झिता[5]
[6]प्रज्ञापारमितादिसंस्तुतिपदैराख्यायतेऽनास्रवा ।
यां सम्यक् प्रतिपद्य निर्मलधियो यान्त्युत्तमां निर्वृतिं
5 तां नत्वा विधिवत्करोमि विवृतिं तस्याः प्रसन्नैः पदैः ॥[7]
यथाचार्यो गुणनिधिरसौ शान्तिदेवः प्रकाशं[8]
वक्तुं शक्तः प्रवचनमहाम्भोधिपारं प्रयातः ।

---

1 This part of the Commentary has been published by myself in Roman characters in my *Bouddhisme, Études et Matériaux*, (Bruxelles, Académie and London, Luzac 1898).

2 The first lines of this chapter down to the folio 129A (infra p. 343, l. 13) from a modern copy of the Maithil MS.—The invocation: *oṁ lokapālāya namaḥ, oṁ lokeçāya namaḥ*, is wanting in the Tibetan translation (fol. 205 b3) where we read: hphags-pa hjam-dpal gzhon-nur gyur-pa-la phyag-htsal-lo = *Mañjuçriye Kumārabhūtāya namaḥ*.

3 Tib. *gaṅ-dag* = ye; to be read: *gaṅ-zhig*, as in the third pāda.

4 Tib. *go-hphaṅ ldan* = niruttarapadavatī.

5 Ms. prapañcocchritā = spros-pa kun spaṅs.

6 According to the Tib. *prajñādipāramitā*.

7 Metre: Çārdūlavikrīḍita—The *pādas* are respectively rendered, in Tib. translation, by lines of 15, 17, 17, 19 syllables.

8 Ms. çāntidevaprakāço.

किं तस्यार्थे हतमतिरहं वक्तुमीशस्तथापि
प्रज्ञाभ्यासात्सुकृतमसमं[1] यत्ततोऽस्मि प्रवृत्तः ॥[2]
न नाम काचिद्गुणलेशवासना
मतेर्न मेऽस्ति प्रतिभागुणोऽर्जितः ।[3]
तथापि सज्जननिषेवणाफलं[4] 5
यदेव मे तादृशि वाक् प्रसर्पति ॥

अथ यो नाम कश्चिद्गोत्रविशेषात्[5] पर्युपासितकल्याणमित्र-
तया त्रिजगत्पर्यापन्नसमस्तजनदुःखदुःखी सर्वप्राणभृतां निःशेष-
दुःखसमुद्धरणाशयः स्वसुखनिरपेक्षः[6] तत्प्रशमोपायभूतं बुद्धत्व-
मेव मन्यमानस्तत्प्राप्तिवाञ्छया समुत्पादितबोधिचित्तो[7] महात्मा 10
[8]सौगतपदसाधनोपायभूतसंभारद्वयपरिपूरणार्थं क्रमेण दाना-
दिषु प्रवर्तते । तस्य तथा प्रवर्तमानस्य [9]सम्यक् प्रति[--]शम-
थस्या[129a]पि[10] दानादयः प्रज्ञाविकलतया जगदर्थसंपादन-
निदानं बुद्धत्वं नावहन्तीत्यभिसंधाय । अवश्यं संसारदुःखनिर्मो-
क्षार्थिना प्रज्ञोत्पादनाय यतितव्यं । यथोक्तं । 15

---

1 Ms. °svakṛtam.
2 Metre: Mandākrāntā.
3 Ms. matir mamāsti pratibhāguṇorjitā.—Tib. *bdag-la spobs-pai yon-tan bsags-pa yod-pa ma-yin-la.*
4 Forms like niṣevaṇā are common.
5 Tib. *rigs-kyi khyad-par hga-las* = kaç cit kasmāc cid gotra.°
6 According to the Tib. *duḥkha.*°
7 Ms. *samupodita.*
8 Ms. *sauçatapada*°; Tib. *bde-bar-gçegs-pa bsgrubs-pai thabs-su gyur-pa.*
9 Ms. *samyak pratividṛçamathāsyāpi.*—Tib. zhi-gnas dañ yañ-dag-par ldan-par gyur-pas.
10 The folios are numbered by letter and figure-numerals. Both here concord, but see p. 346 n. 6.

शमथेन विपश्यनासुयुक्तः[1] । इत्यादि ।

तत्र[2] शमथप्रतिपादनं कृतमिदानीं तदनन्तरप्राप्तां विपश्यनां प्रज्ञापरनामधेयां प्रतिपादयन्नाह ।

**इमं परिकरं सर्वं प्रज्ञार्थं हि मुनिर्जगौ ।**
5 **तस्मादुत्पादयेत्प्रज्ञां दुःखनिवृत्तिकाङ्क्षया ॥ १**

इममिति समनन्तरमिह शास्त्रे लक्षणतः प्रतिपादितं दानादिकमिदन्तया प्रत्यक्षतया परामृशति । परिकरमिति परिवारं परिच्छेदं संभारमिति यावत् । सर्वं समस्तप्रकारमन्यच्च । प्रज्ञार्थं हि मुनिर्जगाविति संबन्धः । प्रज्ञा यथावस्थितप्रतीत्य-
10 समुत्पन्नवस्तुतत्त्वप्रविचयलक्षणा सैवार्थः प्रयोजनं संबोधिहेतु-भावोपनायकतया यस्य दानादिलक्षणस्य परिकरस्य स तथा तमिति । दानपारमितादिषु धर्मप्रविचयस्वभावायाः प्रज्ञायाः प्रधानत्वात् ।

तथा हि दानं संबुद्धबोधिप्राप्तये प्रथमं कारणं पुण्यसंभा-
15 रान्तर्भूतत्वात् । तच्च शीलालंकृतमेव सुगतिपरंपरा[ं] सुख-भोगोपकरणसंपन्नामावहदुत्तरज्ञानप्रतिलम्भहेतुः । क्षान्तिरपि तद्विपक्षभूतप्रतिघप्रतिपक्षतया दानशीलसंभूतमयं संभारमनुपा-लयन्ती सुगतत्वाधिगमाय संप्रवर्तते । एतच्च शुभं दानादि-

---

1 Ms. çamathena vipaçyanayā suyukta. This is the first pāda of viii. 4, where we have: vipaçyanāsuyukta, *metri causa:* but the Ms. M. ad viii. 4, gives the reading: °nayā.—Tib. *shi-gnas rab-tu ldan-pai lhag mthon-gis*, see infra. . . . . . . .

2 VIII. 4, foll.

चितसंभूतं पुण्यसंभाराख्यं ध्यानादिकमुपजनितं च ज्ञान-
संभाराख्यं वीर्यमन्तरेण न भवतीति तदुभयसंभारकारणतया
सर्वावरणप्रहाणाय समुपजायते । समाहितचित्तस्य च यथाभूत-
परिज्ञानमुत्पद्यत इति ध्यान[129b]पारमिताप्यनुत्तरज्ञानहेतु-
रुपपद्यते । 5

एवमेते दानादयः सत्कृत्य संभृता अपि प्रज्ञामन्तरेण
सौगतपदाधिगमहेतवो न भवन्तीति । नापि पारमिताव्यपदेशं
लभन्ते । प्रज्ञाकृतपरिशुद्धिभाजः पुनरव्याहतोदारप्रवृत्तितया
तदनुकूलमनुवर्तमानास्तद्धेतुभावमधिगच्छन्ति । पारमितानाम-
धेयं च लभन्ते । 10

तथा[1] दातृदेयप्रतिपादकादित्रितयानुपलम्भयोगेन प्रज्ञा-
परिशोधिताः सादरनिरन्तरदीर्घकालमभ्यस्यमानाः प्रकर्ष-
पर्यन्तमुपगच्छन्तो ऽविद्याप्रवर्तितसकलविकल्पजालमलरहितं
[2]क्लेशज्ञेयावरणविनिर्मुक्तमुभयनैरात्म्याधिगमस्वभावं सर्वस्वपर-
हितसंपदाधारभूतं परमार्थतत्त्वात्मकं तथागतधर्मकायमभि- 15
निर्वर्तयन्तीति प्रज्ञाप्रधाना दानादयो गुणा उच्यन्ते ।[3]

न चैतद्वक्तव्यं । यदि प्रज्ञा प्रधानं दानादीनां सैव केवला
संबोधिसाधनमस्तु किमपरैर्दानादिभिरिति । तदन्येषामुप-

---

[1] Maith. Ms. has *tathā hi.*

[2] Dh. S. cxv. *āvaraṇe dve.*

[3] Tib. *çes-rab-ni gtso-bo yin-la sbyin-pa-la-sogs-pa ni phal-par brjod-do* = prajñaiva pradhānam, dānādayo guṇā . . . — *phal-pa* = usual, common, bad = prākṛta, guṇa ; guṇa = quality = *yon-tan.*

योगस्य वर्णितत्वात् । केवलं नेत्रविकला इव दानादयः प्रज्ञाने-
त्रका[1] एव यथाभिमतां सौगतीं भूमिमभिसरन्तीति प्रज्ञोप-
नायका[2] उच्यन्ते । न तु प्रज्ञैव केवला सम्यक्संबोधिसाधनं ।
तस्माद्दानादिपरिकरः प्रज्ञार्थ इति स्थितं ॥

5 सर्वकल्पनाविरहात्समारोपापवादान्तद्वयमौनात्[3] । [4]सर्वेष-
कायवाङ्मनःकर्मलक्षणमौनत्रययोगाद्वा मुनिर्बुद्धो भगवान् ।
[5]त्रिदुःखताद्दुःखितसर्वजगत्परित्राणाध्याशयो जगौ जगाद् उक्त-
वानित्यर्थः । आर्यप्रज्ञापारमितादिसूत्रान्तेषु प्रज्ञार्थमुक्तवान्
सर्वमेव दानादिपरिकरं ।

10 यथोक्तमार्यशतसाहस्र्यां प्रज्ञापारमितायां । [130a][6] तद्य-
थापि नाम सुभूते सूर्यमण्डलं [7]चन्द्रमण्डलं च[7] चतुर्षु द्वीपेषु
कर्म करोति । चतुरश्च द्वीपाननुगच्छति । अनुपरिवर्तते ।
एवमेव सुभूते प्रज्ञापारमिता पञ्चसु पारमितासु कर्म
करोति । पञ्च पारमिता अनुगच्छति । अनुपरिवर्तते ।
15 प्रज्ञापारमिताविरहितत्वात्पञ्च पारमिताः पारमितानामधेयं
न लभन्ते ॥ तद्यथापि नाम सुभूते राजा चक्रवर्ती विरहितः

---

1 So Nep. Ms.; Maith. Ms. has: °*netrakā*.

2 So Maith. Ms.; Nep. Ms. has: *prajñopāyanāyaka*; Tib. çes-pa-la dren-pa.

3 According to Tib. °*agrahaṇād vā*.

4 = mi-slob-pai lus daṅ.

5 *triduḥkhatā*, see *M. Vyut*. § 112,5,6,7.

6 The folio is numbered 130 (letter numeral) and 131 (figure).—The fol. 130 (figure) is really a part of the VIIIth Chapter.

7-7 Wanting in Nep. Ms.; but occurs in the Maith. Ms. and in the Tib.

सप्तभी रत्नैश्चक्रवर्तिनामधेयं न लभते । एवमेव सुभूते पञ्च
पारमिताः प्रज्ञापारमिताविरहितत्वान्न पारमितानामधेयं
लभन्ते ॥ तद्यथापि नाम सुभूते याः काश्चन कुनद्यः सर्वास्ता
येन गङ्गा महानदी तेनानुगच्छन्ति । ता गङ्गया महानद्या
सार्धं महासमुद्रमनुगच्छन्ति । एवमेव सुभूते पञ्च पारमिताः 5
प्रज्ञापारमितापरिगृहीता येन सर्वाकारज्ञता तेनानुगच्छ-
न्तीति विस्तरः ॥

पुनश्चोक्तं । इयं कौशिक प्रज्ञापारमिता बोधिसत्त्वानां
महासत्त्वानां दानपारमितामभिभवति शीलपारमितामभि-
भवति क्षान्तिपारमितामभिभवति ध्यानपारमितामभिभवति । 10
[1]तद्यथापि नाम कौशिक आतन्धानां शतं वा सहस्रं वा
अपरिणायककानामभव्यं मार्गावतरणाय । कुतः पुनर्नगरानुप्रवे-
शाय । एवमेव कौशिक अचक्षुष्काः पञ्च पारमिता जात्यन्ध-
भूता भवन्ति विना प्रज्ञापारमितया अपरिणायिका विना
प्रज्ञापारमितया अभव्या बोधिमार्गावतरणाय । कुत एव सर्वा- 15
कारज्ञतानगरानुप्रवेशाय । यदा पुनः कौशिक पञ्च पारमिताः
प्रज्ञापा[130ᵇ]रमितापरिगृहीता भवन्ति । तदैताः पञ्च पार-
मिताः सचक्षुष्का भवन्ति । प्रज्ञापारमितापरिगृहीताश्चैताः
पञ्च पारमिताः पारमितानामधेयं लभन्त इति विस्तरः ॥
एवमन्यत्रापि यथासूत्रमवगन्तव्यं । 20

---

1 Cp. *Aṣṭasāhasrikā* p. 172 for a quasi-literal exposition of this very doctrine.

उक्तं च ।

सर्वपारमिताभिर्हि निर्मलाभिरनिन्दिते ।

चन्द्रलेखेव ताराभिरनुयातासि सर्वदा ॥[1] इति ॥

अथ वा । इममिति समनन्तरप्रक्रान्तरूपं शमथात्मकं
5 प्रबन्धं[2] । परिकरमिति प्रज्ञासमुत्थापकतया तत्कारणसंदोहं
पीठिकाबन्धं वा[3] । प्रज्ञार्थमिति प्रज्ञैव पूर्वोक्तोऽर्थः प्रयोजनं
साध्यतया यस्य तं । शमथपरिशोधितचित्तसंताने[4] प्रज्ञायाः
प्रादुर्भावात् । सुप्रशोधितक्षेत्रे[5] सस्यनिष्पत्तिवत् ।

यथोक्तं शिक्षासमुच्चये । किं पुनरस्य शमथस्य माहात्म्यं
10 यथाभूतज्ञानजननशक्तिः । यस्मात्

समाहितो यथाभूतं जानातीत्युक्तवान्मुनिः । इति ॥[6]

एतदपि धर्मसंगीतावुक्तं[7] । समाहितचेतसो[8] यथाभूतदर्शनं

---

1 = *Aṣṭasāhasrikā prajñāpāramitā*, prefatory stanzas, 8.

2 Maithil Ms. *çamathātmakamathāpr°*; Nep. *çamathapr°*, and in margin *tmā arthaḥ*—Tib. zhi-gnas-kyi bdag-ñid-kyi rgyun-no.

3 According to the Tib. *°bandham vā.—saṁdoha = hthsogs = sāmagrī.—pīṭhikābandha* = gzhi.

4 Maithil Ms. *°cittacaitta°*; *°citta°* only, in Nep. and Tib.

5 *supraçodhita* = legs-par sbyaṅs-pa; *pariçodhita* = yoṅs-su dag-pa byas-pa.

6 See *Çikṣās*, p. 119-9 (*...çamasya .... prajānātīty avadan muniḥ*) and metrical observations, p. 403 (*Saṁy.-N.* III p. 13, *Mil.-p.* 39-3 have the same saying, with *pajānāti*; see also *Çikṣās.* 120-11-13: "Here a prose-saying is forced into verse")—*samāhito...* = Kārikā 9ᵃ (see *Çikṣās.* p. XLI). Prof. Bendall's opinion—so far as the original reading is concerned—is confirmed by the quotation of this very passage, supra ad VIII. 4: *samāhito hi ....prajānātīty avadan muniḥ.* Compare Bhojarāja ad *Yogas.* I. 20: *samāhitacittaç ca bhāvyaṁ samyag vijānāti*, and *M. Vyut.* 81. 6: *samāhitacitto yathābhūtaṁ prajānāti, yathābhūtaṁ paçyati.*

7 This quotation follows in the *Çikṣās* (119. 11).

8 *Çikṣās.° manaso.*—Tib. mñan-par bzhag-pai sems.

भवति। यथाभूतदर्शिनो बोधिसत्त्वस्य सत्त्वेषु महाकरुणा प्रव-
र्तते।[1] इदं मया[2] समाधिमुखं[3] सर्वसत्त्वानां निष्पादयितव्यं।
स तया महाकरुणया संचोद्यमानो ऽधिशीलमधिचित्तमधिप्रज्ञं
च शिक्षा[:][4] परिपूर्यानुत्तरां[5] सम्यक्संबोधिमभिसंबुध्यते[6]। इति
विस्तरः॥ 5

हिरिति यस्मात् प्रज्ञार्थं दानादिपरिकरं शमथात्मकपरि-
करं वा मुनिर्जगौ तस्मादुत्पादयेत्प्रज्ञामिति योजनीयं। उत्पा-
दयेदिति निष्पादयेत्साक्षात्कुर्याद्भावयेत्सेवयेद्दृढीकुर्याद्वा॥

सा च प्रज्ञा द्विविधा हेतुभूता फलभूता च। हेतुभूतापि
द्विविधा। अधिमुक्तिच[131a]रितस्य च भूमिप्रविष्टस्य च 10
बोधिसत्त्वस्य। फलभूता तु सर्वाकारवरोपेतसर्वधर्मशून्यताधि-
गमस्वभावा[7] ऽनिमित्तयोगेन[8]। तत्र प्रथमतो हेतुभूता[9] श्रुत-
चिन्ताभावनामयी[10] क्रमेणाभ्यासाद्भूमिप्रविष्टप्रज्ञां निर्वर्तयति।
सा चापरापरभूमिप्रतिलम्भयोगेन प्रकर्षमभिवर्धयन्ती याव-

---

1 *Çikṣās.* has: *evaṁ cāsya bhavati.*—Wanting in our Mss. and Tib.

2 *mukha* = sgo; but see Kern, *Lotus*, 295, n. 1.

3 *Çikṣas.* has: *sarvadharmayathābhūtadarçanam ca.*

4 See *Dh. saṁgraha* 140 (tisraḥ çikṣāḥ); the reference to *M. Vyut.* is wrong: read 36; and *Ang. N.* I. 235.—*çikṣām*, according to *Çikṣās*.

5 Supported by the Tib. (not by *Çikṣās*).

6 Nep. Ms. has: bodhyate.—The *vistara* is to be found supra ad V. 54.

7 Nep. Ms. °*bhāvā* ' *ni*°.

8 Maithil Ms. has: °*vattvopetā s*° ... *dyogena* — The readings of the Nep. Ms. are supported by Tib.

9 According to the Tib. *rgyur-gyur-pa ni*—Nep. Ms. has: *hetubhūtām* ...° *bhāvanāmayīm*; Maithil Ms.: °*bhūtā*, °*mayī*.

10 Cp. *M. Vyut.* 75; supra p. 5, n. 1 and V. 25.—*mayī* is wanting in Tib.

दुःखावरणविगमात्मकस्वकल्पनाजालविगतबुद्धत्वस्वभावप्रज्ञां नि-
ष्पादयति । अत एवाह दुःखनिवृत्तिकाङ्क्षयेति ।

दुःखस्य पञ्चगतिसंगृहीतसत्त्वराशिगतस्य स्वात्मगतस्य च ।
सांसारिकस्य । जातिव्याधिजरामरणस्वभावस्य[1] प्रियविप्रयोगा-
5 प्रियसंप्रयोगपर्येष्यमाणलाभविघातलक्षणस्य । संक्षेपतः पञ्चोपा-
दानस्कन्धात्मकस्य च । निवृत्तिः । निर्वाणं । उपशमः । पुन-
रनुत्पत्तिधर्मकतया आत्यन्तिकसमुच्छेद इत्यर्थः । तस्याः
काङ्क्षया अभिलाषेण च्छन्देनेति यावत् ॥

तथा हि विपर्याससंज्ञिनो ऽसत्सत्त्वसमारोपाभिनिवेशवशा-
10 दात्मात्मीयग्रहप्रवृत्तेरयोनिशोमनसिकारप्रसूतो रागादिक्लेशगणः
समुपजायते । तस्मात्कर्म । ततो जन्म । ततश्च व्याधिजरामरण-
शोकपरिदेवदुःखदौर्मनस्योपायासाश्च प्रजायन्ते । एवमस्य केव-
लस्य महतो दुःखस्कन्धस्य समुदयो भवति । तदेवमनुलोमा-
कारं प्रतीत्यसमुत्पादं सम्यक्प्रज्ञया व्यवलोकयतः । पुनस्तमेव
15 निरात्मकमस्वामिकं मायामरीचिगन्धर्वनगरस्वप्नप्रतिबिम्बादि-
समानाकारतया परमार्थतो निःस्वभावं पश्यतो यथाभूतपरि-
ज्ञानात्तद्विपक्षात्मतया मोहस्वभावमविद्याभवाङ्गं निवर्तते ।
अविद्या[181b]निरोधात्तत्प्रत्ययाः संस्कारा निरुध्यन्ते । एवं पूर्व-
पूर्वस्य कारणभूतस्य निरोधादुत्तरोत्तरकार्यभूतस्य निरोधो
20 वेदितव्यः । यावज्जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौ-

---

1 Nep. Ms. ° *viprayogaapri* °— On this topic, see *M. Vyut.* 112.

मेनश्चोपादानाश्च निरुध्यन्ते। एवमस्य केवलस्य महतो दुःख-
स्कन्धस्य निरोधो भवति॥ [1]तत्राविद्या तृष्णोपादानं च क्लेश-
वर्त्मनो व्यवच्छेदः[2]। संस्कारा भवश्च कर्मवर्त्मनो व्यवच्छेदः।
परिशिष्टान्यङ्गानि दुःखवर्त्मनो व्यवच्छेदः[1]। पूर्वापरान्त-
निरोधो निरोधवर्त्मनो व्यवच्छेदः। एवमेव त्रिवर्त्म निरा- 5
त्मकं[3] आत्मात्मीयरहितं[4] संभवति च संभवयोगेन[5] विभवति
च विभवयोगेन स्वभावान्नडकलापवच्च[6] इति। एतच्चोत्तरत्र
विस्तरेण युक्त्यागमाभ्यां प्रतिपादयिष्यते॥

तदेवं प्रज्ञया स्वप्नमायादिस्वभावं संस्कृतं प्रत्यवेक्षमाणस्य
सर्वधर्माणां निःस्वभावतया प्रतिपत्तेः परमार्थाधिगमात्सवासन- 10
निःशेषदोषराशिविनिवृत्तिर्भवतीति[7] सर्वदुःखोपशमहेतुः प्रज्ञो-
पपद्यत इति॥

यथा च युक्त्यागमाभ्यां विचारयतोऽविपरीतवस्तुतत्त्वप्रवि-

---

1—1 = *Daçabhūmaka*, quoted in *Çikṣās* 227-11 (with a varia lectio: *pariçeṣaṁ duḥkhavartmano vyavacchedaḥ*).

2 = lam-du ruam-par-chad-de. Vibhūticandra has: lam gyi o=° *vartma syāt*.—There are three *Kāṇḍas* in the Pratityasamutpāda, *kleçakāṇḍa*, *karma*°, *duḥkha*°; see *Pratityasamutpādahṛdaya*, by *Nāgārjuna* (Tanjur, Mdo. XVII) which agrees with our text.

3 bdag maṅ-ba ma yin te.

4 So Tib.—*ātmā* wanting in Maithil Ms.-*tmā* deleted in Nep.

5 Nep. *saṁbhavati vāsam*°; Maithil *saṁbhavati* | *a*°.

6 Maith. *svabhāvo nala*°. On *kalāpa*, see infra ad IX 73, *Abhidh. saṁg.* (J.P.T.S. 1884) VI. 8, and *Çālistamba*.

7 Maith. has *savāsanā*'—Tib. bag-chags-daṅ-bcas-pai ñes.

षः[1] समुपजायते । तदुपदर्शयितुं सत्यद्वयव्यवस्थामाह संवृति-
रित्यादि ।

संवृतिः परमार्थश्च सत्यद्वयमिदं मतं ।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते ॥ २[2]

5 संव्रियत आव्रियते यथाभूतपरिज्ञानं स्वभावावरणादावृत-
प्रकाशनाच्चानयेति[3] संवृतिः । अविद्या मोहो विपर्यास इति
पर्यायाः । अविद्या ह्यसत्पदार्थस्वरूपारोपिका स्वभावदर्शनाव-
रणात्मिका च सती संवृतिरुपपद्यते ।

यदुक्तमार्यशालिस्तम्बसूत्रे[4] । पुनरपरं तत्त्वे[5] ऽप्रतिपत्तिर्मिथ्या-
10 प्रतिपत्तिरज्ञानमविद्येति । उक्तं च[6] ।

अभूतं ख्यापयत्यर्थं भूतमावृत्य वर्तते ।
अविद्या जायमानैव कामलातङ्कवृत्तिवत्[7] ॥ इति ॥

तदुपदर्शितं च प्रतीत्यसमुत्पन्नं वस्तुरूपं संवृतिरुच्यते । तदेव

---

1 The Nep. Ms. has: 'viparītavastu tattvaprakāçanāc cānayeti || saṁvṛtir *avidyā* (see infra l. 6). The lacuna is manifest; the Tib. translator exactly follows the Nepalese Ms.

2 The first line is quoted infra ad 107 (idaṁ smṛtam).

3 *āvṛtaprakāçana*—If *āvṛta* be right (query *abhūta*), it is to be translated *adhyāropita, abhūta.*—This sentence is passed over in Tib.

4 See *Çikṣāsamuccaya* and our forthcoming edition of the *Çālistamba*.

5 *tattve*, the second *t* by a second hand.

6 Quoted by Vibhūticandra (285 b 5): Snaṅ-bai-phreṅ-ba-las = from the *Ālokamālā* (?)

7 Tib. *mig-ser-gyis ni gnod-pa bshin;* Vibhūticandra *mig-ser nad-la-sogs-pa bshin.*—mig-ser = *kāmalā* (M. Vyut.)—See *Dhātup., taṅk: kṛcchrajīvane, dauḥsthya* = gnod-pa, nad-pa.

लोकसंवृतिसत्यमित्यभिधीयते लोकस्यैव सं[132a]वृत्या सत्य-
मिति कृत्वा ॥ यदुक्तं ।

मोहः स्वभावावरणाद्धि संवृतिः
सत्यं तया ख्याति यदेव कृत्रिमं ।
जगाद तत्संवृतिसत्यमित्यसौ 5
मुनिः पदार्थं कृतकं च संवृतिं ॥ इति ॥[1]

सा च संवृतिर्द्विविधा लोकत एव । तथ्यसंवृतिर्मिथ्या-
संवृतिश्चेति । तथा हि किं चित्प्रतीत्यजातं नीलादिकं वस्तु-
रूपमदोषवदिन्द्रियैरुपलब्धं लोकत एव सत्यं । मायामरीचि-
प्रतिबिम्बादिषु प्रतीत्यसमुपजातमपि दोषवदिन्द्रियोपलब्धं 10
यथास्वं[2] तीर्थिकसिद्धान्तपरिकल्पितं च लोकत एव मिथ्या ।
तदुक्तं ।

विनोपघातेन यदिन्द्रियाणां
षण्णामपि ग्राह्यमवैति लोकः ।
सत्यं हि तल्लोकत एव शेषं 15
विकल्पितं लोकत एव मिथ्या ॥ इति[3] ॥

एतत्तदुभयमपि[4] सम्यग्दृशामार्याणां मृषा परमार्थदर्शनां

---

[1] Metre Vaṁçastha.—This is the 28th stanza of the VI chapter of the *Madhyamakāvatāra*; see *Muséon* 1900 Aout (I. 2)—Quoted without reference by Vibhūticandra (285 b 5).

[2] Tib. ji-ltar mu-stegs-can-gyi raṅ-gi-grub-mthas.

[3] = *Madhyamakāvatāra*, VI. 25 (*Muséon*, loc. cit.), by Candrakīrti.—Quoted by Vibhūticandra 286 a 1, from Nāgārjuna.

[4] So Nep. Ms.—Maith. Ms. has: *etad ubhayam*— Tib. de-ltar de gñi-ga yaṅ = *evaṁ tad ubhayam*.

संवृतिसत्यालीकत्वात् । एतच्चानन्तरमेवोपपत्त्या प्रतिपादयिष्यामः । तस्मादविद्यावतां वस्तुस्वभावो न प्रतिभासत इति ॥

परम उत्तमोऽर्थः परमार्थः । अकृत्रिमं वस्तुरूपं यदभिगमात्सर्वावृतिवासनानुसंधिक्लेशप्रहाणं भवति । सर्वधर्माणां
5 निःस्वभावता । शून्यता तथता भूतकोटिः । धर्मधातुरित्यादिपर्यायाः । सर्वस्य हि प्रतीत्यसमुत्पन्नस्य पदार्थस्य निःस्वभावता पारमार्थिकं रूपं । यथाप्रतिभासं सांवृतस्यानुपपन्नत्वात् ॥

तथा हि । न तावद्यथापरिदृश्यमानरूपेण सत्स्वभावो
10 भावः । तस्योत्तरकालमनवस्थानात् । स्वभावस्य च सर्वदाऽनागन्तुकतयाऽविचलितरूपत्वात् । यो हि यस्य स्वभावः स कथं कदाचिदपि निवर्तेत । अन्यथा तस्य स्वभावताहानिप्रसङ्गान्निःस्वभाव[132b]तैव स्यात् । नापि स उत्पद्यमानः सत्स्वरूपेण कुतश्चिदागच्छति निरुध्यमानो वा क्वचित्संनिचयं
15 गच्छति ॥ अपि तु हेतुप्रत्ययसामग्रीं[2] प्रतीत्य मायावदुत्पद्यते । तद्वैकल्यतो निरुध्यते च । हेतुप्रत्ययसामग्रीं प्रतीत्य जातस्य[3] पराधीनात्मलाभस्य प्रतिबिम्बस्येव कुतः सत्स्वभावता ।

न च कस्यचित्पदार्थस्य परमार्थतो हेतुप्रत्ययसामग्रीतः समुत्पत्तिः संभवति । तस्या अप्यपरसामग्रीजनितात्मतया

---

1 Yod-pai raṅ-bzhin.—Mss. °*svabhāvā bhāvāḥ* (°*vāt*) : no plural-sign in Tib.; compare *tasyottara*°.

2 *samagrīṃ*, wanting in Nep., given by Maith. and Tib.

3 Maith. adds *ca*.

परायत्तात्मलाभाया निःस्वभावत्वात् । एवमन्यस्याः पूर्वपूर्वायाः स्वस्वकारणसामग्रीजन्यतया निःस्वभावता द्रष्टव्या । इत्थं कारणानुरूपं कार्यमिच्छता कथं निःस्वभावात्सस्वभावस्योत्पत्तिरभ्युपेतव्या । यद्वक्ष्यति ।

मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितं । 5
याति तत्कुतः कुत्र याति चेति निरूप्यतां ॥
यदन्यसंनिधानेन दृष्टं न तदभावतः ।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथं ॥[1] इति ।

उक्तं च ।

यः प्रत्ययैर्जायति स ह्यजातो 10
न तस्य उत्पादु सभावतो ऽस्ति ।
यः प्रत्ययाधीनु स शून्य उक्तो
यः शून्यतां जानति सो ऽप्रमत्तः ॥[2] इति ।

[3]इति शून्येभ्य एव शून्या धर्माः प्रभवन्ति धर्मेभ्य इति ॥[4]

न च स्वपरोभयरूपहेतुनिबन्धनमहेतुनिबन्धनं वा भावस्य 15 जन्मातिपेशलमुपपद्यते[5] । तथा ह्यात्मस्वरूपं भावानां स्वजन्मनिमित्तं भवेत् । निष्पन्नमनिष्पन्नं वा भवेत् । न तावन्निष्पन्नस्य सतः स्वात्मनि कारणता । तस्य सर्वात्मना स्वयं निष्पन्नत्वात्

---

1 = IX. 144, 145.

2 *Anavataptahradāpasaṁkramaṇasūtra*, quoted in *Madh. Vṛtti* ad XIII. 2 et alias.

3 *iti* given by both Mss.

4 See infra ad IX. 108, and *Pañcakrama* 40.35.

5 *atipeçala* = çin-tu-legs-pa.

क्व पुनरस्य व्यापारोऽस्तु । उत्पादस्य पुनरस्यानिष्पन्नस्यान्यस्य
स्वभावस्याभावात् । एकस्य चास्य निरंशत्वात् । [133a] न च
पश्चादुत्पद्यमानस्यापरस्य तत्स्वभावता युक्ता । तन्निष्पत्ताव-
निष्पन्नस्य तत्स्वभावत्वाभावात् । इति न स्वात्मनो निष्पन्नात्मकस्य
5 चिदुत्पत्तिरस्ति । न चापि स्वत उत्पत्तिपक्षे प्रागनिष्पन्नं
स्वरूपमितरेतराश्रयदोषप्रसङ्गात्कस्य चित्संभवति । नापि तद-
निष्पन्नस्वभावमाकाशकुशेशयसंकाशमशेषसामर्थ्यशून्यं स्वनिष्पत्तौ
हेतुभावमुपगन्तुमर्हति । अन्यथा खरविषाणस्यापि स्वस्वभाव-
जनकत्वप्रसङ्गात् ॥

10 नापि परत इति पक्षः । आदित्यादप्यन्धकारस्य सर्वस्माद्वा
सर्वस्योत्पत्तिप्रसङ्गात् । जनकाजनकाभिमतयोर्विवक्षितकार्या-
पेक्षया परत्वाविशेषात्[1] । [2]अन्यजनकैकत्वैकसंततिप्रतिनियमो
ऽप्यनुत्पन्ने कार्ये काल्पनिकतया वस्तुतो न संगच्छते । न
चानागतावस्थितधर्मापेक्षया कार्यादिव्यवहारो वास्तवः । अर्थ-
15 स्वभावसद्भावस्य[3] निरूपयिष्यमाणत्वात् । नापि बीजावस्थासु
विद्यमानाङ्कुरापेक्षया बीजस्य परत्वमकाल्पनिकमस्ति । कारणे
कार्यास्तित्वस्य निषेत्स्यमानत्वात् । यच्च परिदृश्यमानमेव रूपं
विचारतो नावतिष्ठते तत्रानागतादिषु संभावितस्य का चिन्ता ॥

---

1 According to the Tib. °*aviçeṣāc ca.*

2 rgyu[d] gcig-pa-so-sor-ṅes-pa = °*janakaikasaṃtati*° — *ekatva*° is wrong.

3 Nep. *atha*°; Maith. *sukha*°; Tib. dṅos-poi raṅ-bzhin-du yin-par dpyod-par hgyur-bai-phyir-ro.

नाप्युभयत इति पक्षः । प्रत्येकपक्षोक्तसमुदितदोषप्रसङ्गात् । कार्यानुत्पत्तौ चोभयरूपस्य हेतोः परमार्थतो ऽभावात् । उत्पत्तौ वा न किं चिज्जनयितव्यमस्तीति कुतोभयरूपस्य हेतोर्व्यापारः स्यात् ॥

नाप्यहेतुत इति विकल्पः । यतो नायं प्रसज्यप्रतिषेधात्मतया ऽहेतुत इति युज्यते । अहेतुकत्वे हि भावानां देशकालनियमाभावप्रसङ्गः स्यात् । नित्यं सत्त्वासत्त्वप्रसङ्गो वा । उपेक्षार्थिनां प्रतिनि[133b]यतोपायानुष्ठानं च न स्यात् । प्रधानेश्वरादीनां कारणत्वे ऽस्य प्रतिषेधयिष्यमाणत्वात्[1] । नाप्यहेतुतो भावाः स्वभावं प्रतिलभन्ते ॥

तस्माच्च स्वपरोभयरूपहेत्वहेतुभ्य उत्पद्यन्ते सत्स्वभावा भावाः । तदुक्तं ।

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्व चन के चन ॥ इति ॥[2]

एकानेकस्वभावविचारणयापि सर्वभावानां स्वभावविकलत्वाच्च सत्स्वभावत्वं । तस्मात्स्वप्नमायाप्रतिबिम्बादिवदिदंप्रत्ययतामात्रमेव[3] अविचारमनोहरमस्तु किमिह सर्वदुःखहेतुना भावाभिनिवेशेन प्रयोजनं ॥ अत इदमर्थस्य तत्त्वं ।

---

1 ... sogs-pa-rnams rgyu-yin-pa-ñid hdi hgog-par hgyur-bai phyir-ro.

2 = *Madhyamakamūla* I. 1. (See *Madhy. Vṛtti*, p. 12, l. 13, Bibl. Buddh.)

3 rkyen-las byuṅ-ba tsam-ñid hdi = *idaṃ pratyaya°*; but on the compound *idaṃpratyayatāmātra*, see *Madh. Vṛtti*, p. 9, n. 7, 8, and infra Index.

निःस्वभावा अमी भावास्तत्त्वतः स्वपरोदिताः ।
एकानेकस्वभावेन वियोगात्प्रतिबिम्बवत् ॥[1]

एवं निःस्वभावतैव सर्वभावानां निजं पारमार्थिकं रूपमवतिष्ठते ॥ तदेव प्रधानपुरुषार्थतया परमार्थं उत्कृष्टं प्रयोजनमभिधीयते ॥

अत्रापि नाभिनिवेष्टव्यं । अन्यथा भावाभिनिवेशो वा शून्यताभिनिवेशो वेति न कश्चिद्विशेषः । उभयोरपि कल्पनात्मकतया सांवृतत्वात् । न चाभावस्य कल्पितस्वभावतया किंचित्स्वरूपमस्ति । न च भावनिवृत्तिरूपो ऽभावो निवृत्तेर्निःस्वभावत्वात् । यदि च भावस्यैव कश्चित्स्वभावः स्यात् तदा तत्प्रतिषेधात्मा ऽभावोऽपि स्यात् । भावस्य तु स्वभावो नास्तीति प्रतिपादितमेव । अतो न भावनिवृत्तिरूपो ऽभावो नाम कश्चित् । न च भावाभावयोरुक्तक्रमेणासत्त्वे प्रतिपादिते तदुभयसंकीर्णात्मता[2] संभवति । उभय[134a]प्रतिषेधस्वभावता वा । भावविकल्पस्यैव सकलविकल्पनिबन्धनत्वात्तस्मिन्निराकृते सर्व एवामी एकप्रहारेण निरस्ता भवन्तीति । तस्मात् ।

न सन्नासन्न सदसन्न चाप्यनुभयात्मकं[3]

किंचिदभिनिवेशविषयतया मन्तव्यं । तदुक्तमार्यप्रज्ञापारमितायां[4] । सुभूतिराह । इहायुष्मन् शारद्वतीपुत्र बोधिसत्त्व-

1 *udita* = smras-pa = said to be *sva* or *para*.
2 *Mss. saṁkīrṇatātmatā.*
3 *pya* omitted by Nep.—See infra p. 359, l. 10.
4 Comp. *Aṣṭasāhasrikā*, 190. 10.

यानिकः कुलपुत्रो वा कुलदुहिता वाऽनुपायकुशलो रूपं शून्यमिति प्रजानाति सक्तः । वेदनां शून्यामिति संजानाति सक्तः । संज्ञां शून्यामिति संजानाति सक्तः[1] । संस्कारान् शून्यानिति संजानाति सक्तः । विज्ञानं शून्यमिति संजानाति सक्तः । एवं चक्षुः श्रोत्रं घ्राणं जिह्वा कायो[2] मनः । यावत्सर्वधर्मशून्यतां शून्यामिति संजानाति सक्त इति विस्तरः ॥ 5

उक्तं च ।

> सर्वसंकल्पहानाय शून्यतामृतदेशना ।
> यस्य[3] तस्यामपि ग्राहस्त्वयासाववसादितः ॥ इति[4] ।
> न सन्नासन्न सदसन्न चाप्यनुभयात्मकं । 10
> चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ इति[5] ।

एवं चतुष्कोटिविनिर्मुक्तमादिशान्तमनुत्पन्नानिरुद्धानुच्छेदाशाश्वतादिस्वभावतया निःप्रपञ्चत्वादाकाशवदासङ्गमनास्पदमशेषं[6] विश्वमुत्पश्याम इति ॥

सत्यद्वयमिदं मतमिति । किं तत् । संवृतिः परमार्थश्चेति 15

---

[1] This clause is wanting in Mss.— given by Tib.

[2] So Mss. *jihvā kāyo.*

[3] Nep. has *yaçca* (second hand).

[4] Quoted infra ad IX. 33.—*iti* wanting in Nep.

[5] Quoted in *Subhāṣitasaṁgraha* (fol. 17) from Saraha, *Muséon*, 1903, IV, p. 389—See *Sarvadarç.* p. 14, l. 15, and our translation note 58 (*Muséon*, 1901, II, p. 174.)

[6] So Maith.—Nep. has *āsaṁganāsaṅgam.*—Tib. chags-pa-med-pa gnas-med-pa = *asaṅgam anāspadam.*—*viçva* = hgro-ba = *jagad.*

पञ्चाद्योऽग्नीयं । भूतमियं ब्राह्मणी आवपनमियं मुष्टिकेति यथा ।[1]

संवृतिरेकं सत्यमविपरीतं । परमार्थश्चापरं सत्यमिति । चकारः सत्यतामात्रेण ऽतुल्यबलतां समुच्चिनोति । तत्र संवृति-
5 सत्यमवितथं रूपं लोकस्य । परमार्थसत्यं च सत्यमविसंवादकं तत्त्वमार्याणामिति विशेषः । इत्थं विशेषोपदर्शनार्थो ऽपि युक्तश्चकारः ॥

एतदुक्तं भवति । सर्व एवामी आध्यात्मिका बाह्या[श्च][2] भावा[134b]: स्वभावद्वयमाबिभ्रतः समुपजायन्ते । यदुत सांवृतं
10 पारमार्थिकं च । तत्रैकमविद्यातिमिरावृतबुद्धिलोचनानाम-[3] भूतार्थदर्शिनां[4] पृथग्जनानां मृषादर्शनविषयतया समादर्शि-तात्मसत्ताकं । अन्यत्प्रविचयाञ्जनप्रज्ञाकोद्घातिताविद्यापटलसम्य-ग्ज्ञाननयनानां[5] तत्त्वविदामार्याणां[6] सम्यग्दर्शनविषयतयोप-स्थितस्वरूपं[7] ।
15 तदेतत्स्वभावद्वयं सर्वे पदार्था धारयन्ति । अनयोश्च स्वभा-

---

1 Grammatical instances wanting in Tib.—*muṣṭika*, masc. only in P.W.—Maith. has *sṛtam, vastriketi*.

2 According to Tib.—Nep. *ādhyātmikā bāhyā bh°*; Maith. *°kā vā bā°*.

3 *buddhi*, wanting in Nep. and Tib.; but on the relations of Tib. and Nep. see

4 Nep. and Tib.: *abhūtātma°*.

5 Maith. *°paṭalākulas.°*

6 According to Tib. *samyagjñāna.°*

7 So Nep. and Tib.—Maith. *°viṣayatayā samādarçitātmasattākam anya t pravicayāya sthitarūpam.*

ययोर्मृषादृशां बालिशानां यो विषयः स संवृतिसत्यं । यस्तु सम्यग्दृशामधिगततत्त्वानां विषयस्तत्परमार्थसत्यमिति व्यवस्था शास्त्रविदां । यदाह ।

सम्यङ्मृषादर्शनलब्धभावं
रूपद्वयं बिभ्रति सर्वभावाः ।
सम्यग्दृशां यो विषयः स तत्त्वं
मृषादृशां संवृतिसत्यमुक्तं ॥ इति ॥[1]

इति द्वयोः समुदायो द्वयमिति युज्यते । मतमिति संमतम् [illegible]मतं । केषां । अशेषावरणविधां बुद्धानां भगवतां तथागतानामार्यश्रावकप्रत्येकबुद्धबोधिसत्त्वानां च । इदमेव सत्यद्वयं नान्यत्सत्यमस्तीति । अवधारणार्थो ऽपि युज्यते यदुक्तं ।

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥ इति ।[2]

[3]पितापुत्रसमागमे चोक्तं ।

सत्य इमे दुवि लोकविदूनां
[4]दिष्ट स्वयं अश्रुणित्व परेषां ।

---

1 = *Madhyamakâvatâra*, VI. 23. (See *Muséon*, loc. cit.)

2 = *Madhyamakamûla*, XXIV. 8 (See *Madhy. vṛtti*).

3 = Yab-sras-mjal-ba — See supra VI. 14.— All passages known hitherto are in prose.

4 *diṣṭa* = *dṛṣṭa* = gzigs. Tib. has: *tvayâ parasmâd açrutya svayaṁ dṛṣṭam* — For scansion *diṣṭa sayaṁ açunitva.*

संवृति या च तथा परमार्थो
सत्यु न विद्यति किं च तृतीयु ॥ इति ॥

ननु चत्वार्यार्यसत्यानि दुःखसमुदयनिरोधमार्गलक्षणा-
न्यभिधर्मे कथितानि भगवता । तत्कथं द्वे एव सत्ये इति ।
5 सत्यं । किं तर्हि विनेयजनाशयानुशयवशादेते[1] द्वे ए[135ᵃ]व[2]
चत्वारि कृत्वा कथितानि । अमीषां द्वयोरेवान्तर्भावात् । तथा
हि दुःखसमुदयमार्गसत्यानि संवृतिस्वभावतया संवृतिसत्ये ऽन्त-
र्भवन्ति । निरोधसत्यं तु परमार्थसत्य इति न कश्चिद्विरोधः ॥

स्यादेतत्संवृतिरविद्योपदर्शितात्मतया[3] ऽभूतसमारोपस्वरूप-
10 त्वाद्विचाराक्षतशो[4] विशीर्यमाणापि कथं सत्यमिति । एतदपि
सत्यं । किं तु लोकाध्यवसायतः संवृतिसत्यमित्युच्यते । लोक[5]
एव हि संवृतिसत्यमिह[6] प्रतिपन्नः । तदनुवृत्त्या भगवद्भिरपि
तथैवानपेक्षिततत्त्वार्थिभिः[7] संवृतिसत्यमुच्यते । अत एव लोक-
संवृतिसत्यं चेति शास्त्रे ऽपि विशेष उक्त[8] आचार्यपादैः । वस्तु-
15 तस्तु परमार्थ एवैकं सत्यमतो न काचित्क्षतिरिति ॥

---

1 *bsam-pa daṅ bag-la-ñal-gyi dbaṅ-gis* : in conformity to the anuçaya and to the âçaya ……

2 The folio numbered 135 (letter-numeral) is wanting.—We give this portion from the Maith. Ms.

3 *âtma* wanting in Tib.

4 Ms. *vicarâd bhûtaço*—Tib. *lan-brgya-phrag-du ñams-par-gyur-na.*

5 Ms. *lokâ eva* … *pratipannâḥ.*

6 *saṁvṛti*°, supported by Tib.

7 So Ms.— Tib. *bcom-ldan-hdas-kyis kyaṅ de-kho-nai don de-ñid btaṅ-sñoms-su bshag-nas.*

8 Ms. *uktam âryâcâryapâdaiḥ.—Çâstra* = *Madhyamakamûla* XXIV. 8— Âcârya = Nâgârjuna.

यथोक्तं भगवता । एकमेव भिक्षवः परमं सत्यं यदुता-
प्रमोषधर्म निर्वाणं सर्वसंस्काराश्च मृषा मोषधर्माण इति[1] ॥

सत्यद्वयमिदमुक्तं । तथाविधोपश्रुतचेतसां तत्स्वभावतया
संवृतिसत्यमिति प्रतीतं । परमार्थसत्यं तु न ज्ञायते कीदृशं
स्वभावं किंलक्षणमिति । अतो वक्तव्यं तत्स्वरूपमिति । अत 5
आह बुद्धेरगोचरस्तत्त्वमिति ।

बुद्धेः सर्वज्ञानानां । समतिक्रान्तसर्वज्ञानविषयत्वादगोचरः ।
अविषयः । केन चित्प्रकारेण तत्सर्व[बुद्धि]विषयीकर्तुं[2] न शक्यत
इति यावत् । इति कथं तत्स्वरूपं प्रतिपादयितुं शक्यं । तथा
हि सर्वप्रपञ्चविनिर्मुक्तस्वभावं परमार्थ[सत्य]तत्त्वं[3] । अतः सर्वो- 10
पाधिशून्यत्वात्कथं[4] कथा चित्कल्पनया पश्येत । कल्पनासमति-
क्रान्तस्वरूपं च शब्दानामविषयः । विकल्पजन्मानो हि शब्दा[5]
विकल्पधियामविषये [न] प्रवर्तितुमुत्सहन्ते । तस्मात्सकलविक-
ल्पाभिलापविकलत्वादनारोपितमसांवृतमनभिलाप्यं परमार्थतत्त्वं
कथमिव प्रतिपादयितुं शक्यते । तथापि भाजनश्रोतृजनानु- 15
ग्रहार्थं [परिकल्पमुपादाय][6] संवृत्या निदर्शनोपदर्शनेन किं-
चिदभिधीयते ॥

---

1 Quoted *Madhy. vṛtti.* (Bibl. Buddh.), p. 41.4, n. 2 — The Ms. has *yadvat promoṣadharmaṇi bījam*.

2 Ms. *tatsarva .. viṣayikartum*. Tib. *blo de thams-cad-kyis.*

3 °*satya*,° from Tib.

4 *upādhi* = khyad-par.

5 Ms. *çabdān* ...., *utsahate*.

6 Ms. *tadbhāvanāsaṁvṛtyā*. Tib. yoṅs-su-brtag-pa bzuṅ-nas kun-rdzob-kyi bden-pa dpe ñe-bar- = *saṁvṛtisatyanidarçana*.°

यथा तिमिरप्रभावात्तैमिरिकः[1] सर्वमाकाशदेशं केशोण्डुकमण्डितमितस्ततो मुखं विक्षिपन्नपि पश्यति । तथा कुर्वन्तमवेत्यातैमिरिकः किमयं करोतीति तत्समीपमुपसृत्य तदुपलब्धकेशप्रक्षिप्तलोचनो ऽपि न केशाकृतिमुपलभते । नापि तत्केशाधिकरणान् भावाभावादिविशेषान् परिकल्पयति । यदा पुनरसौ तैमिरिको ऽतैमिरिकाय स्वाभिप्रायं प्रकाशयति केशानिह पश्यामीति[2] । तदा तद्विकल्पापसारणाय तस्मै यथाभूतमसौ ब्रवीति । नात्र केशाः सन्तीति तैमिरिकोपलब्ध्यनुरोधेन प्रतिषेधपरमेव वचनमाह । न च तेन[3] तथा प्रतिपादयतापि कस्यचित्प्रतिषेधः कृतो भवति विधानं वा । तच्च केशानां तत्त्वं यत्तैमिरिकः पश्यति तन्नातैमिरिकः[4] ॥

एवमविद्यातिमिरोपघातादतत्त्वदृशो बाला यदेतत्स्कन्धधात्वायतनादिस्वरूपमुपलभन्ते[5] तदेषां सांवृतं रूपं । तानेव स्कन्धादीन्येन स्वभावेन[6] निरस्तसमस्ताविद्यावासना बुद्धा भगवन्तः पश्यन्ति । अतैमिरिकोपलब्धकेशदर्शनन्यायेन[7] । तदेषां परमार्थसत्यमिति ।

---

1 Ms. *timirasvabhāvāt.*—Tib. rab-rib-gyi mthus.

2 Tib. = *keçā iha santīti.*

3 Tib. de-rnams-kyis = *taiḥ.*

4 According to the Tib.—Ms. *yad ataimirikaḥ ... tan na taimirikaḥ.*

5 So Ms.; Tib. = °*upaghātāt tattvadṛço ...... svarūpaṁ nopalabhante.*—*na upalabhante* is wrong; *tattvadṛço* very questionable.

6 Tib. *de-bshin gaṅ-gis* — Query *raṅ-bshin.*

7 Tib. = *ataimirikadarçananyāyena.* — °*upalabdhakeça*°, given by Maith. Ms., is doubtful.

यदाह शास्त्रवित् ।

विकल्पितं यत्तिमिरप्रभावात्[1]
केशादिरूपं वितथं तदेव ।
येनात्म[136a]ना[2] पश्यति शुद्धदृष्टि-
स्तत्तत्त्वमित्येवमिहाप्यवैहि ॥ इति ।[3] 5

इति परमार्थतोऽस्वभावमपि परमार्थतत्त्वं दृष्टान्तद्वारेण संवृतिमुपादाय कथं चित्कथितं । न तु तद्रूपेण सांवृतव्यवहार-विरहितस्वभावं वस्तुतो वक्तुं शक्यत इति ॥ यदुक्तं ।

अनक्षरस्य धर्मस्य श्रुतिः का देशना च का ।
श्रूयते देश्यते चार्थः समारोपादनक्षरः ॥ इति[4] । 10

तस्माद्व्यवहारसत्य एव स्थित्वा परमार्थो देश्यते । परमार्थ-देशनावगमाच्च परमार्थाधिगमो भवति । तस्मात्तदुपायत्वात् । यदुक्तं शास्त्रे[5]

व्यवहारमनाश्रित्य परमार्थो न देश्यते ।
परमार्थमनागम्य निर्वाणं नाधिगम्यते ॥ इति 15

[6]एवं परमार्थदेशनोपायभूता परमार्थाधिगमश्चोपेयभूत इति[6] । अन्यथा तस्य देशयितुमशक्यत्वात् ॥ ननु च तथाविध-

---

1 Ms. svabhāvāt.

2 The letter and figure-numerals concord again, as the lacuna has not been noticed by the second hand (figure-numerals).

3 = *Madhyamakavatāra*, VI. 29.— Çāstravid = Candrakīrti.

4 Quoted with the reading *deçyate cāpi* in *Madhy. vṛtti*, ad XV. 2 (fol. 78 b), *uktaṁ bhagavatā* — Our Tibetan version has *don*, supporting *deçyate sārthaḥ*.

5 = *Madhyamakamūla*.— This stanza = XXIV. 10.

6.6 Wanting in Maith.— Given by Nep. and Tib.

अपि तथाविधबुद्धिविषयः परमार्थतः किं न भवतीत्याह।
बुद्धिः संवृतिरुच्यत इति। सर्वा हि बुद्धिरालम्बननिरालम्बन-
तया[1] विकल्पस्वभावा। विकल्पश्च सर्व एवाविद्यास्वभावः। अव-
स्तुग्राहित्वात्। यदाह।
5 विकल्पः स्वयमेवायमविद्यारूपतां गतः। इति।[2]
अविद्या च संवृतिः। इति नैव का चिद्बुद्धिः पारमार्थिक-
रूपग्राहिणी परमार्थतो युज्यते। अन्यथा सांवृतबुद्धिग्राह्यतया
परमार्थरूपतैव तस्य हीयेत। परमार्थस्य वस्तुतः सांवृतज्ञाना-
विषयत्वात्॥
10 तच्चेदमुक्तं भगवतार्थसत्यद्वयावतारे। यदि हि देवपुत्र
परमार्थतः परमार्थसत्यं कायवाङ्मनसां विषयतामुपगच्छेत्।
न तत्परमार्थसत्यमिति संख्यां गच्छेत्। संवृतिसत्यमेव तद्भ-
[136b]वेत्। अपि तु देवपुत्र परमार्थसत्यं सर्वव्यवहारसमति-
क्रान्तं निर्विशेषं। असमुत्पन्नमनिरुद्धं। अभिधेयाभिधानज्ञेय-
15 ज्ञानविगतं। यावत्सर्वाकारवरोपेतसर्वज्ञज्ञानविषयभावसमति-
क्रान्तं[3] परमार्थसत्यमिति विस्तरः।
अत एव तदविषयः सर्वकल्पनानां यद्भावाभाव[स्व]परभाव-
सत्यासत्यशाश्वतोच्छेदनित्यानित्यसुखदुःखशुच्यशुच्यात्मानात्मा-

---

1 °*nirālambana*° wanting in Maith.— Tib. has snaṅ-ba daṅ mi snaṅ-ba-ñid-kyis = *ābhāsānābhāsatayā*.

2 Prose in our Tib. version, but metrical in Vibhūticandra's Commentary.

3 °*viṣayabhāva*°, *bhāva* wanting in Tib. *yul-las hdas-pa*.

तस्य शून्याशून्यलक्षणैकत्वान्यत्वोत्पादनिरोधादयो[1] विशेषास्तत्त्वस्य न संभवन्ति। अमीषां सांवृतधर्मत्वात्॥

एतदुक्तं भगवता पितापुत्रसमागमे[2]। एतावच्चैव ज्ञेयं यदुत संवृतिः परमार्थश्च। तच्च भगवता शून्यतः सुदृष्टं सुविदितं सुसाक्षात्कृतं। तेन सर्वज्ञ इत्युच्यते। तत्र संवृतिर्लोकप्रचारतस्तथागतेन दृष्टा। यः पुनः परमार्थः सोऽनभिलाप्यः। अनाज्ञेयः। अपरिज्ञेयः। अविज्ञेयः। अदेशितः। अप्रकाशितः। यावदक्रियः। अकरणः। यावन्न लाभो नालाभो न सुखं न दुःखं न यशो नायशो न रूपं नारूपमित्यादि।

इति प्रत्यस्तमितसमस्तसांवृतवस्तुविशेषमशेषोपाधिविविक्तमुक्तमनन्तवस्तुविस्तरव्यापिज्ञानालोकावभासिताम्बरात्मना भगवता परमार्थसत्यमिति। तदेतदार्याणामेव स्वसंविदितस्वभावतया प्रत्यात्मवेद्यं। अतस्तदेवात्र[3] प्रमाणं। संवृतिसत्यं तु लोकव्यवहारमाश्रित्य प्रकाशितं। तदेवं यथावद्विभागतः सत्यद्वयपरिज्ञानादविपरीतो धर्मप्रविचय उपजायते॥

एवं संवृतिपरमार्थभेदेन द्विविधं सत्यं व्यवस्थाप्य तदधिकृतश्च लोकोऽपि द्विविध एवेत्युपदर्शयन्नाह [137a]। तत्र लोक इत्यादि।

---

1 ° abhāvasvapara °, *sva* from Tib. *raṅ daṅ gzhan-gyi dṅos-po*.— *lakṣaṇa* wanting in Tib. — *gcig daṅ du-ma daṅ* = *ekatvanānātva*.

2 The same quotation occurs infra ad IX. 155.

3 So Nep.— Maith. *ta eva*.— Tib. *de ñid*.

तत्र लोको द्विधा दृष्टो योगी प्राकृतकस्तथा।
[1]तत्र प्राकृतको लोको योगिलोकेन बाध्यते॥ ३॥

तत्र तयोः संवृतिपरमार्थसत्ययोरधिकृतो[2] व्यवस्थितसत्यद्वय-
प्रतिपत्त्येति यावत्। लोको जनः। द्विधा द्विप्रकारः। संवृति-
5 परमार्थसत्यवेदी। लोक इति समुदायवचनं। तेन राशिद्वय-
मित्यर्थः। दृष्ट इति प्रतिपन्नः। युक्तेरागमाच्च। कथं कृत्वा
द्विधेत्याह योगी प्राकृतकस्तथेति। योगः समाधिः सर्वधर्मा-
नुपलम्भलक्षणः[3]। सोऽस्यास्तीति योगी। लोक इत्येकः प्रकारो
राशिः। तथा प्रकृतिः संसारप्रवृत्तेः कारणमविद्या तृष्णा।
10 ततो जात इति प्राकृतः। प्राकृत एव प्राकृतको[4] लोक इति
द्वितीयः। तत्र योगी प्रधानतत्त्वमविपरीतं पश्यति। प्राकृत-
कस्तु विपर्यस्तं वस्तुतत्त्वं पश्यति[5] भ्रान्तत्वात्।

स्यादेतत्। उभयोरपि यथास्वं तत्त्वदर्शित्वात्कतरः पुन-
रनयोर्भ्रान्तिमानस्तु य एवान्यतरेण बाध्यते। कः पुनरनयोः
15 केन बाध्यत इत्याह तत्रेत्यादि। तत्रेति सप्तम्या समुदाय-
निर्देशः। निर्धारणे च सप्तमी[6]। तत्र तयोर्योगिप्राकृतकयो-

---

1 With this line and the following one (4 A.) compare Aryadeva's *Cittaviçuddhiprakaraṇa*, 83 (J.A.S.B. LXVII, p. 182): yathā prākṛtako. ……

2 dbaṅ-bar-gnas-pa.

3 Maith. ° *anupalambhaçūnyatā*°— ° *çūnyatā* ° wanting in Tib.

4 *phal-pa ñid phal-pa yin-la bjig -rten.*

5 Maith. has *adhyavasyatīti*; but Tib. *mthoṅ.*

6 *bdun-pai-mtha-can sbyin-bdaṅ-bai tshig daṅ dmigs-byis dgar-ba-la bdun-pao.*

लौकिकयोर्मध्ये प्राकृतको लोकः प्राकृतकलनाख्या बुद्ध्या-
निर्धार्यते। निर्धार्य च बाध्यत इति बाधनं विधीयते[1]॥
केनेत्यपेक्षायामाह योगिलोकेनेति। योग्येव लोको योगि-
लोकः। तेन बाध्यत इति विपर्यस्तमतित्वेनाख्याप्यते। कथं
धीविशेषेणेति योजनीयं[2]। न तु योगी प्राकृतकेन बाध्यते। 5

इदमिहाभिमतं। यथा विभ्रमाहितसद्भावं तिमिरोपहत-
चक्षुषो ऽसद्भूतकेशोण्डुकादिदर्शिनो ज्ञानं यथावस्थितवस्तुतत्त्व-
ग्राहिणो ऽतैमिरिकज्ञानेन[3] बाध्यते। न तथा तैमिरिकज्ञाने-
नातैमिरिकज्ञानं बाध्यते। एवमविद्यामलतिमिरदूषितबुद्धि-
चक्षुषो[4] विपरीतवस्तुस्वरूपग्राहिणः प्राकृतकस्य ज्ञानं प्रज्ञा- 10
ञ्जनशलाकाहितविगतमलामलज्ञानचक्षुषो[5] भावनिजतत्त्ववेदिनो
योगिलोकस्य ज्ञानेन बाध्यते। न पुनरितरज्ञानेन योगि-
ज्ञानमिति।

तथा चोक्तं[6]।

> न बाधते ज्ञानमतै[137b]मिराणां 15
> यथोपलब्धं[7] तिमिरेक्षणानां।

---

1 Maith. *nirdhāryate bādhyate bādhena vidhīyate.* — Tib. dmigs-kyis bsal-ba yin-te dmigs-kyis bsal-nas kyaṅ gnod ces-pa ni gnod-par brjod-do.

2 See infra p. 370 l. 11.

3 Maith. adds. *taimirikajñānam.*

4 °*buddhi*° wanting in Nep., given by Maith. and Tib.

5 Çes-rab chus bkrus-pai mtshan-ñid-can dri-ma daṅ bral-ba.

6 *Madhyamakāvatāre*, VI. 27.

7 So Nep.— Maith. °*labdhiḥ*.—See infra p. 378, l. 14.

तथामलज्ञाननिरस्तानां

धियां हि बाधा न धियोऽमलायाः ॥ इति ॥

तस्मात्प्राकृतज्ञानमेव भ्रान्तमिति बाध्यते ॥ अथ किं प्राकृता एव बाध्यन्ते। योगिभिरुत योगिनोऽपीत्याह बाध्यन्त इत्यादि।

5 **बाध्यन्ते धीविशेषेण योगिनोऽप्युत्तरोत्तरैः ।**

योगिनोऽपि योगिभिरपरापरैर्बाध्यन्ते। न केवलं प्राकृतका इत्यपिशब्दस्यार्थः। किंभूतैरुत्तरोत्तरैः। उत्तरे चोत्तरे चोत्तरोत्तरास्तैः। तारतम्यभेदावस्थितगुणविशेषप्रतिविशेषोत्कर्षप्राप्तैरधिकाधिकैरित्यर्थः। तदपेक्षयापचितगुणा[2] अधराधरे 10 बाध्यन्ते। ज्ञानमाहात्म्यादिभिरभिभूयन्ते।

कथं धीविशेषेणेति। धियो ज्ञानस्य प्रज्ञाया विशेषस्तदावरणविगमात्प्रकर्षः। तेन। उपलक्षणं चैतत्। ध्यानसमाधिसमापत्त्यादिविशेषेणापि। तथा हि प्रमुदिताख्यप्रथमभूमिकाभिन्नो बोधिसत्त्वस्य ज्ञानादिगुणापेक्षया तदुत्तरविमलाभिधानद्वितीय- 15 भूमिकाभिन्नो बोधिसत्त्वस्य ज्ञानप्रभावादयो गुणा विशिष्यन्ते। एवमन्येषामप्युत्तरोत्तरभूमिकाभिन्नां वेदितव्यं। तथा प्रथमध्यानादिकाभिन्नामप्युत्तरोत्तरैर्बाधनं योजनीयं। यावत्सर्वा-ज्ञानवत्त्वैरिति ॥

---

1 The Tib. translation of the *Madhyamakāvatāra* (de-bzhin dri-med ye-çes spañs-pai blos) is literally accurate; our Tib. translation is very good: de-bzhin çes-pa dri-mat[illegible] gyur-pas = tathā malinajñānādhinayā.

2 Nep. from a second hand: °*apacaya guṇā*.

वाईतत्। यद्यपि योगिनां धियो विषये प्राकृतज्ञानं भ्रान्त-मिति कथमवगमयितुं शक्यत इत्याह। दृष्टान्तेनोभयेष्टेनेति।

**दृष्टान्तेनोभयेष्टेन कार्यार्थमविचारतः॥ ४**

उभयेषां योगिप्राकृतकानामिष्टोऽभिमतस्तेन दृष्टान्तेन निदर्शनेन। स एव सूत्रेषु भगवता मायामरीचिगन्धर्वनगर- 5 प्रतिबिम्बादिरुक्तो दृष्टान्तः स चोभयेषामपि निःस्वभावतया प्रसिद्धः। तस्मा[188a]दनेनैव सर्वधर्माणां निःस्वभावत्वप्रतिपाद-नात्। तथा हि ये तावत्सर्वजनप्रतिपन्नस्वरूपा रूपादयः। ते योगिनामेव परमार्थसत्याधिगमान्निःस्वभावतया सिद्धाः। ये पुनरिमे स्वप्नमायादिषूपलब्धास्ते प्राकृतकानामपि। अतस्तयो- 10 रुभयोरपि विप्रतिपत्तेरभावाद्दृष्टान्तधर्मता न विरुध्यते॥ येषां तु मीमांसकादीनां देशकालान्यथात्मकं वस्त्वेव तत्तथा प्रतिभासत[1] इति मतं तेऽन्यत्र[2] निराकृता इति न तन्मतमिह निरस्यते॥ ये तु स्वयूथ्याश्चित्तमेव वस्तुसत्स्वप्नादिषु तथा प्रतिभासत इति मन्यन्ते। तेऽपि यथावसरमग्रतः स्वसंवेदननिराकरणान्निरा- 15 करिष्यन्ते[3]॥ युक्तिसिद्धमपि। उभयसिद्धमेव। अतस्तेन दृष्टान्तेन विपरीतवस्तुस्वरूपग्राहितया प्राकृतज्ञानं भ्रान्तमिति व्यवस्था-प्यते। एवं योगिनामपि[4] यथासंभवं वक्तव्यं॥

---

1 *Yul daṅ dus gshan-gyi bdag-ñid dṅos-po ñid de de-bshin-du snaṅ-ba yin-no.* For *Uttaramīmāṃsā*, see *Brahmasūtrabhāṣya*, 3, 2.1-3. (Col. G. A. Jacob.)

2 In some other treatise.

3 svayūthyāḥ = Vijñānamātravādinaḥ.—See infra ad IX, 17, 18.

4 Tib. = *yogijñānam*.

ननु यदि निःस्वभावाः सर्वभावा इति वस्तुतत्त्वं कथं तर्हि सर्वसत्त्वसमुद्धरणाशयेन दानादिषु संभारपरिपूरणार्थं तत्त्ववेदिनामपि बोधिसत्त्वानां प्रवृत्तिः। तेषामपि निःस्वभावत्वात्। इत्यत आह। कार्यार्थमविचारत इति।

5 कार्यं साध्यं। उपादेयं। फलमुच्यते। तदर्थं तन्निमित्तम्-अविचारतः। अविचारेण तद्धेतौ प्रवर्तनात्। तथाभूतेष्वपि तथेदंप्रत्ययतानियमस्य विद्यमानत्वात्। न हेतुफलभावस्य निरोधः।

एतदुक्तं भवति। यद्यपि मायादिस्वभावतया निःस्वभावा 10 दानादयस्तथापि त्रिकोटिपरिशुद्धा आदरादियोगेनाभ्यस्यमानास्तथाभूता अपि परमार्थाधिगमाय हेतु[138b]भावमापद्यन्ते। तेषां तदुपायत्वात्। प्रतीत्यसमुत्पादस्य चाचिन्त्यत्वात्। एतादृशादेव हेतोरेतादृशं फलमधिगम्यते। तस्य तदुपेयत्वात्[1]। तदुक्तं।

15 उपायभूतं व्यवहारसत्य-
मुपेयभूतं परमार्थसत्यं। इति[2]॥

अवश्यं चैतदेवं[3]। अन्यथा मार्गाभ्यासतः[4] समलावस्थाया निर्मलावस्था सविकल्पावस्थाया निर्विकल्पावस्था कथमुत्पद्येत। तस्याः परमार्थतस्तत्स्वभावत्वात्। अन्यथापि समानमेतत्।

1 So Nep. and Tib.—Maith. *tatpratyayatvât.*
2 *Madhyamakâvatâra*, VI. 80.
3 So Nep. and Tib.—Maith. *evestavyam.*
4 Nep. adds *samalâvasthâ.*

सर्वधर्माणां परमार्थतो निःस्वभावत्वात् । हेतुस्वरूपं च सर्वेण फलमिष्यते । अतः सांवृतादपि निःस्वभावाद्धेतोर्निःस्वभावता-धिगम एव फलं । कथमन्यथा संस्कृतादपि मार्गादसंस्कृतं निर्वाण-मवाप्येत । इति दानादयो वस्तुतो निःस्वभावा अपि परमार्थ-तत्त्वाधिगमाय सर्वसत्त्वेषु करुणायमानैर्बोधिसत्त्वैरुपादीयन्ते । 5
अन्यथा परमार्थाधिगमायोगात् । ततो दानादिषु प्रवृत्तिर-निवारिता । एवमिष्टानिष्टफलप्राप्तिपरिहारार्थिनां कुशला-कुशलयोः प्रवृत्तिनिवृत्ती वक्तव्ये । एतत्पुनः पश्चात्स्फुटीकरिष्यते ॥

स्यादेतत् । यदेतन्मायादिसमानस्वभावं वस्तुरूपं योगिनः प्रतिपद्यन्ते तदेव यदि प्राकृतकोऽपि जनः प्रतिपद्यते क तर्हि 10
विप्रतिपत्तिरस्तीत्याह । लोकेनेत्यादि ।

**लोकेन भावा दृश्यन्ते कल्प्यन्ते चापि तत्त्वतः ।**
**न तु मायावदित्यत्र विवादो योगिलोकयोः ॥ ५ ॥**

लोकेन प्राकृतकजनेन । हेतुप्रत्ययं प्रतीत्य भवन्ति स्वरूपं लभन्त इति भावाः । न पुनः पारमार्थिकं रूपं निजमेषा- 15
मस्ति । इति भावशब्देन निःस्वभावताभिधानं प्रतीयते ।
[1]सत्स्वरूपेण[1] न केवलं दृश्यन्ते कल्प्यन्ते चापि तत्त्वतः । यथा-प्रतीतस्वभावेनैव परमार्थतोऽध्यवसीयन्ते । अ[139a]भिनिविश्यन्त इति यावत् । यदेतदस्मत्प्रतीतिगोचरो वस्तुरूपं तदात्मकमेवे-

[1] Wanting in Tib.

त्वाभिमननात्। न तु मायावत्। न तु पुनर्यथा योगिना मायेव मायावत्स्वभावशून्या दृश्यन्ते परमार्थतस्तथा प्रतीयन्ते[1]। इत्यस्मिन् विवादो विप्रतिपत्तिर्योगिलोकयोः। योगिना सह लोकस्येत्यर्थः। तत्प्रतिपत्तौ वस्तुतत्त्वे लोकस्याप्रतिपत्तेः। लोकेन सह वा योगिनः। तत्प्रतिपत्तौ योगिना यथार्थताप्रतिषेधात्॥ अयमभिप्रायः। सर्वभावानां सांवृतं पारमार्थिकं चेति रूपद्वयमस्ति। तत्र यत्सांवृतं तदेव लोकेन प्रतीयते। यत्तु पारमार्थिकं तद्योगिनेत्युक्तं। यथा मायाकारनिर्मितहस्त्यादिरूपमेव मन्त्रादिसामर्थ्यविभ्रमितलोचनो जनः पश्यति। मायाकारस्तु तत्स्वभावादि[2] भिन्नं तत्स्वरूपं। एवं योगिलोकयोरपि यथायोगं प्रतिपत्तव्यं॥

अथापि स्यात्। यदेतत्समस्तजनसाधारणमर्थक्रियाक्षमं[3] प्रत्यक्षप्रमाणप्रतीतं वस्तुरूपं तत्कथमपह्नोतुं शक्यत इति परस्य हृदयमाशङ्क्याह प्रत्यक्षमपीत्यादि।

**प्रत्यक्षमपि रूपादि प्रसिद्ध्या न प्रमाणतः।**

यदपि च प्रत्यक्षमभिधीयते रूपादि। आदिशब्देन शब्दादि वेदनादि गृह्यते। तदपि प्रसिद्ध्या रुच्या[4] लोकप्रवादेन न प्रमाणतः। न प्रमाणेनाधिगतं यत्प्रत्यक्षं रूपादीति संबन्धः।

---

1 So Nep. and Tib.—Maith. *māyeva tathā lokena pratīyante.*

2 So Mss. and Tib.

3 See *Sarvadarç.*, French translation, n. 20 (*Muséon* 1901).

4 For this reading I am indebted to Prof. H. Kern.—Maith *rucyā.*—Nep. has *rūyā* from a second hand.—Not translated in Tib.

सांव्यवहारिकप्रमाणबलात्प्रत्यक्षादीनां तदधिगतं वास्तवमेव रूपादि । न च लौकिकप्रमाणबलमधिगतं तात्त्विकं रूपं सर्वजनानां तत्त्ववेदित्वप्रसङ्गात् । यदाह ।

इन्द्रियैरुपलब्धं यत्तत्तत्त्वेन भवेद्यदि ।
जातास्तत्त्वविदो बालास्तत्त्वज्ञानेन किं तदा ॥ इति ।　　5

तस्मात्प्रत्यक्षमपि न प्रमाणेनाधिगतं ॥

रूपादि तत्त्वं प्रत्यक्षमपि यदि न प्रमाणाधिगतं कथं तत्प्रसिद्धिः । प्रसिद्धिश्चेत्कथं मृषेत्याह । अशुच्यादिष्वित्यादि ।

**अशुच्यादिषु शुच्यादिप्रसिद्धिरिव सा मृषा ॥ ६**

यथा च परमार्थतोऽशुचिनि स्त्रीकलेवरादौ तद्रागिणां　　10
विपर्यस्तचेतसां शुचिबुद्धिरुपजायते । आदिशब्दादनित्यादौ नित्यादिबुद्धिर्गृह्यते[1] । सा चातस्मिंस्तद्ग्रहान्मृषा वितथप्रतिभासिनीत्यर्थः । तद्वदिदं रूपादावपीत्यविशेषः ।

यदि न प्रत्यक्षप्रमाणात्तत्सिद्धिः । आगमात्तर्हि भविष्यति ।
तथा हि स्कन्धधात्वायतनादिस्वभावतया भगवता भावाः　　15
सूत्रे देशिता क्षणिकादिस्वभावतया च । तथेदमुक्तं भगवता ।
सर्वं सर्वमिति[2] ब्राह्मण यावदेव पञ्च स्कन्धाः । द्वादशायतनानि ।
अष्टादश धातव इति ॥ तथा ।

---

1 Reference to the four viparyāsas.

2 So Nep. and Tib.—Maith. has *sattvaṁ sattvam iti.*

क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया।
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते॥ इति[1]।

न च मायादिस्वभावानां क्षणिकाक्षणिकादिधर्मताप्रतिपादनमुचितं। निःस्वभावानां कस्य चित्स्वभावस्याभावात्।
5 तत्कथममी न परमार्थसन्त इत्यत आह लोकावतारणेत्यादि।

**लोकावतारणार्थं च भावा नाथेन देशिताः।**
**तत्त्वतः क्षणिका नैते संवृत्या चेद्विरुध्यते॥ ७**

लोकानां भावाभिनिवेशिनां स्कन्धादिदेशनाविनेयानां सत्त्वानामापाततः[2] शून्यतादेशनानधिकृतानां शून्यतायामवतारणार्थं
10 सुकुमारोपक्रमेण प्रवर्तनाय। चो हेतौ। यस्माद्भावाः स्कन्धायतनादिलक्षणाः। वस्तुतो निःस्वभावत्वेऽपि सर्वधर्माणां। नाथेन नरकादिदुःखात्सत्त्वान् परित्रायमाणेनाभ्युदयनिःश्रेयससुखं प्रापयता सत्त्वाशयादिवेदिना बुद्धेन भगवता देशिताः प्रकाशिताः। न तु परमार्थतः। तस्मान्न सूत्रविरोधः॥ तदुक्तं।

15 ममेत्यहमिति प्रोक्तं यथा कार्यवशाज्जिनैः।
तथा कार्यवशात्प्रोक्ताः स्कन्धायतनधातवः॥ इति[3]॥

यदि न परमार्थतो दे[140a]शिताः कथं तर्हि ते क्षणिका इत्याह। तत्त्वतः क्षणिका नैत इति। तत्त्वतः परमार्थतो

---

1 The first line is quoted in Kumārila's *Tantravārt.* p. 170. 10; the second in *Bhāmatī* (Calcutta, 1891) p. 361. 3 (bhūtir yeṣām); both in *Nyāyabindupūrvapakṣa*—See *Album Kern*, p. 113, n. 1.

2 = re-shig.

3 *Yuktiṣaṣṭika*, by Nāgārjuna, fol. 27 a 2 (Mdo XVII).

णि:खल्वनात्मक्षणिका अपि न भवन्ति । इति । इमे भावाः । क्षणिकादिदेशना वैनेयानां तत्त्वभावनाप्रकाशनात्[1] । यदि न तत्त्वतः क्षणिकाः कथं तर्हि देशनायामपि कथिता इति मनसि निधाय परः संवृत्या चेत्[2] । यदि संवृत्या क्षणिका अभिधीयन्त इत्युच्यते[3] । इत्युत्तरमाशङ्क्य दूषयति । तदा विरुध्यते । संवृत्या क्षणिका न परमार्थत इति विरुध्यते । न संगच्छते । अक्षणिकतया प्रतीतेः प्रतीतिविरोधः[4] । सांव्यवहारिभिरक्षणिकत्वप्रतीतेः । न क्षणिकत्वं सांवृतं रूपमिति यावत्[5] । एतत्सिद्धान्तवादी परिहरति न दोषो योगिसंवृत्येति ।

न दोषो योगिसंवृत्या लोकात्ते[6] तत्त्वदर्शिनः ।
अन्यथा लोकबाधा स्यादशुचिस्त्रीनिरूपणे ॥ ८

नायं प्रतीतिविरोधलक्षणो दोषः । कुतः । योगिनां पुद्गलनैरात्म्यसमाधिलाभिनां[7] या संवृतिर्व्यवहारस्तया क्षणिकतया

---

1 So Mss.—Tib. skad-cig-ma-la-sogs-pas (?) bstan-pai (?) gdul-bya-rnams-la deirañ-bzhin bstan-pai-phyir.

2 So Mss.—According to Tib.: *āha saṁvṛtyā ced iti.*

3 Mss. ucyante.

4 Things being perceived as permanent, there is opposition by the perception.—Tib. *skad-cig-ma-ma-yin-par rtogs-pa dañ hgal-lo* = akṣaṇikatayā pratīter virodhaḥ.

5 Tib. *tha-sñad-pa-rnams-kyis skad-cig-ma-ma-yin-pai de-kho-na-ñid-du rtogs-pa dañ kun-rdzob-kyi rañ-bzhin shes-pa ni hgal-lo shes-pai don-to..........* akṣaṇikatvasya tattvena pratītiḥ sāṁvṛtaṁ rūpaṁ ceti virodha ity arthaḥ.

6 So M.—Minaev has *lokānte.*

7 Bdag-med-pai tiñ-ñe.

प्रतीतेः ॥ अयमभिप्रायः। यदि नामार्वाग्दर्शनैः क्षणिकत्वं न
प्रतीयते। तथापि योगिव्यवहारगोचरः। योगिव्यवहारो ऽपि
संवृतिरूपतां न जहाति बुद्धिः संवृतिरुच्यते इति वचनात्[1]।
न च प्रतीतिबाधितं बाधितमेव। तथाविधायाः प्रतीते-
5 रप्रमाणत्वात्।

कुतः पुनरेतल्लोकातीतमपि क्षणिकत्वादि योगिन एव
पश्यन्ति। नार्वाग्दर्शिन इत्याह। लोकात्ते तत्त्वदर्शिन इति।
लोकादर्वाचीनदर्शनाल्लोकात्ते योगिनस्तत्त्वदर्शिनः। अतीन्द्रिय-
दर्शिनः। हेतुपदमेतत्। यस्मात्तत्त्वदर्शिनस्ते तस्मात्क्षणिक-
10 नैरात्म्यादि लोकाप्रतीतमपि प्रतिपद्यन्ते। अत एव न तेषां
लोकप्रतीतिबाधा।

अवश्यं चैतदङ्गीकर्तव्यमित्याह। अन्यथेत्यादि। अन्यथा यदि
चैवं [140b] न स्वीक्रियते। तदा भवदभ्युपगतेऽपि लोकबाधा
स्यात्। कुत। अशुचिस्त्रीनिरूपण इति। अशुचिभावनासमये[2]।
15 अशुचीति स्त्रियाः कामिन्या निरूपणे विभावनायां लोकबाधा
स्यात्। लोकप्रतीतेन विरोधो भवेत्। लोकेन शुचिस्वभावतया
स्त्रीशरीरस्याध्यवसानात्। तस्मान्न लोकप्रतीतेन योगिदर्शन-
बाधेति। अथ

यथोपलब्धं[3] तिमिरेक्षणानां

---

1 See supra p. 352, l. 4.

2 Nep. Ms. has *asubhābhā°*.

3 First hand *upalabdhi*; i erased; see above, p. 369, l. 15.

इत्यादिनोपचयहेतुत्वेन[1] योजनीयं ॥ इति न मनागपि भावानां परमार्थतः सिद्धिरस्ति । तस्मान्मायास्वप्नादिस्वभावाः सर्वधर्मा इति निश्चितमेतत् ॥

स्यादेतत् । यदि सर्वव्यापिनी मायोपमस्वभावता । बुद्धोऽपि तर्हि मायोपमः स्वप्नोपमः स्यात् । उक्तं चैतद्भगवत्याम्[2] । एवमुक्ते सुभूतिस्तान् देवपुत्रानेतदवोचत् । मायोपमास्ते देवपुत्राः सत्त्वाः । स्वप्नोपमास्ते देवपुत्राः सत्त्वा इति हि माया च सत्त्वाश्चाद्वयमेतदद्वैधीकारं[3] । सर्वधर्मा अपि देवपुत्रा मायोपमाः स्वप्नोपमाः । स्रोतआपन्नोऽपि मायोपमः स्वप्नोपमः । स्रोत-आपत्तिफलमपि मायोपमं स्वप्नोपमं । एवं सकृदागाम्यपि सकृदागामिफलमपि । अनागाम्यपि अनागामिफलमपि । अर्ह-न्नपि अर्हत्त्वमपि मायोपमं स्वप्नोपमं । प्रत्येकबुद्धोऽपि मायोपमः स्वप्नोपमः । प्रत्येकबुद्धत्वमपि मायोपमं स्वप्नोपमं । सम्यक्संबुद्धोऽपि मायोपमः स्वप्नोपमः । सम्यक्संबुद्धत्वमपि मायोपमं स्वप्नोपमं । यावन्निर्वाणमपि मायोपमं स्वप्नोपमं । सचेन्निर्वाणादपि कश्चिद्धर्मो[4] विशिष्टतरः स्यात्तमप्यहं मायोपमं स्वप्नोपमं [141a] वदामि[5] ॥

---

1 *upacayahetu°* = lhag-pai gtan-tshigs.

2 Quoted in *Madh-vṛtti*, Chapter XXII in fine.—Some various readings; our text is abridged.

3 advaidhīkāra, wanting in P. W.—The Ms. has °कारं not °कारः.

4 *dharmo viçiṣṭataraḥ.* = khyad-par-du hphags-pai-chos.

5 *Madh-vṛtti,* has *vadeyam.*—No final clause (*iti* = zhes-te) in Mss.—Comp. the *Mahāprajñāpāramitāsūtra* quoted by *Teitaro Suzuki*, Awakening of faith in the Mahāyāna, p. 100, n. 1: "Even Nirvāṇa is like a mirage, like a dream. Nay, if there be something superior to Nirvāṇa, I declare it is also like a mirage, like a dream."

एवं कथं तत्र सत्कारापकारयोः पुण्यपापसम्भव इति परस्याभिप्रायमाशङ्कयन्नाह । मायोपमादित्यादि ।

**मायोपमाज्जिनात्पुण्यं सद्भावेऽपि कथं यथा ।**

यदि भगवानपि मायोपमस्वभावः । तदा मायोपमाज्जिनः-
5 स्वभावाज्जिनाद्भगवतः पुण्यं सुकृतं पूजासत्कारपादवन्दनादिभिः[1]
कथं यथा कथमिवेति मन्यसे । उपलक्षणं चैतत् । पापमपि
तदपकारे कथमिवेति द्रष्टव्यं । न हि मायाकारनिर्मितपुरुष-
सत्कारापकारयोः पुण्यपापप्रसूतिर्युक्तेति परस्याभिप्रायः ।

अत्र प्रागुक्तमेवोत्तरं । तथापि परमेव परिपृच्छति । सद्भावे-
10 ऽपि कथं यथेति । सद्भावेऽपि परमार्थसत्यत्वेऽपि भगवतः
कथमिव पुण्यं । कथं यथेत्युभयथापि योजनीयं ।

अयमभिप्रायः । यथा कस्य चित्परमार्थसतो जिनात्पर-
मार्थसत्पुण्यमुपजायते । तथान्यस्य मायोपमान्मायोपममेवेत्या-
वयोर्न कश्चिद्विशेषः । इदंप्रत्ययतामात्रस्योभयसाधारणत्वात् ।
15 इति यदेवोत्तरं भवतां तदेवास्माकमपि नातिरिच्यते[2] किं
चित् । न च युक्तिसिद्धं परमार्थसद्वस्तुरूपं किं चिदस्तीति
प्रतिपादितं ॥

भवतु नाम मायोपमादपि जिनात्पुण्यं । इदं तु कथं
समाधीयत[3] इत्याह । यदि मायोपम इत्यादि ।

---

1 Ms. has: *vandanâdânâdibhiḥ*, not supported by Tib.

2 *khyad-par cuṅ-zad kyaṅ yod-pa ma yin-no* = na kaç cid viçeṣaḥ.

3 *de-lta-na yaṅ hdi-la lan ji-ltar hdebs shes.*

यदि मायोपमः सत्त्वः किं पुनर्जायते मृतः ॥ ९

अथवा अन्यथाऽवतार्यते । यदि जिनोऽपि मायोपमः ।
का वार्त्ता तर्हि सांसारिकेषु सत्त्वेषु । तेऽपि तथेति ब्रूमः ।
मायोपमास्ते देवपुत्राः सत्त्वा इति वचनात्[1] । एवं सति
महान्दोषः प्रसज्यत इत्याह । यदीत्यादि । 5

यदि मायोपमो मायास्वभावसमानधर्मः सत्त्वः प्राणी ।
तदा किं पुनर्जायते मृतः । किमिति प्रश्ने अक्षमायां वा ।
किं पुनर्जायते । उत्पद्यते । मृतो निकायसभागताच्युतः ।
का[141b]रणमत्र वक्तव्यं नैतद्युक्तमिति वा । न हि मायापुरुषो
विनष्टः पुनरुत्पद्यते । तस्मात्परमार्थसन्तो भावा इत्युपगन्तव्यं ॥ 10
नैतदुपगन्तव्यमित्याह । यावदित्यादि ।

यावत्प्रत्ययसामग्री तावन्मायापि वर्तते ।

यावत्कालं प्रत्ययानां कारणानां मन्त्रौषधादीनां सामग्री
समुदायः । समग्राणि कारणानि । तावत्कालं मायापि वर्तते ।
नार्वाग्निवर्तते । नापि ततः परं प्रवर्तते । एवं यावदविद्याकर्म- 15
तृष्णास्वभावा[2] सामग्री तावत्सत्त्वसंतानमायापि वर्तते । इदं-
प्रत्ययतायत्तवृत्तित्वात्[3] । यदि न परमार्थतः सत्त्वोऽस्ति । कथमा-
संसारं सत्त्वसंतानः प्रवर्तते । न तु मायावदचिरमेव निवर्तते ।

---

1 See supra p. 379, l. 7.

2 So Tib.—Better *avidyātṛṣṇādharma.*

3 gan rkyen-rnams gaṅ yin-pa ni hjug-pai-phyir-ro.

उक्तमेव। यावत्प्रत्ययसामग्री तावत्प्रवर्तते[1]। [2]यस्य तु तथा नास्ति स नानुवर्तत इति[3]॥

अपि च न चिरकालावस्थितिः सत्यत्वव्यवस्थानिबन्धन-मित्याह। दीर्घसंतान इत्यादि।

5 **दीर्घसंतानमात्रेण कथं सत्त्वोऽस्ति सत्यतः॥ १०**

दीर्घश्चिरकालावस्थितः। संतानः प्रवाहः। स एव केवल-मात्रं। तेन। कथमिति पृच्छति। केन प्रकारेण। सत्त्वोऽस्ति विद्यते। सत्यतः परमार्थतः॥ एतावांस्तु विशेषः। यस्य हि दीर्घकालावस्थितिहेतुप्रत्ययविशेषोऽस्ति। स दीर्घकालमनु-
10 वर्तते। यस्य तु तथा नास्ति स नानुवर्तत इति। न तु तावता सत्यमिथ्यात्वं। तस्मान्मायास्वभावत्वेऽपि न पुनर्जन्मासंभवः॥

एवं तर्हि यथा मायापुरुषवधादौ न प्राणातिपातः। तथा तदपरपुरुषवधादावपि न स्यादभिन्नस्वभावत्वादित्याह। मायापुरुष इत्यादि।

15 **मायापुरुषघातादौ चित्ताभावान्न पापकं।**

मायापुरुषस्य घातादौ मारणादौ। आदिशब्देन तस्या-दत्तादि ग्रहतः[4]। समानेऽपि निःस्वभावत्वे चित्तस्य विज्ञानस्य मायापुरुषसंताने ऽभावात्। असत्त्वात्। न पापकं नाकुशल-

---

1 Tib. = *tāvan māyā pravartate.*

2 Wanting in Tibetan; see infra l. 9.

3 Dev. has *sattvataḥ.*

4 Tib. ma-byin-par blaṅs-pa-la-sogs-pa yin-la = *adattādānādau.*

मुत्पद्यते प्राणातिपातादि । [141a] पापमेव पापकं स्वार्थे कन्विधानात्[1] । तथापि मारणाभिप्रायेण प्रहारं ददतो भवत्येवाशुभं न तु प्राणातिपातः ॥ मायापुरुषादन्यत्र, कथं प्राणातिपात इति चेत् । आह । चित्तमायेत्यादि ।

**चित्तमायासमेते तु पापपुण्यसमुद्भवः ॥ ११** 5

चित्तमेव माया चित्तमाया । तया समेते युक्ते । मायास्वभावेन चित्तेन संबद्ध इत्यर्थः । तुशब्दः पूर्वस्मादिशेषार्थः । पुण्यं च पापं च पुण्यपापे । तयोः[2] । सुकृतदुःकृतयोः समुद्भवः समुत्पत्तिः । उपकारापकारयोः ॥ इति सामग्रीविशेषात्कार्यविशेषः । यथा सत्यपि गोमयेतरजन्मनोर्वृश्चिकयोराकारसाम्ये[3] 10 कारणभेदात्स्वभावभेदः । तथेहापि मोक्षदोषप्रसङ्गः ॥

यदुक्तं चित्तमायेति तत्परो विघटयन्नाह मन्त्रादीनामित्यादि ।

**मन्त्रादीनामसामर्थ्यान्न मायाचित्तसंभवः ।**

मन्त्रादीनां । आदिशब्दादौषधादीनां । चित्तोत्पाद[4] 15 प्रत्ययसामर्थ्याद्व्यापारात् । न मायाचित्तसंभवः । न मायास्वभावं चित्तं संभवति । यथा परव्यामोहनिबन्धनानां मायाकारप्रयुक्तानां

---

[1] This clause is wanting in Tibetan.

[2] *tayoḥ*, in modern copy; wanting in Nep. and Tib.

[3] = *lci-ba daṅ gshan-las skyes-pai myu-gu-dag*.—Nep. has *jamnanoḥ*; and *var°* from a second hand.

[4] Modern copy and Nep. have here *kāraya*; but in the Nep. there is a mark that these akṣaras are out of place.

मन्त्रादीनां प्रभावेन हस्त्याद्याकारनिर्वृत्तिः । न तथा चित्तस्येति परस्य भावः ॥ एतत्परिहरन्नाह । सापि नानाविधेत्यादि ।

## सापि नानाविधा माया नानाप्रत्ययसंभवा ॥ १२

अपिशब्दोऽवधारणार्थो भिन्नक्रमश्च[1] । सा माया नानाविधैव नानाप्रकारैव अतीव[2] नानाप्रत्ययसंभवा । नानाप्रत्ययाद्‌नेकप्रकारकारणात्संभव उत्पादो यस्याः सा तथोक्ता ॥ अयमभिप्रायः । यदि माया मायेति शब्दसाम्यमस्ति । तथापि न तत्कारणस्याप्यभेदो मायास्वभावत्वेऽपि कार्यस्य नानास्वभावत्वात् । न ह्येकस्मिन् कार्ये किं चित्कारणं[3] दृष्टमिति कार्यशब्दसाम्यात्सर्वत्र तदेव प्रकल्पयितुं युज्यते । अपि तु क्व चिदेव[4] कस्य चित्सामर्थ्यं शब्द[142b]साम्येऽपि स्वभावभेदात् । एतदेवोपदर्शयन्नाह । नैकस्येति ।

## नैकस्य सर्वसामर्थ्यं प्रत्ययस्यास्ति कुत्र चित् ।

नैकस्य क्व चिदुपलब्धसामर्थ्यस्य प्रत्ययस्य कारणस्य हेतोः । सर्वसामर्थ्यं सर्वस्मिन् कार्ये सामर्थ्यं शक्तिरस्ति संभवति । क्व चिद्दृष्टमिति कृत्वा कुत्र चिदिति कस्मिंश्चित्समये देशे काले वा ।

---

1 According to Tib. *bhinnakramo vā.*

2 So Tib. (*gin-tu*) and Nep old reading; new reading and modern copy *ata eva.*

3 Tib. hbras-bu gcig-pa rgyu-gcig mthoṅ-bas = *ekasmin kārya ekaṁ kāraṇam.*

4 So Maith. supported by Tib. — Nep. *kvacidaiva kasya* = *kvacid eva-kasya.*

| Title | Rs. | As. |
|---|---|---|
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6 Vol. II, Fasc. 1-2 @ /6/ each ... ... ... ... | Rs. [illegible] | 6 |
| Padumawātī, Fasc. 1-4 @ 2/ ... ... ... ... | 8 | 0 |
| Pariçiṣṭa Parvan, (Text) Fasc. 1-5 @ /6/ each ... ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1-7 @ /6/ each ... ... ... | 2 | 14 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1-5 @ /6/ each ... ... | 1 | 12 |
| Ditto (English) Part II, Fasc. 1 ... ... ... | 1 | 8 |
| Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... ... ... ... | 1 | 0 |
| Parāçara Smṛti, (Text) Vol. I, Fasc. 1-8 Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /6/ each ... ... ... ... ... | 7 | 8 |
| Parāçara, Institutes of (English) ... ... ... ... | 0 | 12 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ /12/ each ... ... | 2 | 4 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /6/ each Fasc. ... ... ... | 12 | 6 |
| Sāṇkhya Sūtra Vṛtti, (Text) Fasc. 1-4 @ /6/ each ... ... | 1 | 8 |
| Ditto (English) Fasc. 1-3 @ /12/ each ... ... | 2 | 4 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... ... | 2 | 4 |
| Suddhi Kaumudi, Fasc. 1-3 ... ... ... ... | 1 | 2 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ ... ... ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 22-45 ... ... ... | 9 | 0 |
| Tāṇḍya Brāhmaṇa, (Text) Fasc. 1-19 @ /6/ each ... ... | 7 | 2 |
| Trantra Vartika (English) Fasc. 1-4 @ /12/ ... ... ... | 3 | 0 |
| *Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1-9, Vol. II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /6/ each ... ... ... ... | 14 | 4 |
| Tattvarthadhigama Sutrom, Fasc. 1-3 ... ... ... | 1 | 2 |
| Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1-3 @ /6/ ... ... ... | 1 | 2 |
| Upamita-bhava-prapañca-kathā (Text) Fasc. 1-8 @ /6/ each ... | 3 | 0 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ /12/ ... ... | 4 | 8 |
| Vallala Carita, Fasc. 1 ... ... ... ... | 0 | 6 |
| Varsa Krya Kaumudi, Fasc. 1-6 @ /6/ ... ... ... | 2 | 4 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /6/ each | 4 | 8 |
| Vidhano Parigata, Fasc. 1-7 ... ... ... | 2 | 10 |
| Vivādaratnākara, (Text) Fasc. 1-7 @ /6/ each ... ... ... | 2 | 10 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1-6 ... ... ... | 2 | 4 |

## *Tibetan Series.*

| Title | Rs. | As. |
|---|---|---|
| Pag-Sam Ṭhi S'iñ, Fasc. 1-4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... ... | 14 | 0 |
| Rtogs *brjod dpag hkhri* S'iñ (Tib. & Sans.) Vol. I, Fasc. 1-5; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ... ... | 10 | 0 |

## *Arabic and Persian Series.*

| Title | Rs. | As. |
|---|---|---|
| *Ālamgīrnāmah, with Index, (Text) Fasc. 1-13 @ /6/ each... ... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1-3 @ /12/ ... ... | 2 | 4 |
| Āin-i-Akbarī, (Text) Fasc. 1-22 @ 1/ each ... ... ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 1/12/ each ... ... ... ... | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/ each ... ... | 37 | 0 |
| Ditto English Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-2 @ 1/ each | 10 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 8 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /6/ each ... ... | 7 | 2 |
| Catalogue of Arabic Books and Manuscripts 1-2 ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/ each ... ... ... ... ... ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/ each ... ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1-4 @ /12/ each ... ... ... ... ... ... | 3 | 0 |
| Futūḥ-uṣh-Shām of Wāqidī, (Text) Fasc. 1-9 @ /6/ each ... ... | 3 | 6 |
| Ditto of Azādī, (Text) Fasc. 1-4 @ /6/ each ... ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ /12/ each ... ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /6/ each ... ... | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /6/ each ... ... | 13 | 2 |
| Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /6/ each ... ... | 1 | 14 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Muntakhabu-t-Tawārīkh, (Text) Fasc. 1-15 @ /6/ each ... Rs. 5 10
Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 2 Indexes; Vol. III, Fasc. 1 @ /12/ each ... ... 12 0
Muntakhabu-l-Lubāb, (Text) Fasc. 1-19 @ /6/ each ... ... 7 2
Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1-6 @ /6/ each ... ... 2 4
Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... 0 6
Niẓāmī's Khiradnāmah-i-Iskandarī, (Text) Fasc. 1-2 @ /12/ each ... 1 8
Riyāẓu-s-Salāṭīn, (Text) Fasc. 1-5 @ /6/ each ... ... ... 1 14
Ditto Ditto (English) Fasc. 1-5 ... ... ... 3 12
Tabaqāt-i-Nāṣirī, (Text) Fasc. 1-5 @ /6/ each ... ... ... 1 14
Ditto (English) Fasc. 1-14 @ /12/ each ... ... 10 8
Ditto Index ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1-7 @ /6/ each... 2 10
Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1-6 @ /6/ each... 2 4
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
Wis o Rāmin, (Text) Fasc. 1-5 @ /6/ each ... ... ... 1 14
Ẓafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /6/ each .. 6 6
Tuzuk-i-Jahāngīrī (Eng.) Fasc. 1 ... ... ... ... 0 12

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... ... 20 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) & 1901 (7), 1902 (9), 1903 (8), @ 1/8 per No. to Members and @ 2/per No. to Non-Members.

*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N.S., Vol. I, No. 1, 1905, @ 1-8 per No. to members and Rs. 2 per No. to non-members. ... ...
5. Centenary Review of the Researches of the Society from 1784–1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... ... 4 0
   Theobald's Catalogue of Reptiles in th Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... 4 0
6. Anis-ul-Musharrahin ... ... ... ... ... 3 0
7. Catalogue of Fossil Vertebrata ... ... ... ... 3 0
8. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
9. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... 32 0
10. Jawāmiu-l-'ilm ir-riyāẓi, 168 pages with 17 plates, 4to. Part I ... 2 0
11. Khizānatu-l-'ilm ... ... ... ... ... 4 0
12. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
13. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
14. Sharaya-ool-Islām ... ... ... ... ... 4 0
15. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
16. Ditto Grammar " " ... ... 8 0
17. Kaçmiraçabdāmṛta, Parts I and II @ 1/8/ ... ... ... 3 0
18. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1 0
19. Memoir on maps illustrating the Ancient Geography of Kaśmir, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-29 @ 1/ each ... ... 29 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society" only.

14-7-05.

**Books are supplied by V.-P.P.**

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1139.

# बोधिचर्यावतारपञ्जिका ।

# PRAJÑĀKARAMATI'S COMMENTARY TO THE BODHICARYĀVATĀRA OF ÇĀNTIDEVA.

EDITED WITH INDICES




BY
LOUIS DE LA VALLÉE POUSSIN,
PROFESSOR OF SANSKRIT IN THE UNIVERSITY OF GHENT.

FASCICULUS V.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1907.

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
15, PICCADILLY, LONDON, W., AND MR. OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*[C]omplete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each ... | 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ /10/ each ... ... | 1 | 14 |
| *Agni Purāṇa, Fasc. 3–14 @ /10/ each ... ... ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV, Fasc. 1–8 @ /10/ each ... ... ... | 14 | 6 |
| [illegible] Bhashya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| [illegible] of Sāṇḍilya, (English) Fasc. 1 @ 1/- ... ... | 1 | 0 |
| [illegible]rikā Prajñāpāramitā, Fasc. 1–6 @ /10/ each ... ... | 3 | 12 |
| *Atharvana Upanishad, Fasc. 2-[illegible] @ /10/ each ... ... | 2 | 8 |
| Açvavaidyaka, Fasc. 1–5 @ /10/ each ... ... | [illegible] | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–5 @ 1/ each ... ... ... ... | [illegible] | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1–2 @ 1/- each ... | [illegible] | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2 @ /10/ each ... ... | 1 | 4 |
| Baudhāyana Śranta Sūtra, Fasc. [illegible] @ /10/ each ... | 1 | 14 |
| *Bhamati, Fasc. 4-8 @ /10/ each ... ... | 3 | 2 |
| Bhāṭṭa Dipikā Vol. I, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Brahma Sutra, Fasc. 1 @ /10/ each ... ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1–4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1–6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–4 @ /10/ each ... | 2 | 8 |
| Çatadūṣaṇī, Fasc. 1–2 @ /10/ each ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1-5, Vol. III, Fasc. 1–7 @ /10/ each ... ... ... | 11 | 14 |
| Çatasāhasrikā-prajuāpāramitā, Part I, Fasc. 1–12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmaṇi, Vols. II, Fasc. 1–25; Vol. III. Part I, Fasc. 1–18. Part II, Fasc. 1–10, Vol IV, Fasc. 1–5 @ /10/ each ... | 36 | 4 |
| Çlokavartika, (English) Fasc. 1–5 @ 1/4/ each ... ... | 6 | 4 |
| *Çrauta Sūtra of Āpastamba, Fasc. 6-17 @ /10/ each ... ... | 7 | 8 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1–7; Vol. II, Fasc. ... 1–4; Vol. III, Fasc. 1–4 @ /10/ each; Vol 4, Fasc. 1 ... ... | 10 | 0 |
| Çri Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dān Kriyā Kaumudi, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1–7 @ /10/ each ... | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1–2 @ /10/ each ... ... | 1 | 4 |
| Gobhiliya Gṛihya Sutra, Fasc. 1-12 @ /10/ each ... ... | 7 | 8 |
| Kala Viveka, Fasc. 1–7 @ /10/ each ... ... .. | 4 | 6 |
| Kātantra, Fasc. 1–6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ 1/4/ each ... ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 1–9 @ /10/ each ... ... ... | 5 | 10 |
| Lalita-Vistara, (English) Fasc. 1–3 @ 1/- each ... ... | 3 | 0 |
| *Lalitavistara, Fasc. 3-6 @ /10/ each ... ... ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1–11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradipodyota, Vol. I, Fasc. 1–9; Vol. II, Fasc. 1–12 Vol. III, Fasc. 1–4 @ /10/ each ... ... ... | 15 | 10 |
| [illegible] Saṅgraha, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| *Markandeya Purana, Fasc. 4-7 @ /10/ each ... ... ... | 2 | 8 |
| *[illegible] Darpaṇa, Fasc. 3-19 @ /10/ each ... | 10 | 10 |
| [illegible], Fasc. 1-[illegible] @ /10/ each ... | [illegible] | 12 |
| [illegible], Vol. IV, Fasc. 1-[illegible] @ /10/ each ... | [illegible] | [illegible] |
| Fasc. [illegible] @ /10/ each ... | [illegible] | [illegible] |

दृष्टमिष्टं वा। ततश्च का चिन्माया मन्त्रादिसामर्थ्यप्रतिलब्ध-
स्वभावा। का चित्पुनरनादिसंसारप्रवृत्तमायाख्याऽविद्यादिप्रभाव-
प्रवर्तिता। तस्मान्न सर्वासु मन्त्रादिसामर्थ्यमिति।

एतत्सर्वं लोकव्यवहारानुगतं कल्पनानिर्मितं सांवृतं वस्तु-
तत्त्वमुपादाय समुत्थितं। न तु परमार्थतः। परमार्थदशायां 5
जननमरणोत्पादनिरोधहेतुफलभावाभावादिकल्पनाया अभा-
वात्। प्रकृतिनिर्वृतत्वात्सर्वधर्माणामिति॥

एतदसहमानः परः पुनरन्यथा प्रसञ्जयन्नाह। निर्वृत
इत्यादि।

## निर्वृतः परमार्थेन संवृत्या यदि संसरेत्॥१३ 10

निर्वृतः स्वभावशून्यत्वादुत्पादनिरोधरहितः। परमार्थेन
परमार्थसत्यतः प्रकृतिनिर्वाणतया ऽऽदिशान्तत्वात्। यदि संवृत्या
संवृतिसत्येन काल्पनिकत्वेन संसरेत्। जातिजरामरणादियोगी
भवेत्। तदायं महान्विरोधः स्यादित्याह। बुद्धोऽपि संसरे-
देवमित्यादि। 15

## बुद्धोऽपि संसरेदेवं ततः किं बोधिचर्यया।

एवमभ्युपगम्यमाने बुद्धोऽपि सर्वावरणप्रहाणतो निर्वृतोऽपि
संसरेत्[1]। जन्मादिभाग्भवेत्। यत एवं। ततस्तस्मात्कारणात्।
किं बोधिचर्यया। बोधये बुद्धत्वाय चर्या करचरणशिरःप्रदा-
नाद्यनेकदुःकरव्रतलक्षणा। तया किं। न किंचित्प्रयोजनं। 20

[1] So Tib.—Nep. has *saṁsāre*.

ज्ञानमात्रेण नैरात्म्यात्। अथ यदि सर्वसांसारिकधर्मनिवृत्तये सर्वगुणसमुदयात्मकतथागतत्वसमाश्रये[1] न समाश्रीयते[2]। तथापि न सांसारिकधर्म[148a]निवृत्तिः स्यात्। किं कारणमित्याह। संसारनिवृत्तिरिति भावः। तदनुसारेण प्राक्प्रत्ययसामग्र्याहितं। पुनरपि निवर्तनात्। प्रत्ययानामित्यादि।

5

> प्रत्ययानामनुच्छेदे मायाप्युच्छिद्यते न हि।
> प्रत्ययानां तु विच्छेदात्संवृत्यापि न संभवः ॥ १४

प्रत्ययानां कारणानां। अनुच्छेदेऽविनाशे। दीर्घकालात्। मायापि न केवलं संसार इति। अपिशब्दः। नैवोच्छिद्यते

10 न निवर्तते। प्रत्ययानां कारणानां तु विच्छेदात्। निवृत्तेः। संवृत्यापि काल्पनिकव्यवहारेणापि [न] संभवो न संसरणं[3]। प्रत्ययानां समुच्छेदः पुनस्तत्त्वाभ्यासादविद्यानिरोधादिक्रमेण वेदितव्यः।

तदुक्तमार्यशालिस्तम्बसूत्रे[4]। एवमुक्ते मैत्रेयो बोधिसत्त्वो

15 महासत्त्व आयुष्मन्तं शारिपुत्रमेतदवोचत्। यदुक्तं भगवता धर्मस्वामिना सर्वज्ञेन। यो भिक्षवः प्रतीत्यसमुत्पादं पश्यति स धर्मं पश्यति। यो धर्मं पश्यति स बुद्धं पश्यति। तत्र कतमः

---

1 So Nep. ° *āsṛta* = brten-te (See *Mahāvastu* I. 456, *Lalita* 210. 2.)

2 Nep. *samāsrīyate, samāsrayeṇa.*

3 *na* wanting in both Mss.—Tib. *hkhor-ba srid-pa ma yin-no* = na saṁsara-ṇasaṁbhavaḥ.

4 See *Çikṣās.* and for this passage *Madh. vṛtti* (Bibl. Buddh.) p. 6. n. 2.

प्रतीत्यसमुत्पादो नाम । यदिदमविद्याप्रत्ययाः संस्काराः ।
संस्कारप्रत्ययं विज्ञानं । विज्ञानप्रत्ययं नामरूपं । नामरूपप्रत्ययं
षडायतनं । षडायतनप्रत्ययः स्पर्शः । स्पर्शप्रत्यया वेदना । वेदना-
प्रत्यया तृष्णा । तृष्णाप्रत्ययमुपादानं । उपादानप्रत्ययो भवः ।
भवप्रत्यया जातिः । जातिप्रत्यया जरामरणशोकपरिदेवदुःख-
दौर्मनस्योपायासाः । [एवमस्य केवलस्य महतो दुःखस्कन्धस्य 5
समुदयो भवति । तत्र अविद्यानिरोधात्संस्काराः][1] निरुध्यन्ते ।
[पेयालं ।] एवमस्य केवलस्य[2] महतो दुःखस्कन्धस्य निरोधो भवति ।
अयमुच्यते प्रतीत्यसमुत्पादः ॥ पेयालं ॥ य इमं प्रतीत्यसमुत्पादं
सततसमितं निर्जीवं[3] यथावदविपरीतमजातमभूतमसंस्कृतम-
प्रतिघमनालम्बनं[4] शिवमभयमनाहार्यमव्युपशमस्वभावं[5] पश्यति । 10
स धर्मं पश्यति । यस्तु[6] एवं सततसमितं यावदव्युपशमस्वभावं
धर्मं पश्यति । सोऽनुत्तरं[7] धर्मशरीरं बुद्धं पश्यति ॥ पेयालं ॥
[148b] तत्राविद्या कतमा । एतेषामेव षण्णां धातूनां यैकसंज्ञा[8]
पिण्डसंज्ञा नित्यसंज्ञा ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा आत्मसंज्ञा
सत्त्वसंज्ञा[9] जीवसंज्ञा जन्तुसंज्ञा मनुजसंज्ञा मानवसंज्ञा 15

---

1 From Tib.—Modern copy: ° *upāyāsātāç canirudhyante*; Nep. *upā yāsāç ca*; but the wanting passage is not supplied in margin.

2 Wanting in Tib.

3 Tib. has: *ajīvam, nirjīvam.*

4 From other sources: *aviparītam abījam* (wanting in Tib.)

5 From other sources: *abhayam avyayam* (Wanting in Tib.)

6 So Nep.

7 So Nep.—Read: *anuttara.*°

8 So Nep. °Cp. *M. Vyut.* § 207.

अहंकारममकारसंज्ञा । एवमादि विविधमज्ञानमिदमुच्यते
ऽविद्या । एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्तन्ते
तत्र ये रागद्वेषमोहा विषयेष्वमी अविद्याप्रत्ययाः संस्कारा
इत्युच्यन्ते । वस्तुप्रतिविज्ञप्तिर्विज्ञानं । चत्वारि महाभूतानि
5 चोपादानानि[1] रूपमेकध्यरूपं[2] । विज्ञानसहजाश्चत्वारोऽरूपिण
उपादानस्कन्धा[3] नाम । तन्नामरूपं । नामरूपसंनिश्रितानीन्द्रि-
याणि[4] षडायतनं । त्रयाणां धर्माणां संनिपातः स्पर्शः ।
स्पर्शानुभवो वेदना । वेदनाध्यवसानं तृष्णा । तृष्णा-
वैपुल्यमुपादानं । उपादाननिर्जातं पुनर्भवजनकं कर्म भवः ।
10 भवहेतुकः स्कन्धप्रादुर्भावो जातिः । जात्यभिनिर्वृत्तानां
स्कन्धानां परिपाको जरा । स्कन्धविनाशो मरणं । म्रियमाणस्य
संमूढस्य [5]साभिष्वङ्गस्यान्तर्दाहः शोकः । शोकोत्थलपनं[6] परि-
देवः । पञ्चविज्ञानसंप्रयुक्तमसातानुभवनं दुःखं । दुःखमनसि-
15 कारसंप्रयुक्तं मानसं दुःखं दौर्मनस्यं । ये चान्य एवमादय उप-
क्लेशा इम उपायासा इत्युच्यन्ते ।

तत्र महान्धकारार्थेनाविद्या । अभिसंस्कारार्थेन संस्काराः ।
विज्ञापनार्थेन विज्ञानं । मननार्थेन[7] नामरूपं । आपद्वारार्थेन[8]

---

1 Tib. hbyuṅ-ba-chen-po bzhi-po ñe-bar-gzuṅ-nas gzugs gcig-po ni gzugs-so = *catvāri mahābhūtāny upādāya rūpam....*

2 Nep. *ekadhyarūpam* modern copy *evādhya.*

3 = *ne-bar-len-pai phuṅ-po.*

4 °*nisṛtāni*; corrected in margin °*śri*°.

5 chags-daṅ-bcas-pa = *sābhiṣvaṅgasya*, correct.

6 *uttha* = byuṅ-ba. 7 See *Çikṣās.*, 251, n. 2 (manyanā).

8 So Nep.—Modern copy *āpaddvāra*°—Tib. skye-bai sgoi-phyir = *janmadvārārthena*; but see VI. 101.

षड़ायतनं। स्पर्शनार्थेन स्पर्शः। अनुभवनार्थेन वेदना। परि-
तर्षणार्थेन तृष्णा। उपादानार्थेनोपादानं। पुनर्भवजननार्थेन
भवः। स्कन्धप्रादुर्भावार्थेन जातिः। स्कन्धपरिपाकार्थेन जरा।
विनाश[144a]र्थेन मरणं। शोचनार्थेन शोकः। वचनपरिदेव-
नार्थेन परिदेवः। कायसंपीड़नार्थेन दुःखं। चित्तसंपीड़नार्थेन
दौर्मनस्यं। उपक्लेशनार्थेनोपायासाः। इति विस्तरः॥ 5

एवमुपदर्शितप्रत्ययानामनुच्छेदे[1] संसारो[2] ऽविकलः प्रव-
र्तते। द्वादशाङ्गप्रतीत्यसमुत्पादस्यैव संस्कारत्वात्। यदाह्ड-
राचार्यपादाः।

यथाक्षेपं क्रमाद्वृद्धः[3] संतानः क्लेशकर्मभिः।
परलोकं पुनर्यातीत्यनादि भवचक्रकं। 10
स प्रतीत्यसमुत्पादो द्वादशाङ्गस्त्रिकाण्डकः[4]। इति॥

प्रत्ययानां पुनरुच्छेदे सर्वथैव संसरणं न स्यात्। कारणवै-
कल्यात्। ततश्च बुद्धोऽपि संसरेदेवमित्येतच्च प्रसज्यत इति॥

एवं तावत्सौत्रान्तिकादिचोद्यमुदस्य योगाचारविप्रतिपत्ति-
निराकरणाय तन्मतेन दूषणमुद्भावयन्नाह। यदा न भ्रान्ति- 15
रपीत्यादि।

यदा न भ्रान्तिरप्यस्ति माया केनोपलभ्यते॥१५॥

---

1 Tib. rkyen-rnams rgyun-ma-chad-na.

2 Nep. old reading: *saṁskāro*; Nep. new hand *saṁsāro*—Tib. has *hdu-byed.*

3 *vṛddhaḥ* = skyes-nas = jāta.

4 Kleçakāṇḍa, karma°, duḥkha°; compare the three *vartman*, supra p. 351, n. 2, and *Congrès d'Alger, Notes sur le Pratītyasamutpāda.*

यदा सर्वं जगन्मायात्मकतया समावृत्याभ्युपगतं मध्यमक-वादिभिः । मायास्वभावसंवित्तिरूपिणी बुद्धिरपि भवतां नास्ति बाह्यवत् । तदा माया केनोपलभ्यते । केन प्रतीयते तद्ग्राहक-वस्तुज्ञानमन्तरेण । नैव केनचिदित्यर्थः । यस्य पुनः स्वचित्त-5 मेव परमार्थसद्ग्राह्यरूपतया भ्रान्तं तथा प्रतिभासते । न तस्यायं दोष इति भावः ॥

एवं[1] निराकर्तुमाह । यदा मायैवेत्यादि ।

**यदा मायैव ते नास्ति तदा किमुपलभ्यते ।**

यदा मायैव ग्राह्यतया हस्त्याद्याकारप्रवृत्त्या तव विज्ञान-10 वादिनो नास्ति । चित्तमात्रं जगदभ्युपगच्छतो बहिरर्थाभावात् । तदा किमुपलभ्यते । तदा किमिह प्रतिभासते । बहिरर्था-भावाद्देशादिविच्छेदेन प्रतिभासो न युक्त इत्यर्थः ॥ अथ पर-स्याभिप्रायमाशङ्क्याह चित्तस्यैव स इत्यादि ।

**चित्तस्यैव स आकारो यद्यप्यन्योऽस्ति तत्त्वतः ॥ १६**

15 उक्तमत्र स्वचित्तमेव कल्पितरूपत[144b]या भ्रान्तं हस्त्याद्याकारं प्रतिभासत इति ॥ उक्तमेव । किं तु यद्यपि चित्तस्यैव ज्ञान-स्यैव स इति देशादिविच्छेदेन ग्राह्यतया प्रतिभासमान आकारो निर्भासः । अन्य इत्यपर भ्रान्तराद्ग्राहकाच्चित्ताका-रात् । अस्ति विद्यते । तत्त्वतो वस्तुतः ॥ यद्यपीत्यभ्युपगम्योक्तं ।
20 तथापि नैतत्संगच्छत इत्याह । [चित्तमेव यदा मायेत्यादि][2] ।

---

[1] So Ms.-etan ni° ?　　　　[2] From Tib. only.

चित्तमेव यदा माया तदा किं केन दृश्यते ।

चित्तमेव विज्ञानमेव वेदकतया स्वीकृतं । यदा माया मान्या । न हि वेदकचित्तव्यतिरिक्ता काचिदन्या माया नाम । तदात्मतया । तस्यास्तथाप्रतिभासोपगमात् । तदा किं केन दृश्यते । किं केन प्रतीयते । दर्शनमेव हि केवलमस्ति न दृश्यं । दृश्यमन्तरेण दर्शनमपि न स्यात् । दृश्यापेक्षत्वात्तस्य । अतो न केन चित्किंचिद्दृश्येत । इत्यान्ध्यमशेषस्य जगतः प्राप्तमिति भावः ॥ ननु स्यादेवैतत् । यदि ज्ञानस्यात्मसंवेदनं न स्यात् । यावता स्वसंवेदनतया स्वरूपं संवेदयत्तदभिन्नं मायादिप्रतिभासमपि वेदयेत् । तथा च सति न काचित्क्षतिः ॥ इति विज्ञानवादिनोऽभिप्रायमाशङ्क्याह । उक्तं चेत्यादि ।

उक्तं च लोकनाथेन चित्तं चित्तं न पश्यति[1] ॥ १७

स्वभावशून्यमेव सर्वं जगद्यदा युक्तितः प्रतिपादितं । तदा कः कस्य स्वभावो वस्तुत इति कस्य केन वेदनं स्यात् । उक्तं च भगवता । सर्वधर्माः शून्याः । शून्यतालक्षणं चित्तं । सर्वधर्मा विविक्ताः । विविक्तालक्षणं चित्तमिति ॥ किं च । उक्तं च कथितं च । लोकनाथेन । लोकानां सर्वसत्त्वानां नाथेन प्रभुणा बुद्धेन भगवता । किमुक्तं । चित्तं चित्तं न पश्यतीति । चित्तं

[1] On the *svasaṃvedana*, see Muséon, N.S., II, p. 177.

स्वात्मानं न जानाति । सत्यपि वस्तुत्वे स्वात्मनि कारित्र-विरोधात्[1] । कथमिव । न च्छिनत्ति यथात्मानमसिधारा ।

## न च्छिनत्ति यथात्मानमसिधारा तथा मनः ।

यथा सुतीक्ष्णाप्यसिधारा खड्गधारा तदन्यवदात्मानं
5 स्वकायं न च्छिनत्ति न विघाटयति । स्वा[145a]त्मनि क्रिया-विरोधात् । तथा मनः । असिधारावच्चित्तमपि स्वात्मानं न पश्यतीति योज्यं । तथा हि न तदेवैकं ज्ञानं वेद्यवेदक-वेदनात्मस्वभावत्रयं युक्तं[2] । एकस्य निरंशस्य त्रिस्वभावता-ऽयोगात्[3] ॥

10 तत्रेदमुक्तं । आर्यरत्नचूडसूत्रे[4] । स[5] चित्तं परिगवेषमाणो नाध्यात्मं चित्तं समनुपश्यति । न बहिर्धा चित्तं समनुपश्यति । न स्कन्धेषु चित्तं समनुपश्यति । न धातुषु चित्तं समनुपश्यति । नायतनेषु चित्तं समनुपश्यति । स चित्तमसमनुपश्यंश्चित्तधारां पर्येषते । कुतश्चित्तस्योत्पत्तिरिति । आलम्बने सति चित्त-
15 मुत्पद्यते । तत्किमन्यच्चित्तमन्यदालम्बनं । अथ यदेवालम्बनं तदेव चित्तं । यदि तावदन्यदालम्बनमन्यच्चित्तं तद्द्विचित्तता भवि-

---

1 Kāritra, *M. Vyut* 245 (295).

2 So Ms.—Tib. = *naikasmin jñāne* .... ° *trayam yuktam*.

3 ° *bhāvatā'yogāt*, so Ms.

4 See *Çikṣās.* Index.—This very passage (° paripṛcchā) occurs in the *Madhyamakavṛtti* (Bibl. Buddh.) p. 62, 4, and has been translated by Burnouf *Intr.* p. 561;—also in *Çikṣās.* 235.1 (See note in loco).

5 Mss. *svacittam*.—Tib. *de sems rab-tu-tshol-ba*.

श्यति[1]। अथ यदेवात्मनं तदेव चित्तं। तत्कथं चित्तं चित्तं पश्यति[2]। न हि चित्तं चित्तं समनुपश्यति। तद्यथा न तयैवासिधारया सैवासिधारा शक्यते छेत्तुं। न तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं स्प्रष्टुं शक्यते। [3]एवमेव तेनैव चित्तेन तदेव चित्तं द्रष्टुमिति विस्तरः॥ 5

अथ चित्तमात्रवादिनः स्वात्मनि [क्रिया]विरोधं[4] विघटयितुं स्वपक्षप्रसाधनाय दृष्टान्तमुद्भावयन्नाह। आत्मभावमित्यादि।

**आत्मभावं यथा दीपः[5] संप्रकाशयतीति चेत्॥ १८**

आत्मभावं स्वस्वरूपं[6]। यथा दीपः। प्रदीपः। संप्रकाशयति 10 द्योतयति। यथा हि किलान्धकारावृतघटादिवस्तुप्रतिपत्तये प्रदीप उपादीयते। न तथा प्रदीपप्रकाशनाय प्रदीपान्तरं। अपि तु घटादि प्रकाशयन्नेवात्मानमपि प्रकाशयति॥ तथा प्रकृतेऽपि स्वसंवेदने वेदितव्यं। न चापि क्वचिद्विरोधो दृष्ट इति सर्वत्र योजनीयं। तस्मात्प्रदीपवदविरोध एवेति चेत्। 15 यद्येवं मन्यसे। तदा नैवं वक्तव्यं। कुत इत्याह। नैवेत्यादि।

---

1 *Sems de gñis-su hgyur-ro.*

2 *Sems de-ltar mthoṅ-bar hgyur-te. Sems-kyis sems mthoṅ-bar mi ruṅ-ṅo.*

3 *Madh. vṛtti* has: *evam eva na tenaiva .... çakyaṁ draṣṭum*, and our Tib. too.

4 *kriyā* is wanting in Mss. But Tib. has: *raṅ-la byed-pa hgal-ba.*

5 This is a capital instance in favour of the *svasaṁvedana*, see *Sarvadar. çanas.* (Muséon, II, p. 177 and foll.)

6 *raṅ-gi dṅos ni raṅ-gi raṅ-bshin yin-te.*

**नैव प्रकाश्यते दीपो यस्मान्न तमसावृतः।**

नैव प्रकाश्यते। घटादिवन्नैवोद्योत्यते। दीपो यस्मान्न
तमसावृतो [145b] नान्धकारपिहितः। विद्यमानस्यावरणस्याप-
नयनं प्रकाशनं। ततो युक्तं घटादीनां प्रकाशनं। तेषां प्राग्वि-
5 द्यमानत्वात्। नैवं प्रदीपस्य तस्य प्रागविद्यमानत्वात्। न
चाविद्यमानस्य प्रकाशनं युक्तमसत्त्वात्। तस्मान्नैव प्रकाश्यते
दीपः। इति विसदृशत्वान्न प्रदीपदृष्टान्तात्साध्यसिद्धिः॥

स्यादेतत्। आत्मभावमित्यादिना नैतदभिधीयते यदा-
त्मानं घटवत्तमसावृतं प्रकाशयति दीपः। अपि तु तत्स्वभावं
10 प्रति परनिरपेक्षतामात्रमस्याभिधीयते। एतदेवोपदर्शयन्नाह।
न हीत्यादि।

**न हि स्फटिकवन्नीलं नीलत्वेऽन्यमपेक्षते॥ १९**
**तथा किंचित्परापेक्षमनपेक्षं च दृश्यते।**

हिरिति यस्मात्। यथा स्फटिकोपलः स्वयमनीलः सन्।
15 नीलत्वे नीलगुणोत्पत्तिनिमित्तमन्यमुपाधिं नीलपत्रादिसंनि-
धिमपेक्षते। तथा स्वयमेव यद्वस्तु नीलं तदपि न नीलत्वेऽन्य-
मुपाधिमपेक्षते। तथा तेन प्रकारेण किंचिद्घटादिकं परापेक्षं
प्रदीपाद्यपेक्षं प्रकाश्यं दृश्यते। किंचित्पुनः प्रदीपादिकमनपेक्षं
च। स्वयं प्रकाशात्मकं दृश्यते। उपलभ्यते। एतावन्मात्रमेव
20 विवक्षितं।

एवं विज्ञानवादिनोपदर्शिते विशेषे सिद्धान्तवादी नील-मेव तावन्नीलत्वे परनिरपेक्षं दृष्टान्तत्वेनोपदर्शितं प्रतिषेधय-न्नाह । अनीलत्व इत्यादि ।

**अनीलत्वे न तन्नीलं कुर्यादात्मानमात्मना ॥ २०[1]**

अयमपि न सदृशो दृष्टान्तः । यतो नीलमपि न नीलत्वे 5 स्फटिकवन्निरपेक्षं । तद्भावं प्रति स्वहेतुप्रत्ययापेक्षत्वात् । कदा पुनरिदमनपेक्षं स्यात् । यदि तदनीलमेव स्वहेतोरुत्पद्येत । पुनस्तद्भावे परनिरपेक्षं स्वयमेव नीलमात्मानं कुर्यात् । न चैत-दस्ति । यतो ऽनीलत्वे नीलगुणरहितत्वे सति । नेति निषेध-यति । तदिति नीलाभिमतं वस्तु । नीलं नीलगुणयुक्तमात्मानं 10 स्वरूपमा[146a]त्मना स्वयमेव न कुर्यात् । न कर्तुं शक्नोति पूर्ववत्स्वस्मिन् क्रियाविरोधात् । तस्मान्न नीलस्यापि परानपे-क्षता नीलत्वं प्रति स्फटिकवत् ॥

तथा हि स्फटिकोपलोऽपि वस्तुतोऽवस्थितरूप एवोपाधि-संनिधौ न नीलोपरागमनुभवति । अपि तु सर्वस्योपादानक्ष- 15 णात्[2] । नीलोपाधिविशेषसहकारिणश्च पूर्वस्वरसनिरोधात् ।

---

[1] Minaev has:

tathā kiṁ cit parāpekṣam anapekṣaṁ ca dṛçyate ।
anīlatve na tan nīlaṁ nīlahetur yathekṣyate ॥ १० ॥
nīlam eva hi ko nīlaṁ kuryād ātmānam ātmanā ।
anīlatve na tan nīlaṁ kuryād ātmānam ātmanā ॥ ११ ॥

In the Ms. Burn. 90, 20B and 21A are wanting; *also in the Tibetan translation* (Mdo, XXVI, fol. 30 a6).

[2] So Ms.—sarvasya is certainly wrong; °*sv*° is correct (see following note).

अन्य एव नीलगुणोपरक्तः स्फटिकोपल उत्पन्नः[1] इति सिद्धान्तः। तस्मात्साधारणमनयोस्तत्त्वं प्रति हेतुप्रत्ययाधीनत्वं। इति प्रकृतेऽपि साध्ये न कश्चिद्विशेषः॥

ननु प्रियमिदमनुष्ठितं प्रियेण। यस्मात्सजडस्वभावव्यावृत्ता-
5 त्मतया स्वहेतुप्रत्ययात्। उत्पत्तिरेव ज्ञानस्य। प्रकाशान्तर-
निरपेक्षस्यात्मप्रकाशता स्वसंवेदनमुच्यते। एतदेव त्वयापि नील-
स्वरूपपरामर्शेन[2] समर्थितं। एतावन्मात्रेण प्रदीपोऽपि दृष्टा-
न्तीकृतः। न पुनरस्माभिः कर्मकर्तृक्रियाभेदेन ज्ञानस्यात्मप्रका-
शनमिष्यते। एकस्य यतः कर्मादिस्वभावत्रयस्यायोगात्। तत्र
10 क्रियादिभेदेन दूषणेऽपि किं विदूषितमस्माकं स्यात्। स्वहेतु-
जनितस्यात्मप्रकाशस्यानुपघातात्। इति नात्मसंवेदने प्रति-
पादितदोषप्रसङ्गः॥

तदुक्तं।

विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।
15 इयमेवात्मसंवित्तिरस्य याऽजडरूपता॥
क्रियाकारकभेदेन न स्वसंवित्तिरस्य तु।[3]
एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः॥ इति॥[4]

---

1 on-kyaṅ thams-cad raṅ-gi ñe-bar-len-pai skad-cig-ma daṅ sṅon-poi khyad-par lhan-cig-byed-pai rkyen-pas kyaṅ sṅa-ma raṅ-ñid-kyi(s) hgags-nas çel-gyi rdo sṅon-poi yon-tan-gyis bsgyur-ba gzhan ñid skye-bar hgyur-ro = *api tu sarvasvopādānakṣaṇa-nīlopādhisahakāripratyayād api pūrvasvarūpani-rodhāt......*

2 So Ms.

3 hdi-yi raṅ-bzhin-rig-pa ni bya daṅ byed-poi dṅos-por min = *kriyākāra-karūpeṇa.*

4 From some Yogācāra-treatise.

यच्चोच्यते। क्रियाकारकभेदेन व्यवहारप्रसिद्धं शब्दार्थमभिगम्य दूषणमुक्तं। स्वसंवेदनशब्दस्य तदर्थाभिधायकत्वात्। यदि पुनर्दोषभयाल्लोकप्रसिद्धोऽपि शब्दार्थः परित्यज्यते। तदा लोकत एव बाधा भव[164b]तो भविष्यति॥

इत्थमपि न परमार्थतः स्वसंवेदनसिद्धिः। तथा हि हेतु- 5
प्रत्ययोपजनितस्य प्रतिबिम्बस्येव निःस्वभावत्वमुक्तं। तथा च सुतरां न स्वसंवेदनं ज्ञानस्य। तत्त्वतो निजस्वभावाभावात्। न च स्वभावाभावे गगनोत्पलस्यात्मसंवेदनमुचितं। न चापि जड-स्वभावता मध्यमकवादिनं प्रति परमार्थतः कस्य चित्सिद्धा। येन जडव्यावृत्त्यमजडं स्वसंवेदनं स्यात्। तस्मादन्यानेव वस्तु- 10
वादिनः प्रति युक्तमेतदक्तु[1]। ततो निःस्वभावतया न कथं चिदपि स्वसंवेदनसिद्धिः॥ एतत्पुनः पश्चात्सत्यद्वयव्याख्यानोपदर्शन-प्रस्तावे[2] विस्तरेणोपदर्शयिष्यामः॥

सांप्रतं प्रदीपस्य स्वयंप्रकाशतामभ्युपगम्य बुद्धेः स्वसंवेदन-मयुक्तमिति प्रतिपादयन्नाह। दीप इत्यादि। 15

**दीपः प्रकाशत इति ज्ञात्वा ज्ञानेन कथ्यते।**
**बुद्धिः प्रकाशत इति ज्ञात्वेदं केन कथ्यते॥ २२[3]**

भवतु वा प्रदीपस्य प्रकाशात्मता। तथापि न बुद्धिसंवेदन-

---

1 Modern copy has: *yuktam eva tad.*
2 ix. 24.
3 According to the Minaev's edition; really 21.

साधनं[1] प्रति संदृश्यो दृष्टान्त इति समुदायार्थः । दीपः प्रका-
शत इति । आभासते प्रकाशान्तरनिरपेक्षः स्वयमेव । इति
ज्ञात्वा प्रतीत्य ज्ञानेन बुद्ध्या कथ्यते । प्रतिपाद्यते । प्रदीपस्य
ज्ञानविषयत्वात् । बुद्धिर्ज्ञानं प्रकाशत इति यदुच्यते । तत्पुनः
5 केन ज्ञानेन ज्ञात्वा कथ्यत इति परं पृच्छति ॥

न चात्र किंचिद्बुद्धिप्रतिपत्तिनिबन्धनमस्तीति[2] असंभावनां
प्रकाशयति । न तावत्पूर्वज्ञानेन तत्प्रतिपत्तिः । तत्कालमनुत्पत्ते-
स्तस्यासत्त्वात् । नापि पश्चात्कालभाविना तदानीं क्षणिकतया
ग्राह्यस्यातीतत्वात् । न च तत्समानकालभाविना तेन तस्यानुप-
10 कारात् । न चानुपकारकस्य विषयभावः । नाकारणं विषय
इति वचनात् । नापि स्वयं । तत्रैव विप्रतिपत्तेः । तत्कथं
तत्प्रतीतिरिति न विद्मः ॥

इत्थं सर्वथा बुद्धेरप्रतिपत्तौ तत्संवेदनमतीवायुक्तमित्या-
[147a]ह[3] । प्रकाशा वेत्यादि ।

15 **प्रकाशा वाप्रकाशा वा यदा दृष्टा न केन चित् ।**
**वन्ध्यादुहितृलीलेव कथ्यमानापि सा मुधा ॥ २३**

प्रकाशा वा । प्रकाशात्मिका दीपवत् । अप्रकाशा वाप्रका-
शात्मिका घटादिवत् । परस्परसमुच्चये वाशब्दद्वयं । बुद्धिर्यदा

---

1 *Saṁvedana* = raṅ-rig-pa = *sva*°.
2 Tib ... *yod-pa ma-yin-na zhes-pai-sgra ni mi-srid-pa stan-par-byed-pa yin-no* = ... astīti itiçabdo 'saṁbhāvanām......
3 The folio 147 is wanting in the Nep. Ms.

दृष्टा न केन चित् । न प्रतिपन्ना केन चित्प्रतिपत्त्या स्वयं-रूपेण वा[1] । यद्देतिपदं तदेत्याकर्षति । तदा वन्ध्याया अप्रसव-धर्मिण्याः स्त्रिया दुहिता पुत्री तस्या लीला विलासो ललितं । तद्वत् । कथ्यमानापि । आख्यायमानापि सा मुधा । सेति बुद्धिर्मुधेति निष्फला ॥ वन्ध्यादुहितुरविद्यमानतयाप्रतिपन्न-त्वात् तल्लीला सुतरामप्रतिपन्नेत्यभिप्रायः ।

अथ वानुत्पन्नानिरुद्धस्वभावतया वन्ध्यादुहितृस्थानीया बुद्धिः । अप्रतीततत्त्वभावतया तल्लीलावत्स्वसंवित्तिः । तदप्रतीते-स्तस्या अप्यप्रतीतिरिति कथ्यमानापि युक्तिरहितेन वचन-मात्रेण सा स्वसंवित्तिर्मुधा । अनुपादेयत्वान्निष्प्रयोजना ॥ स्यादेवं । युक्तिशून्यं वचनमात्रमेतत् । यत इयमत्र युक्तिरस्ती-त्याह[2] । यदि नास्तीत्यादि ।

**यदि नास्ति स्वसंवित्तिर्विज्ञानं स्मर्यते कथं ।**

यदि स्वसंवेदनं विज्ञानस्य । नास्ति न विद्यते । तदा विज्ञानं स्मर्यते कथं । विज्ञानस्य स्वसंवेदनाभावादुत्तरकालं स्मरणं न स्यात् । न ह्यननुभूतस्मरणं युक्तमतिप्रसङ्गात् । तस्मा-

---

1 So Maith.—Tib. rtogs-pa-po hga yaṅ med-la rtogs-pa cuṅ-zad kyaṅ med-de raṅ daṅ gzhan gñis kyaṅ ma yin-no = *pratipattuḥ kasya cid abhāvān na kā çit pratipattir api; svaparobhayam api nāsti.*

2 Ms. syād etau nu yuktiçūnyaṁ vacanamātram etat. yata ubhayatra yuk-tir ...; Tib. de-lta mod kyi hdi ni rigs-pas stoṅ zhiṅ thsig-tsam yin te. gaṅ gi-phyir hdi-la rigs-pa hdi yod-do zhes. ...

हेतुभवफलस्य स्मरणस्यान्तरकार्यं दर्शनाज्ज्ञानसंवेदनमप्यनु-
मीयत इति ।

नैतत्साधनं साधीयः[1] । यतो यदि स्वसंवेदनकार्यतया
स्मरणं निश्चितं भवेत् । भवेदग्नेर्यथा धूमः स्वसंवेदनस्य कारणं[2]
5 ख्यातिः । न चासिद्धे स्वसंवेदने प्रमाणतः स्मरणस्य तत्कार्यता-
ग्रहणमस्ति । सर्वथोभयप्रतिपत्तिनान्तरीयकत्वात्कार्यकारणभाव-
प्रतिपत्तेः[3] । न च चक्षुरादेरिव विज्ञानमदर्शनेऽपि स्मरणं
तत्कार्यं सेत्स्यति । चक्षुषो हि व्यतिरेके नीलादिज्ञानाभावतो
[व्यतिरेकद्वारेण] तत्कार्यमनुमीयते[4] । स्मृतिस्तु ज्ञानसंवेदनमन्त-
10 रेणापि भवतीति प्रतिपादयिष्यामः । इति स्वसंवेदनकार्यता-
निश्चयमन्तरेण स्मरणस्य तद्विनाभावाच्च संवेदनसिद्धिः ।

अतः स्मरणमपि ज्ञानत्वात्कथं सिद्धमिति वक्तव्यं । न च
स्वयमसिद्धं लिङ्गं ज्ञापकमन्यस्य । न च स्मरणं स्वसंवेदनस्य
प्रत्यक्षतया ग्राहकं तस्य तस्मादन्यत्वात् । न च ज्ञानस्य
15 ज्ञानान्तरविषय[त्वं][5] । बहिरर्थवत्संबन्धासिद्ध्यादिदोषप्रसङ्गात् ॥

---

1 Tib. *hdi yaṅ sgrub-par byed-pa yin-pas hdis bsgrub-par-bya-ba ma yin-te.* —The *lotsavas* did not understand the word *sādhīyas* or read *sādhya* (bsgrub-par-bya-ba.)

2 Tib. has *bsgrubs-par-byed-pa* (sic).—Possibly : *sādhakam.*

3 Ms. has: sarvatobhaya° = thams-cad-du rgyu daṅ hbras-bu rtogs-pa ni gñi-ga rtogs-pa med-par ma yin-no = [*sarvathā hetuphala*[*bhāva*]-*pratipattir ubhayapratipattim antareṇa nāsti.*—Cp. *Nyāyabinduṭ* 22. 20, 52. 11.

4 Ms. ... *nīlādijñānamabhavatu tatk*°—Tib. mig-med-par sṅon-po-la-sogs-pai çes-pa med-pas *ldog-pai-sgo-nas* dei hbras-bu rjes-su-dpog-go ... *vyāvṛttidvāreṇa...*

5 *çes-pa ni çes-pa gshan-gyi yul ma yin-te.*

अन्यथाविशेषात्संतानान्तरस्याविनापि कारणेन तस्य ग्रहणं स्यात् । अथ तेन पूर्वम[न]नुभूतत्वान्न स्मर्यत इति चेत् । एकसंतानपतितेनापि न पूर्वमनुभूतमिति समानः प्रसङ्गः ।

कार्यकारणभावोऽपि न तत्र नियामको युज्यते । कार्यकारणभावस्यैव परमार्थतोऽभावात् । सत्यपि तस्मिन् सर्वज्ञानानां स्वप्रतिपत्तिनिष्ठतया तद्ग्रहणस्याशक्यत्वात्[1] । यथाव्यवहारमभ्युपगमे काल्पनिकत्वं[2] । काल्पनिकत्वे च सर्वव्यवहाराणां कल्पनानिर्मितत्वात्संवृतत्वमिति साधितं नः साध्यं[3] ॥ इति न स्मृतेः स्वसंवेदनसिद्धिः ॥

भवतोऽपि कथं तर्हि स्वसंवेदनाभावे स्मृतिरित्याह । अन्यानुभूत इत्यादि ।

अन्यानुभूते संबन्धात्स्मृतिराखुविषं यथा ॥ २४

[4]ज्ञानादन्यस्मिन् ग्राह्ये वस्तुनि विषयेऽनुभूते सति ज्ञाने स्मृतिः स्मरणमुपजायते । [5]नन्वन्यस्मिन्ननुभूतेऽन्यस्य स्मरणेऽतिप्रसङ्गः स्यादित्याह । संबन्धादिति । विषयेऽनुभूते[6] तद्विज्ञानस्मरणं संबन्धाद्भवति । विज्ञानं हि तद्ग्राहकतया तत्संबद्धं[7] ।

---

1 *raṅ-ñid rtogs-pa-la mthar thug-pa yin-pas phyir daṅ de hdzin-par mi nus-pai-phyir-ro.*

2 *brtags-pa-ñid.*

3 *kun-rdsob bsgrub-bya yin-pas don-dam-pa ma bsgrubs-par hgyur-ro.*

4 *hdir çes-pa-las gzhan* = tatra jñānād....

5 Ms. *na cānyasmin....*

6 *yul dran-pa-na brel-ba-las çes-pa....* = viṣayasmaraṇe saṁbandhāj jñāna-smaraṇam....

7 Ms. *tatsaṁbandham.*

भूतो विज्ञानं स्मर्यते। नान्यत्॥ [1]सत्यपि संबन्धे ऽन्यस्मिन्ननु-
भूते ऽन्यस्य स्मरणे विप्लुतं स्मरणं स्यादिति चेत्। न[2]। पूर्व-
मनुभूतो विषय उत्तरकालमनुस्मर्यमाणः स एवानुभवविशिष्टो
ऽनुस्मर्यते। तद्विशिष्टस्य तस्य ग्रहणात्। ज्ञानमेव च विषयानु-
5 [148a]भवो। नान्य। इति विषयानुभवस्मरणात्तत्संबद्धतया
ज्ञाने स्मरणमभिधीयते। न तु विषयरहितं ज्ञानमपि केवल-
मनुस्मर्यत इत्यदोषः॥

ननु कथमिव ज्ञानसंवेदनाहितस्मृतिवासनाबीजमन्तरेण
स्मृतिरुत्तरकालं स्यादित्याह। आखुविषं यथेति। आखुविषं।
10 मूषिकविषं। यथा संबन्धात्कालान्तरेण जायते तथा स्मृतिर-
पीत्यर्थः। तथा हि मूषिकविषमेकस्मिन् शरीरक्षणे[3] संक्रान्तं
पुनः कालान्तरेण मेघस्तनितमधिगम्य[4] विनापि स्वसंवेदना-
हितस्मृतिवासनाबीजमिदंप्रत्ययतामात्रायत्तवृत्तित्वात्[5]। अन्य-
स्मिन् क्षणे विकृतिमुपयाति। तथा प्रकृतेऽपि न दुष्यतीति[6]
15 भावः॥

पुनरपि विज्ञानवादी ज्ञानसंवेदनसिद्धये प्रकारान्तरमुप-
दर्शयितुमाह। प्रत्ययान्तरेत्यादि।

---

1 *hbrel-ba bden kyaṅ hdi ma myoṅ na gzhan dran-pa ni. ...* = ... tasminn ananubhūte.

2 Ms. *na pūrvam.*—Tib. *ma yin te.*

3 The Tib has: *skad-cig-la lus-la hphos-nas* = ekasmin kṣaṇe çarīra-saṁkrāntam.

4 According to Tib. °*stanitapratyayam.*

5 On the *smritivâsanâbîja* (dran-pai ohags-kyi sa-bon), see our partial translation of the *Sarvadarçana*, Muséon (1901), note 1ff.

6 *skyon med-do* = na doṣa iti....

**प्रत्ययान्तरयुक्तस्य दर्शनात्स्वं प्रकाशते ।**

प्रत्ययान्तरं कारणान्तरं[1] । ईक्षणिकादिविद्या परचित्तादिज्ञानाभिज्ञा च[2] ताभ्यां युक्तस्य तत्सामग्रीसंबद्धस्य चित्तस्य दर्शनात् । प्रतिभासनात् । विज्ञानस्य स्वं प्रकाशते । स्वरूपं प्रतिभासते । संवेदनमस्तीति यावत् । यदि हि तत्सर्वदा[3] परोक्षरूपं कथं कदा[4]चित्सामग्रीविशेषादुपलभ्येत । ततो यथा सामग्रीविशेषात्परचित्तमुपलभ्यते तथा समनन्तरालम्बनादिप्रत्ययात्स्वचित्तमप्युपलभ्यत[5] इति भावः ॥

एतदपि न ज्ञानसंवेदनसाधनमित्याह[6] । सिद्धाञ्जनेत्यादि ।

**सिद्धाञ्जनविधेर्दृष्टो घटो नैवाञ्जनं भवेत् ॥ २५ ॥**

सिद्धं च तदञ्जनं च सिद्धस्य वाञ्जनं । तस्य विधिर्विधानं प्रयोगः । तस्माद्दृष्टः । प्रतीतो घटो निधानादि वा । नैवाञ्जनं भवति । न च घटादिरञ्जनमेव स्यात् । न यद्यस्मात्प्रतीयते तदेव तद्भवति ॥ एवमीक्षणिका[दि]विद्यासहकारिणा[7] ज्ञानेन

---

1 rkyen gzhan ni dus gzhan yin te = *kālāntaram*. This reading is possibly better, being more difficult; *kāraṇa* is given by a second hand in the Nep. Ms.

2 *lta-bai rig-pa-la-sogs-pa daṅ gzhan-gyis* (?) *sems çes-pa-la-sogs-pai mṅon-par-çes-pa dag* = ikṣaṇikāvidyādi-paracittajñānādi-abhijñābhyām.

3 thams-cad-du = *sarvathā*.

4 *kadā-cit* = brgya-la yaṅ.

5 See *Nyāyabindu* 13, 10 foll.

6 *na* in *sādhana* is given in margin, second hand.

7 *ādi* from Tib. *rig-pa-la-sogs*.

परचित्तं च[1] [illegible]मिति । नैवमनया [illegible] सिद्धं
स्यात् । तस्मान्नैतदपि [146b] साध्योपयोगि साधनं । ननु यदि
ज्ञानमविदितस्वरूपं स्यात् । अर्थस्यापि प्रतीतिर्न स्यादव्यक्त-
व्यक्तिकत्वाज् ज्ञानस्य न ह्यर्थस्य व्यक्तिस्तदप्रतीतौ कथमर्थस्य
5 प्रतीतिः[2] । तथा हि स्वसंवेदनस्य प्रतिषेधादन्येनान्यस्य ग्रहणा-
योगाच्च । तद्ग्रहणाभ्युपगमे चोत्तरोत्तरस्याप्रतीतस्य प्रतीतये
ज्ञानान्तरानुसरणेनानवस्थाप्रसङ्गाच्च । न कथं चिदप्यर्थप्रतीति-
रिति[3] । तेन यदुक्तं । अन्यानुभूत इत्यादि । तदसंगतं । अर्थ-
स्यानुभवाभावात् सर्वस्यायं दृष्टादिव्यवहारो लोके न स्यादि-
10 त्याह । यथा दृष्टमित्यादि ।

यदुच्यते दृष्टादिव्यवहारो न स्यादिति । स किं परमा-
र्थतो न स्यात् । संवृत्या वा । तत्र यदि परमार्थतो न स्यादि-
त्युच्यते । तदा प्रियमिदमस्माकं । न हि सांवृतस्य परमार्थ-
चिन्तायामवतारोऽस्ति । अथ लोकप्रसिद्धितस्तदा ।

15 यथा दृष्टं श्रुतं ज्ञातं नैवेह प्रतिषिध्यते ।

---

1 *ca*, wanting in Tib.

2 So Nep. Ms.—The old interpunction has been erased before *na hy*, and *katham*—Tib. has:...don yaṅ rtogs-par mi hgyur-ba ma yin-nam çes-pa ni mig-gsal-ba gsal-bar-byed-pai-phyir te don ni gsal-ba ma yin-pa. de ma rtogs-pa-la don ci-ltar rtogs-par hgyur-te. (*mig-gsal-ba* = *cakṣur vyakta*, to be read *mi-gsal-ba* = *avyakta*). I have little doubt that the old reading, previous even to the Tibetan translation, was as following:...*arthasyāpi pratītir na syāt; avyaktavyaktikatvāj jñānasya tarhy arthasya pratītis, tad apratītau katham*....(See supra p. 352, n. 1, a conjecture on the relations between the Tibetan translation and our Ms. or its prototype.)

3 This very argument is forcibly summarized in the line *Sarvadarçana* p. 15, l. 17, *Apratyakṣopalambhasya nārthadṛṣṭiḥ prasidhyati.* (Dharmakīrti.)

दर्शितं । यथा दृष्टमिति । चक्षुरादिविज्ञानेन साक्षात्कारेण प्रतिपन्नं । श्रुतमिति । परस्मादागमात् । ज्ञातमिति । त्रिरूपलिङ्गग्रहादनुमानान्निश्चितं[1] । तदेतदिह सर्वं व्यवहार-माश्रित्य नैव प्रतिषिध्यते । न वार्यते । यथा यथा लोकेन प्रतीयते तत्तथैवाविचारितस्वरूपमभ्युपगम्यते लोकप्रसिद्धितः । न तु पुनः परमार्थतः ॥ तेन स्वसंवेदनाभावादूर्ध्वमभ्युपगमादयोऽपि दोषाः परमार्थपक्षवादिन इह नावतरन्ति ।

यदि तत्तथैवाऽभ्युपगम्यते[2] । किं नाम तर्हि प्रतिषिध्यते । इत्याह । सत्यत इत्यादि ।

**सत्यतः कल्पना त्वत्र दुःखहेतुर्निवार्यते ॥ २६**

सत्यतः परमार्थतः । कल्पनाऽऽरोपः[3] । तुशब्दः पुनरर्थे । सा पुनरत्र । विचारे सिद्धान्ते वा । निवार्यते प्रतिषिध्यते । कुतो दुःखहेतुरिति हेतुपदमेतत् [140a] । दुःखस्य हेतुः कारणं यस्मात्तस्मादित्यर्थः । उपादानस्कन्धानां सदसदादिकल्पनाहित-प्रवृत्तिहेतुत एव च संसारस्य दुःखस्वभावः[4] ।

---

1 See *Nyāyabindu*, p. 104.

2 *tathaivā 'bhyupa,°* so Ms.

3 So Ms.

4 *Saṃsāra* from a second hand written in margin after *hetuta eva ca.*—Tib. has: ñe-bar-len-pai phuṅ-po-rnams yod-pa daṅ med-pa-la-sogs-pa brtags-pas bsbag-pa hjug-pai rgyu-ñid ni hkhor-ba yin-te. sdug-bsṅal kun-hbyuṅ hjig-rten daṅ. lta gnas srid-pa aṅ de-dag ñid ces-pai tshig-las... = *upādānaskandhāḥ sadasadādikalpanāhitapravṛttihetava eva saṃsāraḥ duḥkhaṃ samudayo....*—I should admit that *āhita* (bsbag-pa) is out of place; and read *°hetuta eva saṃsāraḥ, saṃsāraç ca....*

दुःखं समुदयो लोको दृष्टिः स्थानं[1] भवश्च त । इति वचनात् ।

इति सत्यतः कल्पना दुःखहेतुर्भवति । तस्मादसत्समारोप-कल्पनाभिनिवेशप्रतिषेधमात्रमत्राभिप्रेतं । न तु वास्तवं किंचित्प्रतिषिध्यत इति ॥ तदेवं स्वसंवेदनं ज्ञानस्य न कथं चिदपि

5 युज्यते । तदुक्तं ।

न बोध्यबोधकाकारं चित्तं दृष्टं तथागतैः ।

यत्र बोद्धा च बोध्यं च तत्र बोधिर्न विद्यते[2] ॥ इति ॥

यत्तु क्व चिद्भगवता चित्तमात्रतास्तित्वमुक्तं । तत्स्कन्धायतनादिवत्नेयार्थतयेति कथयिष्यते[3] ॥

10 इदानीं प्रासङ्गिकं परिसमाप्य प्रकृते योजयन्नाह । चित्ता-दन्येत्यादि ।

**चित्तादन्या न माया चेन्नाप्यनन्येति कल्प्यते ।**

**वस्तु चेत्सा कथं नान्यानन्या चेन्नास्ति वस्तुतः ॥ २७**

तर्हि चित्तादन्या माया स्यात् । अनन्या वा स्यात् । उभय-

15 स्वभावा वा । अनुभयस्वभावा वा । इति चत्वारो विकल्पाः । तत्र न तावत्प्रथमपक्षः । चित्तादन्याभ्युपगमेऽपि चित्तमात्रं जगदिच्छतः सिद्धान्तविरोधः स्यात् । द्वितीयपक्षे तु यदा मायैव ते नास्तीत्यादिना[4] प्रतिपादित एव दोषः । तृतीयस्तु

1 Read *dṛṣṭisthānam* —Quoted from the Abhidharmakoça.

2 ...de-la byaṅ-chub-sems yod-min = *tatra bodhicittaṁ nāsti.*

3 See infra IX, 73 at the end; supra ad IX, 6.

4 IX, 16.

प्रकारो न संगच्छते । परस्परविरुद्धयोरेकत्वाभावात् । अथ चतुर्थी कल्पना । सापि न संगच्छते ॥ तामुपादायोच्यते । चित्तादन्या न माया । इत्यन्यत्वप्रतिषेधः । अनन्या तर्हि । माप्यनन्येति तत्त्वस्यापि प्रतिषेधः । इति[1] उभयपातपक्षेयदि[2] कल्प्यते व्यवस्थाप्यते सोऽपि न युक्तः । अन्योन्यपरिहारवतोरेक- 5 प्रतिषेधस्यापरविधिनान्तरीयकत्वात्तयोरेकत्वाभावात् । चतुर्थी कल्पना सापि न संघटते ॥

अपि च वस्तु चे[द्]ति । य[149b]दि सा माया वस्तुसती कथं नान्या । चित्ताद्व्यतिरिक्ता न भवति । अथानन्या चेद्यदि । चित्तमेव माया । तदा नास्ति वस्तुतः । न विद्यते परमा- 10 र्थतः । तस्यासत्स्वभावत्वात्[3] । चित्तमेव केवलं[4] । एतत्तदेवा- यातं यदुक्तं ।

यदा मायैव ते नास्ति तदा किमुपलभ्यते ।

इति[5] ॥ अधुना प्रकृतं प्रसाध्योपसंहरन्नाह । असत्यपीत्यादि । 15

## असत्यपि यथा माया दृश्या द्रष्टृ तथा मनः ।

असती । उपलभ्यमाना माया हस्त्यादिवद्वस्तुतोऽसत्स्वभावा । तादृश्यपि दृश्या दर्शनविषया यथा माया । द्रष्टृ तथा मनः ।

---

1 = de-ltar = *evam.*
2 *gñi-ga ba-ga-pai phyogs.*
3 *don-dam-par yod-pa ma yin-pa de-la-ste dei raṅ-bshin yin-pai-phyir-ro.*
4 According to Tib. *kevalam ity etat.*
5 = IX, 16.

सैवासती माया दृष्टान्तः। तथा मनः परमार्थतोऽस-
त्स्वभावमपि दर्शनसमर्थं भविष्यति। तेन यदा न भ्रान्ति-
रप्यस्तीत्यादि[1] यदुक्तं परेण तत्प्रत्याख्योपसंहारेण दर्शितं॥

पुनरपि प्रकारान्तरेण परमार्थसद्विज्ञानसाधनाय परोक्त-
5 मतमभिधायाह। वस्त्वाश्रयश्चेदित्यादि।

वस्त्वाश्रयश्चेत्संसारः सोऽन्यथाकाशवद्भवेत्॥ २८

यथा हि संक्लेशो व्यवदानं च हेयोपादेयतया सर्वमिदं
यथावत्प्रतिपत्तव्यं। तत्र रागादिमलावृतं चित्तं संक्लिष्टमित्यु-
च्यते। ते चाभूतसमारोपवशोत्पन्नत्वादागन्तुकाश्चित्ताश्रिताः
10 प्रवर्तन्ते। तत्प्रभूतकर्मजन्मपरंपरोपनिबन्धः संसारः प्रजायते।
तदेव चित्तं परमार्थतः प्रकृतिप्रभास्वरमनागन्तुकमभूतपरि-
कल्पसमुत्थग्राह्यग्राहकादिकसमारोपाभिनिवेशवासनाशून्यमद्व-
यस्वभावमनागन्तु[क]दोषविनिर्मुक्तमाश्रयपरावृत्तेर्व्यवदानमित्युच्य-
ते[2]॥ तदेव संक्लेशव्यवदानयोर्वस्तुसद्भूतचित्तमन्तरेण व्यवस्थापनं
15 न घटत इति मन्यन्ते। संसारनिर्वाणयोश्चित्तधर्मत्वात्। चित्त-
मेव संक्लिश्यते चित्तमेव व्यवदायते इति वचनात्॥

तदेतत्परमतं निरूपयति। वस्त्वेव वस्तुसद्भूतचित्तमेवा-
श्रयोऽस्येति वस्त्वाश्रयः। चेद्यदि संसारो व्यवस्थाप्यते। तदा
संसारोऽन्यथा भवेत्। चित्तादन्यः स्यात्। वस्तुनोऽन्यत्वेऽवस्तु

---

1 = IX, 15.

2 See p. 409, l. 6.— *āgantuka* = glo-bur-ba.

स्यात्। चित्तमेव च[1] वस्तुत्वात्। कथमिव। आकाशवत्। गगनमिव।

य एष चित्ताश्रयः संसारोऽभिधीयते स किं वस्त्ववस्तु वा। वस्त्वपि चित्तं तदन्यद्वा॥ तत्र यदि वस्तु चित्तमेव तदा न चित्तादन्यः संसारस्तदाश्रयः। चित्तमेव सः। चित्तं च प्रकृतिप्रभास्वरतया व्यवदानस्वभावत्वान्न प्रहेयं। अथ चित्तादन्यः। तदा चित्तव्यतिरिक्तस्यान्यस्याभ्युपगमात्सिद्धान्तक्षतिः। अथावस्तु। तदा संसारो नाम न किंचिदस्ति। खरविषाणवत्। अत एवाह। आकाशवदिति। यथाकाशं प्रज्ञप्तिसन्मात्रमसच्च[2] न किंचिदर्थक्रियायां समर्थं। तथा संसारो भवतः स्यात्। अथ वा। आकाशवदिति निःस्वभावत्वादस्मत्सिद्धान्तानुप्रवेशः॥

स्यादेतत्। यदि नामावस्तु। तथापि वस्तुसद्भूतचित्तसमाश्रितत्वात्। तस्यार्थक्रियासामर्थ्यं भविष्यतीत्याह। वस्त्वाश्रयेणेत्यादि।

वस्त्वाश्रयेणाभावस्य क्रियावत्त्वं कथं भवेत्।

नासद्रूपस्य कश्चिदाश्रयो भवितुमर्हति। आश्रयाश्रयिभावस्य कार्यकारणरूपत्वात्। न चाभावः कस्यचित्कार्यमनिर्वर्त्यविशेषत्वात्। भवतु नाम। तथापि वस्त्वाश्रयेण वस्तुसद्भूतचित्तसमाश्रयेणाभावस्यासदात्मकस्य क्रियावत्त्वं। अर्थक्रिया-

[1] Ca?
[2] prajñaptisat, see supra VIII. 101, Çikṣas., 257. 7; Madh. Vṛtti (Bibl. Buddh.) p. 28, n. 1.

कारित्वं । कथं भवेत् । न कदा चिदपि युज्यत इत्यर्थः । अन्यथा तस्य भावस्वभावता स्यात् । शक्तिर्हि भावलक्षणं । सर्वशक्तिविरहोऽभावलक्षणमिति वचनात्[1] ॥

किमिदानीमिति विचार्यमाणमुपस्थितं भवत इत्याह ।

5 असत्सहायमित्यादि ।

**असत्सहायमेकं हि चित्तमापद्यते तव ॥ २९**

असन्नेवाभावः सहायो [150b] ऽस्येति । असत्सहायं । हिरवधारणे । एकमद्वितीयमेव । चित्तमापद्यते तव । चित्तैकपरमार्थवादिनः ॥ ननूक्तमेव । ग्राह्यग्राहकाद्याकारविनिर्मुक्तमद्वय-

10 लक्षणं चित्तं । इति चित्तैकताप्रतिपादने न किं चिदनिष्टमस्माकं । तदयुक्तं । संक्लेशस्यापि प्रहेयतया वस्तुत्वमुक्तं । तत्कथं चित्तमेवैकं वस्तु । अस्तु[2] नाम तथापि न बाधकान्मुक्तिरित्याह । ग्राह्यमुक्तमित्यादि ।

**ग्राह्यमुक्तं यदा चित्तं तदा सर्वे तथागताः ।**

15 ग्राह्यमित्युपलक्षणं । ग्राहकादिमुक्तमपि वेदितव्यं । अथ वा ग्राह्याधीनं ग्राहकत्वमिति तदभावाद्ग्राहकाभावः । ग्राहकाभावे च तदुपकल्पितस्याभिलाप्यस्याभावात् । अभिलापस्याभाव इत्युपदर्शयितुं ग्राह्यमुक्तमित्युक्तं । ग्राह्याद्याकारविविक्तं । अद्वय-

---

1 See *M. Vṛtti*, 116, n. 1.

2 From a second hand. First hand *vastu vastu nāma*—Tib. has: de sems gcig-pu ñid yod-par gyur-pa de-lta-na... = *tac cittaikatā syāt tathāpi....*

स्वभावं यदा सर्वस्य जगतश्चित्तं । तदा तस्य चित्तस्य सर्वसत्त्व-
संतानान्तर्गतत्वात्सर्वसंसारिणः सत्त्वास्तथागता बुद्धा भगवन्तः
प्राप्नुवन्ति । न कश्चित्पृथग्जनः स्यात् । ततश्च संक्लेशप्रहाणा-
यार्थमार्गभावनावैयर्थ्यप्रसङ्गः । न चैवं ॥ तस्मात्सत्यपि ग्राह्य-
ग्राहकवैधुर्ये भावाभिनिवेशस्य तदवस्थत्वान्न सर्वथा संक्लेश- 5
प्रहाणमित्यभिसंधायाह । एवं चेत्यादि ।

एवं च को गुणो लब्धश्चित्तमात्रेऽपि कल्पिते ॥ ३०

एवं चेति निपातसमुदायः । एवं सतीत्यस्मिन्नर्थे । अप्यर्थे
चकारः । एवमपि स्वीकृते को गुणो लब्धो । नैव कश्चित् ।
चित्तमात्रेऽपि विज्ञप्तिमात्रतायामपि कल्पितायां कल्पनया 10
समारोपिते[1] । अद्वयतत्त्वपरिज्ञानाभ्ययेऽपि सर्वसत्त्वसंताने रागा-
दीनां पर्यवस्थानात् ॥

नन्वेतत्समानं निःस्वभाववादिनो भवतोऽपीति समानदूष-
णतामापादयन्नाह । मायोपमत्वेऽपीत्यादि ।

मायोपमत्वेऽपि ज्ञाते कथं क्लेशो निवर्तते । 15

मायोपमत्वे मायास्वभावत्वेऽपि [151a] जगतो ज्ञाते । कथं
क्लेशो निवर्तते । कथं रागादिगणः प्रहीयते । इति पृच्छति ।
किमत्र प्रहाणानुपपत्तिकारणं यत्पृच्छसीत्याह । यदा माये-
त्यादि ।

---

1 So Ms.

यदा मायास्त्रियां रागस्तत्कर्तुरपि जायते ॥ ३१

इदमत्र प्रज्ञानानुपपत्तिबीजं दृश्यते । यदा मायास्त्रियां मायाकारविनिर्मितायामबलायां रागः संरक्तचित्तता जायते । उत्पद्यते । कस्य जायते । तत्कर्तुरपि । न केवलं यज्जनामोहनाय सा विनिर्मिता तेषामेव जायते । किं तु तस्या मायास्त्रियाः कर्तुर्निर्मातुरपि जायते । इत्यपिशब्दार्थः ॥ यदा हि परचित्तविभ्रमसंपादनार्थं मन्त्रौषधिसामर्थ्यविनिर्मितां सर्वाङ्गप्रत्यङ्गावयवलक्षणपरिपूर्णामभिनवयौवनशोभासंपत्समापन्नां प्रसन्नमनोहरवर्णां लावण्यातिशयशालिनीमतीव तदाकारनिर्माणप्रवीणः कश्चिन्मायाकारो जनपदकल्याणीं स्त्रियमुपदर्शयति । तदा न तावत्तदन्ये तामभिसमीक्ष्य मन्मथशरप्रहारान्तरव्यथितचेतसो जायन्ते । अपि तु योऽपि स तस्याः कमनीयकान्तिसंपदः कामकलाकौशलोत्कण्ठितमूर्तेरभिनिर्माता । मया स्वयमेव चैषा विरचितेति । तत्स्वभावविचक्षणः । सोऽपि कामकलया परमदशामासादयन्न कथं चिदपि चेतः संधारयितुमलं ॥ तत्कथं मायोपमत्वेऽपि निश्चिते संसारसंततिच्छेदः स्यात् ॥

एतत्परिजिहीर्षन्नाह । अप्रहीणा हि तदित्यादि ।

अप्रहीणा हि तत्कर्तुर्ज्ञेयसंक्लेशवासना ।
तद्दृष्टिकाले तस्यातो दुर्बला शून्यवासना ॥ ३२

हियस्मादर्थे । नैतद्दूषणमस्माकमासज्यते । यस्मादप्रहीणाऽनिवृत्ता । तत्कर्तुर्मायास्त्रीनिर्मातुः । किमप्रहीणा ज्ञेयसंक्लेश-

वासना । ज्ञेयसंक्लेशः सस्वभावसमारोपादावरणादिः[1] । सत्ता-
समारोपो वा । ज्ञेयावरणं यावत् । तस्य वासना । अनादि-
संसारजन्मपरम्पराभ्यस्तमिथ्याविकल्पजनिततद्बीजभूतचित्तसंतति-
संस्काराधानं[2] । तस्या अप्रहीणत्वात् ॥

नन्वेतत्समानं विज्ञानवादिनोऽपि प्रतिविधानं । तस्याप्यद्वय- 5
तत्त्वस्य सत्त्वेऽपि । आगन्तुकसंक्लेशवासनाया अप्रहीणत्वात् । न
सर्वे तथागता भवन्ति ॥ नैतत्समानं । यस्मादभावात्मानो
मलाः कार्यक्षमाविकला नावरणं भवितुमर्हन्ति । इत्युक्तमेव ।
अस्माकं तु निःस्वभावमेव जन्यं जनकं चेति न समानं ।

सा यस्मादप्रहीणा । अतोऽस्मात्कारणात् । तद्दृष्टिकाले । 10
तस्या ज्ञेयसस्वभावताया[3] दृष्टिरुपलब्धिः । तस्याः काले । तस्या
वा मायास्त्रिया दृष्टिकाल उपलम्भकाले । तस्येति अप्रहीण-
संक्लेशवासनस्य द्रष्टुः । दुर्बला शून्यवासनेति । शून्यस्य शून्य-
तत्त्वस्य शून्यताया वेति विग्रहः । छन्दानुरोधाद्भावप्रत्ययस्य
लोपं कृत्वा शून्येति निर्देशः । वासना संस्काराधानं । सा 15
दुर्बला सामर्थ्यविकला । आरोपितस्य दर्शनात् ॥ अतस्तदा
भाववासना बलवती । कथं तर्हि सा निवर्तेत इत्याह । शून्य-
तेत्यादि ।

---

1 *sa°*, not *sat°*. Tib. raṅ-bzhin daṅ bcas-par...

2 hbyuṅ-ba daṅ de sa-bon-du gyur-pai sems-kyi rgyun-gyis hdus-byas-pa yin-te.

3 *sa* (jñeyasa°), not translated in Tib.—First hand: *°bhāvatayā* (Tib.: *raṅ-bzhin-du*). Second hand: °tāyā.

**शून्यतावासनाधानाद्धीयते भाववासना ।**

शून्यताया मायास्वभावनिःस्वभावताया वासना । तस्या आधानं । आवेधः । अभ्यासेन दृढीकरणमिति यावत् । तस्मादिरुद्धप्रत्ययात् । हीयते निवर्तते । वह्निसन्निधाना-
5 च्छीतस्पर्शवत् । किं भाववासना । अनवराग्रसंसाराभ्यस्तवस्तु-सद्भावाध्यवसानवासना । तस्या भूतार्थत्वात् । वस्तुनिजस्वभाव-त्वाच्च । इतरस्या अलीकत्वादागन्तुकत्वाच्च ॥

ननु भावाभिनिवेशो वा शून्यताभिनिवेशो वा । इति नाभिनिवेशं प्रति कश्चिद्विशेषः[1] । तस्यापि कल्पनास्वभावा-
10 नतिक्रमात् । यदाह ।

शू[152a]न्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः ।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे ॥ इति ॥

एतत्परिहर्तुमाह । किं चिन्नास्तीत्यादि ।

**किं चिन्नास्तीति चाभ्यासात्सापि पश्चात्प्रहीयते ॥ ३३**

15 किं चिदिति भावो वा शून्यता वा । नास्ति न विद्यते । चशब्दः पूर्वापेक्षया । समुच्चये । इत्येवं चाभ्यासात् । भाववासना-प्रहाणस्य पश्चात्सापि शून्यतावासनापि प्रहीयते । निवर्तते ॥ अयमभिप्रायः । शून्यताआवेधो[2] हि भावाभिनिवेशस्य प्रति-

---

[1] See above 358.6.
[2] So Ms.

पचत्वात् । प्रहाणोपायभूतो । ऽधिगते चोपेये पश्चात्कोलोप-मत्वात्[1] । उपायस्यापि प्रहाणमनुष्ठीयते । एतदेवाह ।

सर्वसंकल्पहानाय शून्यतामृतदेशना ।
यस्य तस्यामपि ग्राहस्त्वयासाववसादितः ॥ इति[2] ॥

स्यादेतत् । यदि नाम किं चिन्नास्तीति मनसिकारा- 5
भ्यासाद्भवति शून्यतावासनायाः प्रहाणं । तथापि तदभ्यासात्पुन-रभावकल्पना[3] प्रवर्तमाना निवर्तयितुमशक्या । ततश्च गण्ड-प्रवेशेऽचितारानिर्गमो जात इति[4] तदवस्थं तव दौस्थ्यमित्य-त्राह । यदा न लभ्यत इत्यादि ।

**यदा न लभ्यते भावो यो नास्तीति प्रकल्प्यते ।** 10
**तदा निराश्रयोऽभावः कथं तिष्ठेन्मतेः पुरः ॥ ३४**

इयमपि[5] विचारेण नावतिष्ठत इति ॥ यो भावो नास्तीति प्रकल्प्यते । यस्य भावस्य प्रतिषेधः क्रियते । स यदि विचार्य-माणो निःस्वभावतया न लभ्यते । न प्राप्यते तैमिरिकोपलब्ध-केशस्तबकवत् । तदा निराश्रय इति । यस्यासौ परिकल्पितो 15
भावः । तस्य संबन्धिनो ऽभावात् । निरालम्बः । अभावः । कल्पना-

---

1 Ms. *kālopamatvāt*—But Tib. *gziṅs* = *kola* (Foucaux) = *Floss (Pet. W.) = raft.—Pāli, *kullo.*

2 See supra 359.8. I prefer the reading *yasya.*—Tib. *hdi ni khyed-kyis spaṅs lags çes.*

3 Ms. *ābhāsakalpanā.*—Tib. dṅos-po-med-pai rnam-par-rtog-pa = abhāva-vikalpa.

4 *lba-ba bcug-pa-las mig-hbras hbyuṅ-ba bzhin-du.*

5 *iyam abhāvakalpanā.*

किद्गृहीतमूर्तिः। कथं तिष्ठेन्मतेः पुरः। कथमसौ विचारेण बुद्धेरग्रतः प्रतिभासेत। कथमेव भावनिःस्वभावतायां निवर्तते॥

अथ वा अन्यथावतार्यते। भवतु नाम शून्यताबलाधाना-द्भाववासनाविनिवृत्तिः[1] [152b]। तत्प्रतिषेधाभावादभावाभि-

5 निवेशस्तु[2] केन वार्यते। इत्येत आह। यदा न लभ्यत इत्यादि। अन्यत्सर्वं पूर्ववत्॥

अयमत्र समुदायार्थः। सर्वधर्मशून्यता हि भावाभिनिवेश-प्रहाणायोपादीयते। सापि शून्यता शून्यताभिमुखीकरणात्य-स्यात्प्रहीयते। यापि च कथं चिद्भावकल्पना जायते। सापि

10 समनन्तरविचारेण निवर्तते॥ अत एवैतत्समस्तकल्पनाजाल-निवर्तनाय भगवत्यां प्रज्ञापारमितायां विस्तरेणाध्यात्मशून्यता-द्यो ऽष्टादश शून्यताः प्रोक्ताः[3]॥ न च शून्यता भावाद्व्यति-रिक्ता भावस्यैव तत्स्वभावत्वात्। अन्यथा शून्यताया भावाद्व्यति-रेके धर्माणां निःस्वभावता न स्यात्। निःस्वभावता तत्स्वभाव

15 इति प्रज्ञाप्तिं प्राह॥

एतदपि प्रज्ञापारमितायामुक्तं। पुनरपरं सुभूते बोधि-सत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रति-संयुक्तैर्मनसिकारैः। एवं प्रत्यवेक्षते। न रूपशून्यतया रूपं शून्यं। रूपमेव शून्यं। शून्यतैव रूपं। न वेदनाशून्यतया वेदना

1 bala = stobs.

2 According to the Tib.—Ms.: *tatpratiṣedhād abhāvād abhini.*

3 See *M. Vyut.* 37; *Dh.-s.* XLI.

शून्या । वेदनैव शून्या । शून्यतैव वेदना । न संज्ञाशून्यतया संज्ञा शून्या । संज्ञैव शून्या । शून्यतैव संज्ञा । न संस्कारशून्यतया संस्काराः शून्याः । संस्कारा एव शून्याः । शून्यतैव संस्काराः । न विज्ञानशून्यतया विज्ञानं शून्यं । विज्ञानमेव शून्यं । शून्यतैव विज्ञानमिति विस्तरः ॥ 5

उक्तं च ।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।
भावः स्वतन्त्रो नास्तीति सिंहनादस्तवातुलः ॥ इति ।

इति न शून्यता धर्माद्व्यतिरिक्ता । तस्माच्छून्यतायामपि नाभिनिवेशः कर्तव्य इति [153a] ॥ 10

एवं सर्वविकल्पप्रत्यस्तम[या]त्[1] । समस्तावरणनिर्मुक्तिरुपजायते । इत्युपदर्शयन्नाह । यदा न भाव इत्यादि ।

**यदा न भावो नाभावो मतेः संतिष्ठते पुरः ।**
**तदान्यगत्यभावेन निरालम्बा प्रशाम्यति ॥ ३५[2]**

यदा न भावः परमार्थसत्स्वभावो मतेर्बुद्धेः संतिष्ठते पुरो- 15
ऽग्रतः । नाभावः । नापि भावविरहितलक्षणोऽभावः । यदा मतेः संतिष्ठते पुरः । तदाऽन्यगत्यभावेन विधिप्रतिषेधाभ्यां गत्यन्त-

1 Ms. *pratyastasamasta°*; *māt* in margin.— Query: *pratyastāt?*—Tib. *nub-pai-phyir* (nub = paçcima, astam, antardhānam.)

2 According to Tāranātha and to the Commentary of Vibhūticandra, Çāntideva, when coming to this stanza, disappeared from the eyes of his auditors.

राभावात् । उभयानुभयपक्षयोरेतद्द्वयविधिप्रतिषेधात्मकत्वात् । आभ्यामव्यतिरिक्ततयाऽनयोः संग्रहे तावपि संगृहीताविति । निराश्रया । सदसतोरालम्बनयोरयोगात् । बुद्धिः प्रशाम्यति । उपशाम्यति । सर्वविकल्पोपशमान्निरिन्धनवह्निवत् । निर्वृति-
5 मुपयातीत्यर्थः ॥

कथं तर्हि सकलकल्पनाविरहादनेककल्पासंख्येयाभिलषितं परार्थसंपदुपायभूतं बुद्धत्वमधिगम्य परार्थमभिसंपादयति भगवानित्याह । चिन्तामणिरिति ।

चिन्तामणिः कल्पतरुर्यथेच्छापरिपूरणः ।
10 विनेयप्रणिधानाभ्यां जिनबिम्बं तथेक्ष्यते ॥ ३६

चिन्तामणिरिति । चिन्तितफलदाता रत्नविशेषः । कल्पतरुरिति । कल्पितफलदाता वृक्षविशेषः । स यथा विकल्पमन्तरेणापि लोकानां यथाभव्यमिच्छायाः परिपूरणः । अभिलाषस्य संपादकः । जिनबिम्बं तथेक्ष्यत इति संबन्धः ।
15 चतुर्मारजयाज्जिनो भगवान्[1] । पापकधर्मजयाद्वा । जिनस्य बुद्धस्य भगवतः । बिम्बं द्वात्रिंशता महापुरुषलक्षणैर्विराजितं शरीरं । तथा तेन प्रकारेण । ईक्ष्यते । सर्वकल्पनाभावेऽपि परहितसुखसंपादनसमर्थः प्रतीयते ।

---

[1] See *Childers*, *Çikṣās.*, 198. 10, *Mhv.* III. 273. 281.

कथं पुनरेतद्दिष्टमात्रेण भविष्यतीत्याह। विनेयप्रणिधानाभ्यामिति। विनेयवशात्। ये बुद्धस्य भगवतो विनेयाः[1]। तदुपाधिफलविशेषप्रतिलम्भहेतुकुशलकर्मपरिपाकात्[2]। तद्वशात्। प्रणिधानवशाच्च[3]। [153ᵇ] यत्पूर्वं बोधिसत्त्वावस्थायामनेकप्रकारं भगवता सत्त्वार्थसंपादनं प्रणिहितं तस्याक्षेपवशात्। 5 कुलालचक्रभ्रमणाक्षेपन्यायेनानाभोगेन प्रवर्तनात्। सर्वसत्त्वहितसुखसंपादनमुपपद्यते ॥

यदुक्तं[4]। यस्यां रात्रौ तथागतोऽभिसंबुद्धो यस्यां च परिनिर्वृतो। ऽत्रान्तरे तथागतेनैकमप्यक्षरं नोदाहृतं। तत्कस्य हेतोः। नित्यं समाहितो भगवान्। ये चाक्षरस्वरुतवैनेयाः 10 सत्त्वाः। ते तथागतमुखादूर्णाकोशादुष्णीषात्। ध्वनिं निश्चरन्तं शृण्वन्तीत्यादि ॥

उक्तं च।

तस्मिन् ध्यानसमापन्ने चिन्तारत्नवदास्थिते।
निश्चरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः[5] ॥ 15
ताभिर्विशासितानर्थान् सर्वान् जानन्ति मानवाः।
हितानि च यथाभव्यं क्षिप्रमासादयन्ति ते ॥ इति।

---

1 gaṅ saṅs-rgyas bcom-ldan-hdas-rnams gdul-bya de-rnams gdul-bya = *ye buddhabhagavatām vineyās te vineyāḥ.*

2 *upādhi*, not translated in Tibetan.—*tad* = de-rnams-kyi = *teṣām.*

3 *praṇidhāna* = smon-lam.

4 See *Āryatathāgataguhyasūtra*, quoted *Madh. Vṛtti* fol. 109 b.

5 = *sgron-mai sgra.*—See J.R.A S., 1902, p. 374.

चतुस्तवे[1] ऽप्युक्तं ।

नोद्घाटितं त्वया किं चिदेकमप्यक्षरं विभो ।
कृत्स्नश्च वैनेयजनो धर्मवर्षेण तर्पितः ॥ इति ॥

एवमसाधारणं कारणमाख्याय पुनरन्यथा हेतुव्याख्याया एव
5 स तादृशः प्रभावातिशयविशेषो यदनाभोगेन[2] परार्थसंपादन-
समर्थफलमुपजायत इति दृष्टान्तद्वयेनोपदर्शयन्नाह । यथा गारु-
डिक इत्यादि ।

**यथा गारुडिकः स्तम्भं साधयित्वा विनश्यति ।**
**स तस्मिंश्चिरनष्टेऽपि विषादीनुपशामयेत् ॥ ३७**

10 यथा गारुडिको विषतत्त्ववित् । लब्धमन्त्रसामर्थ्यः । स्तम्भं
काष्ठमयं वा पाषाणमयं वा अन्यद्वा साधयित्वा । मन्त्रेणाभि-
संस्कृत्य ममाभावादयमेव सर्वविषापहारचतुरो भविष्यतीति
विनश्यति । क्षयमुपरतव्यापारो भवति । स स्तम्भस्तेनाभि-
मन्त्रितः । तस्मिन् गारुडिके चिरनष्टेऽपि । प्रभूतकालमुप-
15 रतेऽपि । विषादीनुपशामयेत् ।[3] आदिशब्दाद्ग्रहादिविकारमप-
हरेत् । काष्ठस्तम्भमयं परिपालयता मितो[4] पि उपधाया पिचि
कृत्स्नो न कृतः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वा [154a][3] । एवं
दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयन्नाह । बोधिचर्येति ।

---

1 So Ms.—*Bstod-pa-bzhi las.*
2 See supra VIII. 1. 107.
3 Wanting in Tib.
4 Thus Ms.—See Pāṇ. VI, 4, 92.

**बोधिचर्यानुरूप्येण जिनस्तम्भोऽपि साधितः ।**
**करोति सर्वकार्याणि बोधिसत्त्वेऽपि निर्वृते ॥ ३८**

यथाशब्दस्तथेत्याकर्षयति । तथा बोधौ बोधिनिमित्तं बुद्धत्वार्थं चर्या [बोधिचर्या][1] । बोधिसत्त्वेऽपि निर्वृत इति । बोधिर्बुद्धत्वमेकानेकस्वभावविविक्तमनुत्पन्नानिरुद्धमनुच्छेदमशाश्वतं सर्वप्रपञ्चविनिर्मुक्तमाकाशप्रतिसमं धर्मकायाख्यं परमार्थतत्त्वमुच्यते । एतदेव च प्रज्ञापारमिताशून्यतातथताभूतकोटिधर्मधात्वादिशब्देन संवृतिमुपादायाभिधीयते । इदमेव चाभिसंधायोक्तं ।

धर्मतो बुद्धा द्रष्टव्या धर्मकाया हि नायकाः ।
धर्मता चाप्यविज्ञेया न सा शक्या विजानितुं ॥ इति ।[2]

उक्तं च ।

अलक्षणमनुत्पादमसंस्कृतमवाङ्मयं ।
आकाशं बोधिचित्तं च बोधिरद्वयलक्षणा ॥ इति ॥

तत्र सत्त्वं । अभिप्रायोऽस्येति बोधिसत्त्वः । तस्मिन्निर्वृतेऽपि । अपिशब्दो भिन्नक्रमः । अप्रतिष्ठितनिर्वाणत्वेन परमां शान्तिं गतेऽपि । हेत्ववस्थानिवृत्तौ[3] फलावस्थाप्राप्तौ चेत्यर्थः ॥ इत्युभयथापि सर्वथा कल्पनाविरहेऽपि सत्त्वार्थसंपादनमविकलमुपदर्शितं भवति ।

---

1 *bodhicaryā*, from Tibetan.—I suppose that our text is incomplete.
2 See *Vajracchedikā*, § 26.
3 Ms. *nivṛtau* or *nirvṛtau*.

स्यादेतत् । यदि भगवानुपरतसकलविकल्पालम्बनतया निवृत्तसर्वचित्तचैत्तव्यापारः । कथं तर्हि तथागतपूजा महाफला वर्ण्यत इत्याशङ्कयन्नाह । अचित्तक इत्यादि ।

**अचित्तके कृता पूजा कथं फलवती भवेत् ।**

5 संवृतिचित्तविविक्ते भगवति कृता उपकृता । पूजा कारा-विशेषः[1] । कथं फलवती भवेत् । सफला स्यात् । तत्रासत्युप-भोक्तरि दायकदानपतीनां कथं पुण्यं भवेत् । अत्रोत्तरमाह । तुल्यैवेत्यादि ।

**तुल्यैव पठ्यते यस्मात्तिष्ठतो निर्वृतस्य च ॥ ३९**

10 तुल्यैव समैव । पठ्यत आगमे प्रतिपाद्यते । यस्मात्तिष्ठतो निर्वृतस्य च तस्मात्फलवती भवेदिति योजनीयं । तिष्ठतो-ऽपरिनिर्वृतस्य । निर्वृतस्य निरुपधिनिर्वाणं [154b] गतस्य पूजाया नास्ति विशेषः ॥

अयमभिप्रायो । द्विविधं हि पुण्यं । त्यागान्वयं च । त्यागा-

15 देव यदुत्पद्यते । परिभोगान्वयं च । देयधर्मपरिभोगाद्यदु-त्पद्यते । तत्र यदि नाम निर्वृते भगवति प्रतिग्रहीतुरभावा-त्परिभोगान्वयं न भविष्यति पुण्यं परित्यागान्वयं च केन वार्यते ।

---

1 See *Div. avad.* Index, s. voc. *kāra*.

प्रतिग्रह्णाति कस्मिंश्चित्कथं परित्यागान्ययमपि पुण्यं । किं पुनः कारणं सति प्रतिग्रहीतरि भवितव्यं पुण्येन नासति । कस्य चिद्प्यनुभव[ाभाव]ादिति[1] चेत् । इदमकारणमेव । यदि हि पुण्यं परानुग्रहादेव स्यात् । मैत्र्याद्यप्रमाणसम्यग्दृष्टिभावनायां[2] न स्यात् । तस्माद्द्रव्यं स्वचित्तप्रभवं परानुग्रहमन्तरेणापि पुण्यं । तथा व्यतीतेऽपि गुणवति तद्भक्तिकृतं स्वचित्ताद्भवेत्पुण्यं । न विरुध्यत इति ॥ अपि च । सर्वपुण्यपापसद्भावे सर्वेषामागमः[3] साक्षीत्याह । आगमाचेत्यादि ।

## आगमाच्च फलं तच्च संवृत्या तत्त्वतोऽपि वा ।

किमन्योपपत्त्यन्तरेण । आगमाद्भगवत्प्रवचनात् । फलं भगवत्पूजाकृतं । महाभोगतादिलक्षणमवगम्यते । तच्चेति निर्वृतानिर्वृते भगवति पूजायामेतावांस्तु विशेषः । कस्य चित्तत्फलं सांवृतं । कस्य चित्पुनः पारमार्थिकमभिमतं । एवमनन्तरविचारमनादृत्य विशेषेणोच्यते । संवृत्या तत्त्वतोऽपि वा पुण्यपापक्रियायाः फलं भगवदागमात्प्रतीयते । तच्च चावयोरविवाद एव ॥

---

[1] yaṅ ci-ste len-pa-po hga yaṅ med-pai-phyir-ro zhe-na = *kasya cid api pratigrahītur abhāvāt.*

[2] Ms. *apramāṇa*°.——*byams-pa tshad-ma-med-pa-la sogs daṅ....* = maitryapramāṇādi.°

[3] *sarveṣām*, not translated in Tib.

तथेदमुक्तं भगवता पुण्यकूटधारण्यां[1] । ये के चित्सिंह-
* विक्रीडित तथागतस्य पूजां करिष्यन्ति तिष्ठतो वा परिनिर्वृ-
तस्य वा । सर्वे ते त्रियानादेकतरेण यानेन परिनिर्वास्यन्ति ।
यश्च खलु सिंहविक्रीडित तथागतमर्हन्तं सम्यक्संबुद्धं दृष्ट्वा
5 चित्तं प्रसादयेत् । प्रसन्नचित्तः सत्कुर्यात् । गुरुकुर्यात् । मान-
येत् । पूजयेत् । उपचरेत् । लाभेन चीवरपिण्डपातशयनासन-
ग्लानप्रत्य[155a]यभैषज्यपरिष्कारैः सर्वसुखोपधानैरुपतिष्ठेत् । यश्च
परिनिर्वृतस्य तथागतस्य[2] सर्षपफलमाचधातौ शरीरपूजां
कुर्यात् । समो विपाकः प्रतिकाङ्क्षितव्यः । तथा पूजायै नास्ति
10 विशेषो नानाकारणं चेति ॥ उक्तं च ।

तिष्ठन्तं पूजयेद्यस्तु यश्चापि परिनिर्वृतं ।
समचित्तप्रसादेन नास्ति पुण्यविशेषता ॥ इति[3] ।

पुनरिदमुक्तं[4] । यश्च खलु पुनः सिंहविक्रीडित तथागतं
वर्षशतं वा वर्षसहस्रं वा सर्वसुखोपधानेनोपतिष्ठेत् । यश्च परि-
15 निर्वृतस्य तथागतस्य चैत्ये बोधिचित्तपरिगृहीतैकपुष्पमारो-
पयेत्[5] । तथागतपूजायै जलाञ्जलिं चोपनामयेत् । जलेन
चोपसिञ्चेत् । ईषिकापदं[6] वा दद्यात् । निर्माल्यं वापनयेत ।

---

1 See Çikṣās, p. 173, n. 1.
2 Ms. çaryapa° = *yuṅs-hbru*.
3 = *Divyāvad*, p. 469. 3.
4 This passage occurs *Çikṣās.*, 173. 13.
5 *Çi.* has: °*saṃgṛhīta eka*°.
6 *Çi.* *iṣīkā*°; see Pet. W. *iṣikā, iṣīkā, iṣīkā*.

उपलेपनप्रदानं वा[1] दीपप्रदानं वा कुर्यात्। आत्ममना:। एक-
क्रमपदव्यतिहारं[2] वातिक्रम्य वाचं भाषेत। नमस्तस्मै बुद्धाय
भगवत इति। मा ते अत्र सिंहविक्रीडित काङ्क्षा वा विम-
तिर्वा विचिकित्सा वा। यदसौ कल्पं वा कल्पशतं वा कल्प-
सहस्रं वा दुर्गतिविनिपातं गच्छेत्। नेदं स्थानं विद्यत इति॥ 5

एतदवश्यमभ्युपेयमिति। सत्यबुद्ध इत्यादि।

सत्यबुद्धे कृता पूजा सफलेति कथं यथा॥४०

सत्यबुद्धे परमार्थसति भगवति कृता पूजा सफलेति।
फलवतीत्येतदपि कथं यथेति। कथमिवेत्युदाहरणमुपदर्शयति।
नान्यच्चोदाहरणमागमादिति भावः। तस्मात्सर्वथा भगवत्पू- 10
जायां फलसद्भाव आगमादवगम्यते॥

शून्यतावासनाधानादित्यादि यदुक्तं। तत्र वैभाषिकादयः
सर्वधर्मशून्यतायाः सर्वावरणप्रहाणमसहमानाः। चतुरार्यसत्य-
दर्शनभावनां च तदुपायमिच्छन्तः प्राहुः सत्यदर्शनत इत्यादि।

सत्यदर्शनतो मुक्तिः शून्यतादर्शनेन किं। 15

चतुर्णामार्यसत्यानां दुःखसमुदयनिरोधमार्गलक्षणानां दर्श-
नतः। [155b] उपलक्षितः साक्षात्करणादित्यर्थः। दर्शनत इत्युप-
लक्षणं भावनातोऽपि द्रष्टव्यं॥ तदुक्तं।

---

[1] So Qi. and Ms. first hand—Qi. adds *puṣpapradānam.*
[2] *Pada,* wanting in Qi.—gom-pai gnas-skabs lga bos-tc—See *stabs.*

क्लेशप्रहाणमाम्नातं सत्यदर्शनभावनात्। इति।

तत्र वृत्तस्य[1] श्रुतचिन्तावतो भावनायां प्रयुक्तस्य। अशुभानापानस्मृतिस्मृत्युपस्थानभावनानिष्पत्तिक्रमेण[2]। अनित्यतो दुःखतः शून्यतोऽनात्मतश्चेत्येतैः षोडशभिराकारैर्दुःखादिसत्यं पश्यतः[3]। उष्मगतादिचतुर्निर्वेधभागीयद्वारेण[4] दुःखे धर्मज्ञानक्षान्त्यादिपञ्चदशक्षणलक्षणस्य दर्शनमार्गस्य[5] ततः परं भावनामार्गस्याधिगमाद्दर्शनभावनाहेयत्रैधातुकक्लेशोपक्लेशराशिप्रहाणात्[6]। [7]क्षयानुत्पादज्ञानोत्पत्तिरित्यार्यसत्येषु संक्षेपतोऽभिसमयक्रमः। इत्यमार्यसत्यदर्शनतो मुक्तिरिष्यते।

10 तस्मादत एव मुक्तिरस्तु। शून्यतादर्शनेन किं। शून्यतायाः सर्वधर्मनिःस्वभावताया दर्शनेनाधिगमेन साक्षात्करणेनेति यावत्। किं। न किंचित्प्रयोजनं। तदपरस्य मुक्तेरुपायस्य विद्यमानत्वात्॥ अत्राह। न विनेत्यादि।

**न विनानेन मार्गेण बोधिरित्यागमो यतः॥ ४१**

---

1 zhugs-pas = *vṛttasya*.

2 On the *açubhabhāvanā*, see *M. vyut* § 52; on the *anāpānasmṛti*, ibid. 53; on the *smṛtyupasthānas*, ibid. § 38.

3 The sixteen *ākāras*, see *M. vyut* § 54, 2-17; *Dh.-s.* 97.

4 The four *nirvedhabhāgīyas*, *M. vyut.* § 55.—see *Divyāvadāna*, 240, 20; Wassilief 246; Çarad. Candra Das 355; *Nettip* 15.

5 See the sixteen *Kṣāntijñānakṣaṇas*, *M. vyut* § 56, *Dh.-s* XLVI. The last (*mārge 'nvayajñāna*), being a *phala*, is not a part of the *darçanamārga*.

6 *Traidhātuka*, see for instance *M. vyut* § 109, 65-67.— *darçanabhāvanā-heya*, ibid § 109, 68-69, and many Pāli and Sanskrit references.

7 See *M. vyut* § 57, 9 *kṣayajñāna*, 10 *anutpāda*°.

नोपायान्तरमस्ति । तस्मादित्यर्थः । इदं मयार्थस्य तत्त्वं[1] । तथा हि । सर्व एव हि भावा आरोपितमनारोपितं चेति रूपद्वयमुद्वहन्ति । तत्र यत्तदविद्याप्रवाहितमारोपितं रूपं तत्सर्वजनसाधारणमिति न तदुपलब्धेः संक्लेशप्रहाणमुपपद्यते । अन्यथा सर्वे बालजनास्तथागताः स्युरिति प्राचीनप्रसङ्गः । इत्य- (5) नारोपितमेव तत्त्वमनु[प]लम्भयोगेऽधिगम्यमानमज्ञानास्रवक्षयाय[2] सामर्थ्यवदुपलभ्यते । तच्च प्रज्ञया विवेच्यमानं सर्वधर्मानुपलम्भ-लक्षणमवसितमिति सर्वधर्मशून्यतैव सर्वावरणविभ्रमप्रहाणाय पटीयसीत्यवगम्यते ॥

इति युक्तितो निरूपितं प्राक् । निरूपयि[156a]ष्यते च (10) पश्चात् । इह पुनरागमत एवैनमर्थमवधारयितुं ।

न विनानेन मार्गेण बोधिरित्यागमो यतः ।

इत्युक्तवान् ॥ यदुक्तं प्रज्ञापारमितायां । भगवानाह । इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् रूपं भाव इति न भावयति । वेदनां भाव इति न भावयति । संज्ञां भाव (15) इति न भावयति । संस्कारान् भाव इति [ न भावयति ] । यावन्मार्गाकारज्ञतां भाव इति न भावयति । यावत्सर्वाकार-ज्ञतां भाव इति न भावयति । [3]सर्ववासनानुसंधिक्लेशप्रहाणं भाव इति न भावयति । तत्कस्य हेतोः । नास्ति भावसंज्ञिनः

---

[1] Tib. = *idam arthasya tattvam.*

[2] Mi-çes-pa daṅ zag-pa zad-pai ched-du nus-pa. Contrast the sixth *abhijñā : āsravakṣayajñāna.*

[3] *Sarva* is wanting in Tibetan.

प्रज्ञापारमिताभावना । यावन्नास्ति भावसंज्ञिनो दानपारमिता-
भावना । नास्ति भावसंज्ञिनोऽध्यात्मशून्यताभावना[1] । यावन्नास्ति
भावसंज्ञिनोऽभावस्वभावशून्यताभावना । नास्ति भावसंज्ञिनः
षड्भिज्ञाभावना[2] । यावन्नास्ति सर्वसमाधिसर्वधारणीसुख-
5 तथागतबलवैशारद्यप्रतिसंविन्महामैत्रीमहाकरुणाऽऽवेणिकबुद्धध-
र्माणां भावना । तत्कस्य हेतोः । तथा हि स [3]भाव एषोऽह-
मिति द्वयोरन्तयोः सक्तः । दाने शीले क्षान्तौ वीर्ये ध्याने
प्रज्ञायां । एषोऽहमिति द्वयोरन्तयोः सक्तः । अध्यात्मशून्यतायां
यावदभावस्वभावशून्यतायां षट्स्वभिज्ञासु । यावत्सर्ववासनानु-
10 संधिक्लेशप्रहाणे एषोऽहमिति द्वयोरन्तयोः सक्तः । यस्य द्वयो-
रन्तयोः सक्तस्तस्य नास्ति मोक्षः । तत्कस्य हेतोः । नास्ति
सुभूते भावसंज्ञिनो दानं । यावन्नास्ति प्रज्ञा । नास्ति मार्गो ।
नास्ति ज्ञानं । नास्ति प्राप्तिः । नास्त्यभिसमयो । नस्यानुलो-
मिकी[4] क्षान्तिः । नास्ति रूपस्य परिज्ञा । नास्ति वेदनायाः
15 परिज्ञा । यावन्नास्ति प्रतीत्यसमु[156b]त्पादस्य परिज्ञा ।
नास्त्यात्मसत्त्वजीवजन्तुपोषपुरुषपुद्गलमनुजमानवकारकवेदकजा-
नकपश्यकसंज्ञायाः परिज्ञा । यावन्नास्ति सुर्ववासनानुसंधिक्लेश-
प्रहाणस्य परिज्ञा । कुतः पुनरस्य मोक्षो भविष्यतीति ॥

---

1 See *M. vyut* § 37; *Dh-s.* XLI.

2 Five *abhijñās*, *Dh.-s.* XX; six abhijñās, *M. vyut* § 10.

3 In margin, from a second hand, *sarva.*—hdi-ltar de dños-po-la hdi bdag-go..... *sakta* = chags.

4 See notes to *Dh.-s.*, CVII.—*ānulomikī*, *ā*° from a second hand.

अत एव पुनस्तदैवोक्तं।

भगवानाह। एवमेतत् कौशिक एवमेतत्। येऽपि तेऽभूव-न्नतीतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धास्तेऽपीमामेव प्रज्ञा-पारमितामागम्यानुत्तरां सम्यक्संबोधिमभिसंबुद्धाः। येऽपि ते भविष्यन्त्यनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धास्तेऽपीमा- 5 मेव प्रज्ञापारमितामागम्यानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। येऽपि त एतर्हि दशदिग्लोकधातुषु अप्रमेयासंख्येयेषु तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मं देशयन्ति तेऽपीमामेव प्रज्ञापारमितामागम्यानुत्तरां सम्यक्संबोधिमभि-संबुद्धाः[1]। येऽपि तेऽभूवन्नतीतानां तथागतानामर्हतां सम्यक्सं- 10 बुद्धानां श्रावकाः। येऽपि ते भविष्यन्त्यनागतानां तथागता-नामर्हतां सम्यक्संबुद्धानां श्रावकाः। येऽपि त एतर्हि प्रत्यु-त्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धानां श्रावकाः। तेऽपी-मामेव प्रज्ञापारमितामागम्य स्रोतआपत्तिफलं प्राप्ताः प्राप्स्यन्ति प्राप्नुवन्ति च। येऽपि तेऽभूवन्नतीतेऽध्वनि प्रत्येकबुद्धाः। याव- 15 त्तेऽपीमामेव प्रज्ञापारमितामागम्य प्रत्येकबोधिं प्राप्ताः प्राप्स्यन्ति प्राप्नुवन्ति च॥ तत्कस्य हेतोः। अत्र प्रज्ञापारमितायां सर्वाणि त्रीणि यानानि विस्तरेणोपदिष्टानि। तानि पुनरनिमित्तयोगे-नानुपलम्भयोगेनानुत्पादयोगेनासंक्लेशयोगेनाव्यवदानयोगे[157a]-न। यावत्तत्पुनर्लोकव्यवहारेणापरमार्थयोगेनेति[2] विस्तरः॥ 20

1 From a second hand: *abhisaṁbudhyante.*

2 hjig-rten-gyi tha-sñad-kyis yin-te don-dam-pai thsul-gyis ni ma yin-no.

उक्तं च।

बुद्धैः प्रत्येकबुद्धैश्च श्रावकैश्च निषेविता।

मार्गस्त्वमेका मोक्षस्य नास्त्यन्य इति निश्चयः॥ इति।[1]

एतन्महायानवचनमसहमान आह। मन्वसिद्धमित्यादि।

5 मन्वसिद्धं महायानं।

ननु भो शून्यतावादिन्। महायानमागमत्वेन ममासिद्ध-मसंमतं। तदस्योपन्यासो न साधनतया साधुः॥[2] अथ परस्य समानपरिहारदूषणमाह। कथमित्यादिना।

कथं सिद्धस्त्वदागमः।

10 यदि महायानमसिद्धं। कथं केन प्रकारेण त्वदीयागमो भगवद्वचनमिति सिद्धः। तत्र न किं चिदागमत्वप्रसाधकं प्रमाणमुत्पश्यामः॥ परः परिहारमाह। यस्मादिति।

यस्मादुभयसिद्धोऽसौ।

यस्मात्कारणात्। उभयस्य तव मम च सिद्ध आगमत्वेन 15 निश्चितोऽसौ ममागमः। न हि मदागमे भवतोऽपि महा-यानानुयायिनो बुद्धवचनत्वेन विप्रतिपत्तिरस्ति। तस्मात्सिद्धो-ऽसौ। न तु महायाने न मम संप्रतिपत्तिः। येनेदमेवोत्तरं भवतोऽपि स्यात्॥ सिद्धान्तवाद्याह।

---

1 See *Prajñāp.*, edit. by Rājēndralāl, p. 3.

2 sgrub-par-byed-pa-ñid-du.

न सिद्धोऽसौ तवादितः ॥ ४२

इति । यद्यप्युभयसिद्धत्वं तदागमस्यागमत्वसिद्धौ हेतुः । तदापि नैतदकथ्यमसिद्धत्वात् । यस्मात्तवैव तावदसौ तदागमो न सिद्धः । कदा । आदितः । आदौ तत्स्वीकारात्पूर्वं । न ह्यभ्युपगमात्प्राक् तव कथं चिदप्यसौ सिद्धः । इत्युभयसिद्धत्व- 5
मसिद्धत्वादसाधनं ॥

यद्यप्युभयसिद्धत्वमसिद्धं । इदं तर्हि साधनमस्तु यद्गुरुशिष्य-परंपरयाम्नायायातं बुद्धवचनत्वेन । [1]यच्च सूत्रेऽवतरति । विनये संदृश्यते । धर्मतां च न विलोमयति । तद्बुद्धवचनं नान्यदित्य-ाह । यत्प्रत्ययेत्यादि । 10

यत्प्रत्यया च तवास्था महायानेऽपि तां कुरु ।

यः प्रत्ययो निबन्धनं । अस्या आस्थायाः सा तथोक्ता । यत्प्रत्यया यन्निबन्धना । आस्था आदेयता आदरः । तव स्वा[157b]गमे । तां [2]तत्प्रत्ययामास्थां । इह महायानेऽपि कुरु विधेहि । महायानेऽप्युक्तस्याख्याकारणस्य विद्यमानत्वात् ॥ 15

इदं पुनः सर्वप्रवचनसाधारणमव्यभिचारि लक्षणं यदुक्त-मध्याशयसंचोदनसूत्रे[3] । अपि तु मैत्रेय चतुर्भिः कारणैः प्रति-भानं सर्वबुद्धभाषितं वेदितव्यं । कतमैश्चतुर्भिः । इह मैत्रेय

[1] Ms. *tac ca*...—gaṅ yaṅ mdo-sde-la hjug....

[2] From a second hand : *yatpratyayām*.

[3] See *Çikṣās.*, p. 15, l. 13-22.—Comp. *Subhāsitasutta*, in *Suttanipāta*, Fausböll, p. 71.

प्रतिभानमर्थोपसंहितं[1] भवति नानर्थोपसंहितं[1] । धर्मोपसंहितं ।
भवति नाधर्मोपसंहितं । क्लेशप्रहायकं भवति न क्लेशविवर्धकं ।
निर्वाणगुणानुशंस[सं]दर्शकं भवति न संसारगुणानुशंससंदर्शकं ।
एतैश्चतुर्भिः[2] पेयालं ॥ यस्य कस्य चिन्मैत्रेय । [3]एतैश्चतुर्भिः
5 प्रतिभाति । प्रतिभास्यति वा । तत्र श्राद्धैः कुलपुत्रैः कुलदुहि-
तृभिर्वा बुद्धसंज्ञोत्पादयितव्या । शास्तृसंज्ञां कृत्वा स धर्मः
श्रोतव्यः । तत्कस्य हेतोः । यत्किं चिन्मैत्रेय सुभाषितं सर्वं तद्बु-
द्धभाषितं[8] । तत्र मैत्रेय य इमानि प्रतिभानानि प्रतिक्षिपेत् ।
नैतानि बुद्धभाषितानीति तेषु चागौरवमुत्पादयेत् । पुद्गल-
10 विद्वेषेण तेन सर्वं बुद्धभाषितं प्रतिभानं प्रतिक्षिप्तं भवति । धर्मं
प्रतिक्षिप्य धर्मव्यसनसंवर्तनीयेन[4] कर्मणापायगामी भवति[5] ॥
तदत्र धर्मताया [अ]विलोमनमेव[6] सम्यग्लक्षणमुक्तं ॥

उक्तं च ।

यदर्थवद्धर्मपदोपसंहितं
15 त्रिधातुसंक्लेशनिबर्हणं[7] वचः ।
भवेच्च यच्छान्त्यनुशंसदर्शकं
तदुक्तमार्षं[8] विपरीतमन्यथा ॥ इति ।

---

1 *Çikṣās.* has *satyopasaṁhitam, a°.*

2 *Çikṣās.* has *ebhiç caturbhiḥ.*

3 See *Aṅg.* N. IV, 164, 7.

4 chos spaṅs-nas chos-kyis hphoṅs-par hgyur-bai las mṅon-par hdu-yed-pas...

5 Thus in *Çikṣās.*—Better *bhavatīti.*

6 chos-ñid daṅ mi hgal-ba.

7 spoṅ-byed.

8 *M. Vyut.* § 66.

एतन्महायाने सर्वमस्तीति कथमुपादेयं न स्यात्॥

यदुक्तं न सिद्धोऽसौ तवादित इति तत्र परो विशेषमभिधत्ते। न ब्रवीमि यदावयोर्द्वयोः सिद्धमुभयसिद्धमिति। किं तर्हि। आवाभ्यामन्येषामुभयेषां मदागमः सिद्ध इत्युपादेयः। न महायानमेतद्विपरीतत्वात्। ते[158a]न नोपादेयमित्याह। अन्योभयेष्टेत्यादि। 5

## अन्योभयेष्टसत्यत्वे वेदादेरपि सत्यता॥४३

यदावयोर्विवादास्पदत्वात्[1]। आवाभ्यामन्ये ये के चित्प्रतिपन्ना उभये[2]। तेषामिष्टं अभिमतं संमतमिति यावत्। तस्य सत्यत्वे। यथार्थत्वे। अभ्युपगम्यमाने सति वेदादेरपि सत्यता। 10 वेदवाक्यस्य चोदनालक्षणस्य। आदिशब्दात्कणादादिवचनस्यापि सत्यता। अमृषार्थता स्यात्। तत्रापि वादिप्रतिवादिभ्यामन्योभयसंमतिः संभाव्यत इति तदप्युपादेयं भवतः स्यात्। तस्मान्नायमपि विशेषः॥

अथापि स्यात्। मदागमे बुद्धवचनत्वेऽविवादो न तु 15 महायाने। तेन स उपादेयो नेतरदित्याशङ्क्याह। सविवादं महायानमित्यादि।

---

1 U-bu-cag rtsod-pa-dan-bcas-pai-phyir.

2 Interpunction erased after *ubhaye*—Tib. gives no help: *u-bu-cag-las gzhan-pagañ-su-dag gñi-ga-la grub-pa de-dag hdod-ciṅ mthon-par hdod-pa daṅ* .. = ...ubhayatra pratipannāḥ.

सविवादं महायानमिति चेदागमं त्यज।
तीर्थिकैः सविवादत्वात्स्वैः परैश्चागमान्तरं॥ ४४

सविवादं सविप्रतिपत्तिकं महायानं। के चिद्बुद्धवचनतया प्रत्यक्षमिच्छन्ति। के चित्तद्विपरीतसमारोपानेच्छन्ति। इति
5 हेतोः। चेद्यदि न ग्राह्यं तदा। आगमं त्यज। स्वागममपि विजहीहि। सोऽपि न प्रत्यक्षं[1] स्यात्॥ कस्मात्। तीर्थिकै-र्मीमांसकादिभिः सविवादत्वात्। विप्रतिपत्तिसंभवात्[2]। परि-त्यागमर्हतीति। न केवलं तीर्थिकैः। अपि तु स्वयूथ्यैरित्याह। स्वैरिति। चतुर्निकायमष्टादशभेदभिन्नं[3] भगवतः शासनं।
10 तत्रैकस्यैव निकायस्यानेकभेदसंभवात्। स्वयूथ्यैरपि परस्पर-विवादः संभवति।

स्वैरिति स्वनिकायान्तर्गतभेदान्तरावस्थितैः। परैरिति अन्यनिकायव्यवस्थितैः। चकारः पूर्वापेक्षया समुच्चयार्थः। सवि-वादत्वात्। आगमान्तरं त्यजेति संबन्धः। त्वदभ्युपगतादागमा-
15 दन्य आगम आगमान्तरं। तदपि सविवादत्वान्न स्वीकार-मर्हति। त्वदागमस्याप्यपरापेक्षया सविवादत्वं समानमिति परित्या[158a]गे तुल्य एव न्यायः।

अथ वा स्वैरिति। एकभेदव्यवस्थितैः सौत्रान्तिकाभिधर्मि-कवैनयिकैः[4] परस्परं सविवादत्वात्सूत्राभिधर्मविनयाः परित्याग-

---

1 hjug-pai yan-lag.
2 log-par rtogs-pa srid-pai phyir.
3 sde-pa bzhi-las bco-brgyad-du gyes-pa...
4 *Vainayika* wanting in Tibetan.

मर्हन्ति । यदि च एकभेदावस्थितानां वैभाषिकादीनामन्योन्यं विवादः । परैरिति एकनिकायाश्रितभेदान्तरगतैः ॥ एतेन यदुक्तं । गुरुपर्वक्रमेणाम्नायातं बुद्धवचनमित्यादि । तदनेनैव प्रत्याख्यातं द्रष्टव्यं । न ह्यविच्छिन्नसंप्रदायानामन्योन्यस्य विवादो युक्तः । न च सर्वज्ञवचनेषु परस्पराहतिरस्ति । न च सूत्राभि- 5 धर्मविनयानां परस्परमेकवाक्यता भवतः संभवति । तत्कथं सूत्रादिसंस्यन्दनं[1] बुद्धवचनत्वे हेतुरुक्तं । तस्माद्यत्किंचिदेतत् ॥

एवं समानपरिहारदूषणतामभिधाय पुनर्विशेषेण परस्याभ्युपगमे दूषणमुद्भावयन्नाह[2] ।

शासनं भिक्षुतामूलं भिक्षुतैव च दुःस्थिता । 10

शासनमित्यादिनोपक्रमते । शासनं भगवता हिताहितस्वीकारपरिहारदेशनालक्षणं । तच्च भिक्षुतामूलं ॥

अथ वा । आगमविप्रतिपत्तिमानुषङ्गिकीं परिसमाप्य यदुक्तं ।

सत्यदर्शनतो मुक्तिः शून्यतादर्शनेन किं । 15

इति निराचिकीर्षन्नाह । शासनमित्यादि ।

शासनमिदं कर्तव्यमिदं न कर्तव्यमित्याज्ञाप्रणयनं । तद्भिक्षुतामूलं । भिक्षुभावो भिक्षुता सैव मूलं कन्दो यस्येति तत्त-

---

1 mdo-sde-la-sogs-pa daṅ mthun-pa.

2 The Ms. Burn. 90 has here the following stanza: *parasparavirodhatvāc ced vinayān api tyaja, viruddhasattvatuṣṭyartham vākyam ekaṁ kim icchasi*, with the unmetrical readings: *vinayān dvīn api tyaja, vākyatvam ekam.*

योक्तं। तत्प्रतिष्ठत्वात्। यथा किल दृढमूलो वृक्षश्चिरमव-
स्थितिमनुभवन् काण्डशाखाप्रशाखापत्रपुष्पफलच्छायादानसंता-
पापहरणसमर्थो भवति। तथा भगवतोऽपि शासनकल्पपादपो
भिक्षुताकन्दमाश्रित्य [1]स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबल-
5 बोध्यङ्गध्यानारूप्यसमाधिसमापत्तिबोधिपाक्षिकार्या[159a]ष्टाङ्ग-
मार्गश्रामण्यफलसंपन्न ऋद्धिप्रातिहार्यादिभिः क्लेशोग्रसंतापाप-
हरणपटुर्भवति। इति भिक्षुताया मूलसाधर्म्यं।

[2]तत्र संज्ञाभिक्षुः। प्रतिज्ञाभिक्षुः। भिक्षणशीलो भिक्षुः।
ज्ञप्तिचतुर्थकर्मणोपसंपन्नो भिक्षुः[3]। भिन्नक्लेशो [4]भिक्षुरिति पञ्च-
10 प्रकारो भिक्षुः। तत्र चतुर्थपञ्चमं द्वयमग्र्यं। इतरेषां समा-
नाभिधानमात्राभिधेयत्वात्। तदुभयमपि शासनावस्थाननि-
दानमविरुद्धं। तथापि भिन्नक्लेशो भिक्षुः प्रधानं। तदेवेह
ग्रहणं। तद्भावो भिक्षुता॥

सा चार्यसत्यदर्शनतो न संगच्छत इत्याह। भिक्षुतैव
15 चेत्यादि।

भिक्षुता भिन्नक्लेशता। क्लेशप्रहाणमिति यावत्। यो वक्त-
व्यान्तरं समुच्छिन्दन् हेतौ वर्तते। यस्मात्सा भिक्षुतैव दुःस्थिता।

---

1 See *Dh.-s* 43-50, 82; *M. vyut.* § 67-68.

2 See *M. vyut.* 270, 37-41, where the third bhikṣu is called: *bhikṣuta iti bhikṣuḥ?*

3 Ms. first hand° *karmodayasampanno*; second hand °*karmādyupa*°.—Tib. las-kyis bsñen-par rdsogs-pai.

4 See *Abhidh-k-v.* (fol. 300 a): *bhinnakleçatvād bhikṣur ity arhan.*

शून्यतादर्शनमन्तरेणासमग्रया केवलसत्यदर्शनतो न युज्यते ।
तस्मात्सत्यदर्शनतो मुक्तिरिति न वक्तव्यमित्यभिप्रायः ॥ येषां
सा दुःखिता । सावलम्बनचित्तानामिति । सहावलम्बनेन वस्त्व-
भिनिवेशेन वर्तन्त इति सावलम्बनं । तत्तादृशं चित्तं येषां
योगिनां ते तथोक्तास्तेषामिति । यतस्ते दुःखादिसत्यं क्लेशवि- 5
संयोगं च वस्तुत्वेनावलम्बन्त इति मतं भवतां । अतस्तेषामुप-
लम्भदृष्टीनां दुःखिता । न निरालम्बनचित्तानां ॥

यत्पुनरुक्तं । सत्यदर्शनतो मुक्तिरिति तद्विकल्पनीयं । द्विधा
हि सत्यदर्शनं संभाव्यते । परमार्थतः संवृतितो वा । तत्राद्यो
विकल्पः । तदा नास्माकं विप्रतिपत्तिः । अस्मत्पक्षस्य प्रधान- 10
त्वात् । सर्वधर्माणामस्माभिः परमार्थतो दर्शनाभ्यु[प]गमात् ।
अथ द्वितीयः । तन्न सहामहे । युक्तिविरोधात् । न हि
संवृतिसत्यदर्शनान्मुक्तिरुत्पद्यते सर्वसत्त्वानां मुक्तिप्रसङ्गात् । तथा
हि युक्त्यागमाभ्यां [159 ] तत्त्वातत्त्वविवेचनात् । परमार्थसत्य-
मेवात्र क्लेशप्रहाणाय निश्चीयते न संवृतिसत्यं । तच्च सर्वधर्मा- 15
नुपलम्भलक्षणं । न हि तदन्तरेण संक्लेशनिवृत्तिर्युज्यते । याव-
द्भावाभिनिवेशस्तावत्कल्पना न निवर्तते । यावच्च कल्पना ताव-
दखण्डितमहिमानः संक्लेशाश्चित्तसंतानमध्यावसन्ति । यावच्च संक्ले-
शास्तावत्कर्मनिर्मितजन्मपरंपराप्रसवः । संसारोऽपि सुतरामव्या-
हतप्रसरः प्रवर्तते । तस्मात्सर्वधर्मशून्यतैवाविद्याप्रतिपक्षत्वात् । 20
संसारसंततिविच्छित्तिहेतुरवसीयते । न केवलं सत्यदर्शनं ॥
इदमेवाचार्यपादैरुक्तं ।

मुक्तिस्तु शून्यतादृष्टेस्तदर्थाशेषभावना। इति ॥[1]

यथार्थसत्यानि सत्यद्वयेऽन्तर्भवन्ति तथोपदर्शितमेव प्राक्। इत्यलमतिप्रसङ्गेन ॥ अपि च।

5 **सावलम्बनचित्तानां निर्वाणमपि दुःस्थितं ॥ ४५ ॥**

इति न केवलं भिक्षुता। किं तर्हि निर्वाणमपीत्यपेरर्थः। निर्वाणं क्लेशविसंयोगान्निरुपधिशेषं दुःस्थितं दुर्घटं ॥ तत्र भिक्षु-तायास्तावदसंगतिमाह।

**क्लेशप्रहाणान्मुक्तिश्चेत्तदनन्तरमस्तु सा।**

10 यदि चार्यसत्यदर्शनतः क्लेशाः प्रक्षीयन्ते। ततो विमुक्तिरुप-जायते। तदा तदनन्तरं क्लेशप्रहाणानन्तरमेवास्तु सा मुक्तिर्भवतु। भवत्वेवं। को वै मामन्यथा ब्रूते। नैतदस्ति। कुत इत्याह।

**दृष्टं च तेषु सामर्थ्यं निःक्लेशस्यापि कर्मणः ॥ ४६ ॥**

15 चो हेतौ। दृष्टं प्रतिपन्नं। आगमतः। यस्मात्। तेषु प्रक्षीण-क्लेशेषु। आर्यमौद्गल्यायनाङ्गुलिमालप्रभृतिषु। सामर्थ्यं फल-दानं प्रति शक्तिः। तस्मान्न तदनन्तरमेव मुक्तिरस्ति। कस्य

---

[1] Quoted *Subhāṣitasaṁgraha* (Muséon, IV, p. 397-1.) Liberation by the view of vacuity. Every meditation has that view for aim.

सामर्थ्यं दृष्टं । कर्मणः शुभाशुभलक्षणस्य । किं पूर्वमनाद्यवस्थायां क्लेशसहितस्य । नेत्याह । अक्लेशस्यापि । क्लेशसहका- [160a] रिरहितस्यापि कर्मणः ॥ ननु च सत्यदर्शनादविद्यादि प्रहीयते । तत्प्रहाणात्संस्कारादिप्रहाणक्रमेण तृष्णापि प्रहीयते । तृष्णाविपर्यासमती[1] च पुनर्भवोत्पत्तिनिमित्ते । ततश्च तयो- 5 रभावात्तुषरहितबीजस्येव[2] कर्मणः सद्भावेऽपि न किं विच्छि- द्यत इति । तदुक्तं ।

मिथ्याज्ञानतदुद्भूततर्षसंचेतनावशात् ।
हीनस्थानगतिजन्म[3] त्यक्त्वा चेतन्न जायते[4] ॥ इति ।

अथ वा तृष्णैव केवला पुनर्भवकारणं समुदयाकारत्वात्[5] । 10 उक्तं हि भगवता[6] । तत्र कतमत्समुदयार्यसत्यं । येयं तृष्णा पौनर्भविकी नन्दीरागसहगता तत्र तत्राभिनन्दिनी । यदुत कामतृष्णा । भवतृष्णा । विभवतृष्णा चेति ॥ तदेवं यस्य तृष्णा नास्ति तस्य प्रहीणसमुदयस्य कारणाभावान्न पुनर्जन्मसंभवः । इति पराभिप्रायमुत्थापयन्नाह । 15

**तृष्णा तावदुपादानं नास्ति चेत्संप्रधार्यते ।**

---

[1] sred-pa daṅ phyin-ci-log-daṅ-ldan-pa ni = °vatī [avidyā.]

[2] çun-phrags-med-pai sa-bon bzhin-du.

[3] So first hand.—Second hand *gater* or *gatair janma*—Tib. dman-pai gnas-su skye-ba yin = *hīnasthāne janma.*

[4] First hand: *te na ci ta nna jāyate*; second hand: *ci ttn.*—Tib. de spaṅs-pas ni skye-ba med = *tat* (*mithyājñānam*) *tyaktvā na jāyate.*

[5] So Ms.—kun-hbyuṅ-ba rgyu yin-pai-phyir = *samudayakāraṇatvāt.*

[6] The well-known definition—See *M. vyut.* § 244.120; *Itivuttaka* 58.

अविद्याप्रत्यया तृष्णा पुनर्भवोपादानं कारणं । तावन्नास्ति न विद्यते । चेद्यदि संप्रधार्यते निश्चीयते । तदा नैतद्वक्तव्यं । यत उपलब्धदृष्टीनामविद्याप्रत्ययत्वमनुपपन्नं । तद्भावात्तृष्णाप्रत्ययस्याप्यभावात् ॥ भवतु वा । तथाप्यभिधीयते ।

5 **किमक्लिष्टापि तृष्णैषां नास्ति संमोहवत्सती ॥ ४७**

अक्लिष्टापि सती क्लेशाप्रसंयुक्तापि तृष्णा किमेषां भवद्योगिनां नास्ति न संभवति । कथमिव । संमोहवत् । अक्लिष्टाज्ञानवत् ॥ इत्थमपि तृष्णा निषेद्धुमशक्येत्याह ।

**वेदनाप्रत्यया तृष्णा वेदनैषां च विद्यते ।**

10 स्पर्शप्रत्यया वेदना । वेदनाप्रत्यया च तृष्णा । सा वेदना तृष्णाकारणमेषामस्ति । तृष्णा तु तत्कार्यमविकलेऽपि कारणे न समस्तीति कथमभिधातुं शक्यते । निरविषयस्य[1] वेदनायामपि तृष्णा न भवतीति चेत् । न भावाभिनिवेशिनां निरवि-[165b]षयत्वमेवासिद्धमित्युक्तं । ततो यदि[2] अक्लिष्टाऽज्ञानवदा-

15 भ्युपगम्यते तृष्णा तथापि शून्यतादर्शनमन्तरेण न्यायवशादापतति ॥

---

1 Tib. kha-na ma tho ba med-pa.

2 So Ms. *yadi akliṣṭā jñāna°*—ñon-moṅs-pa-can ma-yin-pai mi-çes-pa yod kyaṅ srid-pa khas mi len-pa = *yady akliṣṭa-ajñāna-saty api nopagamyate tṛṣṇā....*

अयमत्र समुदायार्थः। यदा मुक्तसंतानेऽपि[1] कर्मणः फलदानसामर्थ्यमुपलभ्यते। तृष्णा च वेदनासद्भावे संभाव्यमाना। तदा क्लेशप्रहाणमपि संदिह्यमानं कथमिव विमुक्तौ निश्चयं कुर्यात्। तस्मान्न शून्यतामन्तरेण भिक्षुता सुस्थिता प्रतिभासत इति॥ यदुक्तं।

सावलम्बनचित्तानां निर्वाणमपि दुःस्थितं।

इति तदुपपादयन्नाह।

**सालम्बनेन चित्तेन स्थातव्यं यत्र तत्र वा॥ ४८**

सालम्बनेन सोपलम्भेन चित्तेन स्थातव्यमासक्तव्यं। यत्र तत्र वा। यत्र तत्रासङ्गस्थानेषु। आर्यसत्यादिषु। तद्भावनाफलेषु वा। आसङ्गसंभावनायां[2] न पुनर्जन्मनिवृत्तिरिति। कथं पुनर्जन्मसंभावनायां[2] निर्वाणमपि न संदिग्धं स्यात्। तस्मादुक्तशून्यतैव निर्वाणकारणमुक्तेत्याह।

**विना शून्यतया चित्तं बद्धमुत्पद्यते पुनः।**
**यथासंज्ञिसमापत्तौ भावयेत्तेन शून्यतां॥ ४९**

विना शून्यतया। शून्यतामन्तरेण चित्तं विज्ञानं सालम्बनं बद्धं संयतं। आलम्बनासङ्गपाशेन उत्पद्यते पुनः समाधिबलात्कियत्कालं निवृत्तमपि पुनरुत्पत्तिमद्भवति। क पुनरिदं दृष्टमित्याह। यथा असंज्ञिसमापत्ताविति। यथाऽसंज्ञिसमापत्तिं

---

[1] rgyud grol-ba yin na.

[2] Tib.: zhen-pa srid-pas = *āsaṅgasaṁbhavāt*, *saṁbhāvanā* = bsgom-pa.

समापद्यमानानां तावत्कालं चित्तचैत्तविरोधेऽपि पुनस्तदुत्पत्तिः
स्यात् तथान्यत्रापीत्यर्थः। उपलक्षणं चैतत्। यथा निरोध-
समापत्तावित्यपि द्रष्टव्यं॥ अथ वा। यथासंज्ञिसमापत्तिं समा-
पद्यासंज्ञिषु देवेषूपपद्यमानानामनेककल्पशतं यावच्चिरद्धानामपि
5 तत्समापत्तिविपाकफलपरिसमाप्तौ चित्तचैत्तानां पुनरुत्पत्ति-
स्तथा॥

यतः शून्यतामन्तरेण न भिक्षुता न निर्वाणमुपपद्यते।
तत उभयार्थिनां शून्यतैव भावनीयेत्याह [161a] भावये[दि]-
त्यादि। येन कारणेन विना शून्यतया चित्तं बद्धमुत्पद्यते
10 पुनः। तेन कारणेन निर्वाणार्थी शून्यतामेव भावयेत्।
तद्भावना हि क्लेशप्रहाणं निर्वाणं चाधिगमयति। न केवलैव
सत्यादिभावनेति यावत्। सालम्बनत्वात्॥

यदुक्तमार्यवज्रच्छेदिकायां प्रज्ञापारमितायां[1]। तत्किं मन्यसे
सुभूते अपि नु स्रोतआपन्नस्यैवं भवति मया स्रोतआपत्ति-
15 फलं प्राप्तमिति॥ सुभूतिराह। नो हीदं भगवंस्तत्कस्य
हेतोर्न हि भगवन् किं[2] चिदापन्नस्तेनोच्यते स्रोतआपन्न
इति। न रूपमापन्नो न शब्दान्न गन्धान्न रसान्न स्प्रष्ट-
व्यान्[3] न धर्मानापन्नस्तेनोच्यते स्रोतआपन्न इति। सचेद्भ-
गवन् स्रोतआपन्नस्यैवं भवेत्। मया स्रोतआपत्तिफलं प्राप्त-
20 मिति। स एव तस्यात्मग्राहो भवेत्सत्त्वग्राहो जीवग्राहः।

1 *Anecd. Oxon.* I, 1, p. 25, l. 9.
2 Printed text: *na kaṁ cid dharmam.*
3 Printed text: *na spraṣṭavyān.*

पुद्गलग्राहो भवेत् । पेयालं[1] । तत्किं मन्यसे सुभूते ऽपि न्वर्हत एवं भवति मयार्हत्त्वं प्राप्तमिति ॥ सुभूतिराह । नो हीदं भगवन् । तत्कस्य हेतोः । न कश्चिद्धर्मो यो ऽर्हन्नाम । सचेद्भगवन्नर्हत एवं भवेत् । मयार्हत्त्वं प्राप्तमिति । स एव तस्यात्मग्राहो भवेत् । पेयालं । [2]भगवानाह । तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन एवमप्रतिष्ठितं चित्तमुत्पादयितव्यं [3]न क्वचित्प्रतिष्ठितं चित्तमुत्पादयितव्यं । न रूपप्रतिष्ठितं चित्तमुत्पादयितव्यं । न शब्दगन्धरसस्प्रष्टव्यप्रतिष्ठितं[4] चित्तमुत्पादयितव्यमिति ॥

तस्माच्छून्यतैव बोधिमार्ग इति स्थितं ॥

यत्सूत्रे ऽवतरेदित्यादि अनुष्टुब्त्रयं केन चित्प्रतिक्षिप्तमिव लक्ष्यते* । अपक्रमनिवेशितत्वात् ।

---

* These three *anuṣṭubhs* are given both in MSS. and in the Tib. translation.

यत्सूत्रे ऽवतरेद्वाक्यं तच्चेद्बुद्धोक्तमिष्यते ।
महायानं भवत्सूत्रैः[5] प्रायस्तुल्यं न किं मतं ॥ ५०
एकेनागम्यमानेन[6] सकलं यदि दोषवत् ।
एकेन सूत्रतुल्येन किं न सर्वं जिनोदितं[7] ॥ ५१
महाकाश्यपमुख्यैश्च यद्वाक्यं नावगाह्यते[8] ।
[9]तत्त्वयानवबुद्धत्वादग्राह्यं कः करिष्यति ॥ ५२

---

1 p. 26, l. 5.

2 p. 27, l. 4.

3 Printed text: *yan na kvacit.*

4 Printed text: *spraṣṭavyadharma.°*

5 Minaev and MSS. *bhavet sūtraiḥ.*—Tib. *khyod-cag-gi mdo daṅ mthsuṅs.*

6 *agamyamāna* = *ma-rtogs.*

7 *mdo mthsuṅs gcig-gi[s] thams-cad ni rgyal-bas gsuṅs-pa cis ma-yin.*

8 So Minaev = *gtiṅ-dpogs*—L[2]*vigrāhyate*, Dev. 85 *avagrāhate.*

9 = tat tvayā an° = *de ni khyod-kyis ma rtogs-pas.*

आगमविप्रतिपत्तिरस्य विचारस्य प्रस्तावः । शासनं भिक्षुतेत्यादिग्रन्थ[161b]मविवादात् । प्रक्रमान्तरत्वात् । पूर्वमेव वक्तुमुचितं । अनेनान्तरितस्य विवादस्य पुनरुपक्रमो ग्रन्थकारस्य प्रस्तावाकौशलं स्यात् । यत्प्रत्ययेत्यादिना[2] च
5 प्रागनन्तरद्वयार्थस्याभिहितत्वात् । महाकाश्यपमुख्यैरित्यादिवचनस्याश्लीलत्वात् । ग्रन्थकाराप्रयुक्तमिति निश्चितं । तस्मात्प्रक्षेप एवायमिति ॥

स्यादेतत् । यथा सालम्बनचित्तस्यासङ्गसंभवात् । न मुक्तिः स्यात् । तथा शून्यतायामपि भयमुपजायते । तद्वरमुभयपरि-
10 हारेण संसार एव स्थितिर्युक्तेत्याह ।

[3]सक्तित्रासात्त्वनिर्मुक्त्या संसारे सिध्यति स्थितिः ।
मोहेन दुःखिनामर्थे शून्यताया इदं फलं ॥ ५२

सक्तिरासङ्गः । त्रासो भयं । शून्यताशब्दश्रवणात् । तदर्थापरिज्ञानात् । सक्तित्रासमिति । समाहारः[4] । तस्मादुभय-
15 पक्षपरिहारेण[5] संसारे त्रैधातुकस्वभावे सिध्यति स्थितिरव-

---

1 See IX. 45.

2 See IX. 43.

3 Minaev: *Çakti°*—Burn. 90 supports the reading explained in the second part of the commentary (p. 445, l. 13) सक्तित्रासात्त्वनिर्मुक्त्या—So does the Tibetan translation: *rmoṅs-pas sdug-bsṅal-can-don-du, chags daṅ hjigs mtha-las gro-bar, hkhor-bar gnas-pa hgrub-hgyur-ba, hdi ni stoṅ-ñid hbras-bu yin.*

4 zlas dbye-bai bsdu-ba yin-no.

5 Second hand: *pakṣāparihāreṇa*; but Tib. *spaṅs-nas.*

स्थानमुपजायते । तु शब्दः[1] पुनर्दोषपरिहारार्थं । इदं तु शून्यताभ्युपगमे[2] दूषणं स्यात् । साधारणं[3] दूषणमिति यावत् । कुतः । अनिर्मुक्त्या । हेतौ तृतीया । मुक्तेरभावादित्यर्थः । कतमेषां दुःखिनां पञ्चगतिसंसारे जात्यादिदुःखपीडितानां सतां । कथं । अर्थे । अर्थविषये । मोहेन । अविद्यया । आलम्बनासक्तेनेति यावत् । अतः शून्यताया इदं फलं । यत्पुनरपि निवृत्य[4] संसारे ऽवस्थानं ॥

अयमभिप्रायः । यथा शून्यताव्यतिरेकेणोपलम्भदृष्टेर्न मुक्तिः स्यात् । तथा विषयासक्तसुखचेताः सर्वधर्मशून्यताभयभीतकातरो वरं संसार एवात्रस्थानमिति मन्यमानो बालः प्रशमसुखविमुखो विनिवृत्य[5] जात्यादिदुःखमनुभवन् । पुनस्तत्रैवावतिष्ठत इति किमनया प्रसाधितमिति ॥

अन्ये तु सक्तित्रासान्तनिर्मुक्त्येति पाठं मन्यमाना एवं व्याचक्षते । सक्तेर्हेतु[162a]त्वात् । सक्तिरासक्तिस्थानं । त्रासहेतुत्वात् । त्रासो भयस्थानं । तावेवान्तौ सक्तित्रासान्तौ शाश्वतोच्छेदान्तौ इत्यर्थः । तथा हि । शाश्वतदृष्टेरविसक्ति[6]रुच्छेददृष्टेश्च त्रासो जायते । तयोर्निर्मुक्त्या परित्यागेन पूर्व-

---

1 *nii sgras.—punar* is not translated.

2 From a second hand, in margin: *çūnyatānabhyupagame;* but Tib. *hdi ni stoṅ-ñid khas-len-pa-la ñes-par hgyur-te.*

3 Skyon thun-moṅ ama yin no ces-pai tha-thsig-go = *dūṣaṇam sādhāraṇam nāsti.*

4 *mya-ṅan-las-hdas-nas* = *nirvṛtya.*

5 Not translated.

6 = °dṛṣṭer āsaktir. The reading is doubtful: *arvisaktir.* Tib. *chags.*

वर्तनीया । यत्परमार्थविचारेण शाश्वतान्तविवर्जनं । संवृति-सत्याभ्युपगमेन चोच्छेदान्तपरित्याग इति समारोपापवादान्त-परिहारान्मध्यमा प्रतिपत्तिरियमुपदर्शिता भवति ॥ तथा च किं संपद्यत इत्याह । संसारे सिध्यति स्थितिः । प्रज्ञया संसा-
5 रदोषाक्लिष्टस्य करुणापरतन्त्रत्वात् संसारे सिध्यति निष्पद्यते स्थितिरवस्थानं ॥ किमर्थं । दुःखिनामर्थे परदुःखदुःखितया दुःखिनां संसारिणामर्थे । तद्दुःखसमुद्धरणाभिलाषात् ॥

ननु संसारिणो नाम परमार्थतो न सन्त्येव । तत्कथं तदवस्थानमित्यत आह । मोहेन विपर्यासेन संवृत्या सत्त्वस्योपल-
10 म्भात् । एतच्च दुःखव्युपशमार्थं तु कार्यमोहो न वार्य इत्यत्र पश्चादङ्गीकरिष्यते[1] ॥

तस्माच्छून्यताया इदं फलं । यत्करुणया संसारेऽवतिष्ठमानो ऽपि शून्यतादर्शनात् संसारदोषैर्न लिप्यते । इदमप्रतिष्ठितनि-र्वाणता शून्यतायाः फलं । शून्यतामन्तरेणास्याभावात् ॥
15 तस्मादासंसारं सत्त्वार्थमवस्थानमिच्छद्भिः शून्यतैव भावयितव्या ॥

एतत्सर्वमुपसंहारेणोपदर्शयन्नाह ।

## तदेवं शून्यतापक्षे दूषणं नोपपद्यते ।

तदेतत् । एवमुक्तक्रमेण शून्यतापक्ष उक्तं दूषणं । शून्यतायां चासत्संसारावस्थानलक्षणं नोपपद्यते । न संगच्छते वक्ष्यमाण-
20 समाधानात् ॥ इति प्रथमपक्षे योजना[2] ॥ यत एवं ।

---

1 IX. 77.

2 ...phyogs-la sbyar-bar-bya ste.

तस्मान्निर्विचिकित्सेन भावनीयैव शून्यता ॥ ५४[1]

निर्गतो विचिकित्साया निर्विचिकित्सः निःसंदेहः । तेन सता भावनीयैवाभ्यसनीयैव शून्यता । सर्वधर्मनिःस्वभावता । [162b] अनुपलम्भयोगेन ॥

एतेन यदुक्तं न विनानेन मार्गेण[2] तदुपसंहृतं भवति । 5 यत्पुनरुक्तं । शून्यतादर्शनेन किं । तत्र शून्यताया विशेषमाह ।

क्लेशज्ञेयावृतितमःप्रतिपक्षो हि शून्यता ।
शीघ्रं सर्वज्ञताकामो न भावयति तां कथं ॥ ५५

क्लेशा रागादयः । ज्ञेयं पञ्चविधं । आवृतिशब्दश्चोभयत्र 10 संबध्यते । क्लेशा एवावृतिः । ज्ञेयं चावृतिरावरणमिति[3] विभज्य योजनीयं । ज्ञेयमेव समारोपितरूपत्वात्[4] । आवृतिः सैव तम इव तमो[5] वस्तुतत्त्वावरणत्वात् । तस्य प्रतिपक्षः प्रहाणहेतुः । हि यस्माच्छून्यता तस्माच्छीघ्रं त्वरितं । सर्वज्ञ-

---

1 Quoted *Subhāṣitasaṃgraha*, Muséon, IV, p. 396, 20.

2 Above IX. 41.

3 The two *āvaraṇas* are "well-known." See *Dh.-s.* CXV.

4 Interpunction supported by Tibetan.

5 *mun-pa ltar mun-pa yin-te dṅos-poi de-kho-ñid-la sgrib-par-byed-pai phyir-ro.*

तायां बुद्धत्वे कामो ऽभिलाषो यस्यासौ तथोक्तः । सर्वज्ञतां कामयत इति वा । सर्वज्ञताकामः । न भावयति तां कथमिति[1] । तां शून्यतां कथं न भावयति नाभ्यस्यति । अपि तु महता यत्नेन भावयेदेव ॥

5 यदप्युक्तं । त्रासाच्छून्यतायां प्रवृत्तिर्न स्यात् । तदपि न युक्तमित्याह । यद्दुःखेत्यादि । द्वितीयपक्षे[2] पुनरित्थमवतारणीयं । अस्यैव शून्यतायामेषो ऽनुशंसः । केवलं प्रथमत एव तत्र संत्रासात्प्रवृत्तिर्न स्यादिति ॥ आह ।

यद्दुःखजननं वस्तु त्रासस्तस्मात्प्रजायतां ।
10 शून्यता दुःखशमनी ततः किं जायते भयं ॥ ५६

यद्वस्तु दुःखजननं पीडाकरं तस्माद्वस्तुनः सकाशात्त्रासः । भयं जायतां नाम । शून्यता पुनः प्रत्युत दुःखशमनी सर्वसांसारिकदुःखापहन्त्री । ततस्तस्याः शून्यतायाः । किं । किमित्यभयस्थाने कातरस्य जनस्य भयं जायते । सर्वगुणनिदानत्वा-
15 त्प्रेमैव तस्यामुचितमिति भावः ॥ [3]आत्मग्रहजनिताहंकारप्रसूतं हि भयमतत्त्वविदामुत्पद्यते । स चात्मा कल्पनासमारोपितमूर्तिरित्यहंकारो ऽपि तदभावादनास्पद इत्युपदर्शयन्नाह ।

---

1 MS. *kathayati*.
2 See above 445.13 and 446.20.
3 See Subhāṣ-s., loc. cit.
4 So MS. °*graha*.°

**यतस्ततो वास्तु भयं यद्यहं नाम किं चन ।**
**अहमेव न किं चिच्चेद्भयं कस्य भविष्यति ॥ ५७[1]**

यतस्ततो [वा] भयाभयस्थानात् । अस्तु भवतु भयं । कदा । यद्यहं नाम किं चन । अहमित्यहंप्रत्ययस्य [163a] विषयः कथितः । अहं नाम अहंप्रत्ययवेद्यं यत्किं चन किं चिद्वस्तु स्यात् । अव्यक्तनिर्देशान्नपुंसकता । तदा युक्तमेव भयं । यदा पुनरहमेव न किं चिन्न वस्तु सद्विचार्यमाणमहं किं चिच्छब्दविकल्पमात्रादन्यत् । तदा भयं कस्याहमित्यस्याभावात् । भविष्यति । उत्पत्स्यते । इतोऽपि विचारात्त्रासो निवर्तत इति भावः । तदुक्तं ।

नास्त्यहं[2] न भविष्यामि न मे ऽस्ति न भविष्यति ।
इति बालस्य संत्रासः पण्डितस्य भयक्षयः ॥ इति ।

यथा चाहंप्रत्ययविषयस्य कल्पनामात्रोपदर्शितत्वात् । असत्त्वं तथा प्रतिपादयन्नाह ।

**दन्तकेशनखा नाहं नास्थि नाप्यस्मि शोणितं ।**
**न शिंघाणं[3] न च श्लेष्मा न पूयं लसिकापि वा ॥ ५८**

---

[1] See Subhāṣ. loc. cit.
[2] So Ms. *nāsty*.
[3] Such is the reading of our Ms.—Minaev has *siṁhāṇa*; M. *siṁghāṇa*.—*M. Vyut.* § 189 (114) çiṅghāṇaka.—See *Çikṣās.*, p. 209, l. 10, and P.W.
[4] *M. Vyut.* § 189 (119) *lasikā*.

इन्त्रकोमलता नाहं । प्रत्येकममी अहंप्रत्ययविषया न भवन्ति । नास्थि नाप्यस्थि शोणितं । अस्थि हड्ड[1] शोणितं रुधिरं । एतद्वयमपि नास्ति नाहं । शिंघाणं न च श्लेष्मा न पूयं । शिंघाणं नासिकाविवरनिर्यातः क्लेदः । श्लेष्मा मुखविव-
5 रविनिर्गतः । पूयं व्रणे पक्वरुधिरं । एतान्यपि नाहं भवन्ति । लसिकापि वा लसिका व्रणक्लेदः सापि नाहं ॥

नाहं वसा न च स्वेदो न मेदो ऽन्त्राणि नाप्यहं ।
न चाहमन्त्रनिर्गुण्डी गूथमूत्रमहं न च ॥ ५९

नाहं वसा न च स्वेदो न मेद इति । वसा शरीरस्नेहः ।
10 स्वेद प्रस्वेदः । मेदः चतुर्थो धातुः । इमान्यपि नाहं । अन्त्राणि नाप्यहमिति । अन्त्राणि प्रसिद्धानि तान्यपि नाहं । न चाहमन्त्रनिर्गुण्डी । अन्त्रनिर्गुण्डी[2] सूक्ष्मात्मिका । सापि नैवाहं । गूथमूत्रमहं न च । गूथं विष्ठा । एतदपि द्वयं नाहं भवति ।

15 नाहं मांसं न च स्नायु[3] नोष्मा वायुरहं न च ।
न च छिद्राण्यहं नापि षड्विज्ञानानि सर्वथा ॥ ६०

---

1 Ms. *hattaṁ*. See P.W. *haṭṭa* and *haḍḍa*.

2 = zhag.—Ms. *sūkṣmāttikā*; Tibetan has : suprasiddhā.

3 Minaev and Mss. *snāyur*.

नाहं मांसं न च स्नायु नोष्मा । स्नायु[1] सिरा[2] । ऊष्मा शरीरतेजोधातुः । इमे ऽपि नाहं । वायुरहं न च । वायुराश्वासप्रश्वासादिलक्षणः सो ऽपि नैवाहं । न च छिद्राणि चक्षुरादीनि । तान्यपि नाहं । नापि विज्ञानानि सर्वथा । षट् चक्षुःश्रोत्रघ्राणजिह्वाकायमनोविज्ञानानि [163a] तान्यपि नाहं भवन्ति ।

सर्वथा सर्वप्रकारेण । प्रत्येकं समुदितानि वा । तथा हि दन्तादिसमुदायात्मकमेव विचार्यमाणं शरीरमुपलभ्यते । तच्च प्रत्येकमहंप्रत्ययवेद्यं न भवति । प्रत्येकमहंप्रत्ययस्य तेष्वभावात् । न हि परेषामप्येकैकशः केशादयो ऽहंप्रत्ययवेद्या भवन्ति ॥ 10 समुदिता अपि त एव केवलाः पूर्ववत् । न च समुदितेषु तेषु कश्चिदेकः संभवति । तस्य प्रतिषेत्स्यमानत्वात् । नाप्यनेके समुदिता अप्येकप्रत्ययविषया भवितुमर्हन्ति न चानेकेष्वेकप्रत्ययो ऽभ्रान्तो युक्तः । न च भ्रान्तेस्तत्त्वव्यवस्था । तस्मात्कल्पनामात्रमेतदहमित्यर्थशून्यमाभातीति निश्चितं ॥ 15

उक्तं चैतदशुभभावनाप्रस्तावे शिक्षासमुच्चये[3] । सन्त्यस्मिन् काये केशा रोमा[णि] नखा दन्ता रजो मलं[4] त्वक् मांसास्थि

---

1 Ms. *snāyuḥ*.

2 First hand: *sirah*.

3 See *Çikṣâs.*, p. 209, l. 7-11. The quotation is from the Ratnamegha—See M. Vyut. 189, *Khuddaka Pâṭha* (J.R.A.S. 1869, p. 311, 326) to which Prof. Bendall refers.—On *açubhabhâvanā*, *M. Vyut.* 52; Kern Manual, 54; above IX 41 and 79.

4 Comp. *M. Vyut.* 189 (117 *dantamala*, 125. *karṇamala*. 182, *mala*).

स्नायु[1] शिरा[2] बुक्का[3] हृदयं प्लीहकः क्लोमकः। अन्त्राण्यन्त्र-
गुणाः। आमाशयः पक्वाशयः। औदरीयकं[4]। यकृत् पुरीष-
मश्रु स्वेदः खेटः शिंघाणकं[5] वसा। लसिका। मज्जा मेदः
पित्तं श्लेष्मपूयशोणितं मस्तकलुङ्गं[6] प्रस्रावः। एषु च वस्तुषु
5 बोधिसत्त्व उपपरीक्षणजातीयो भवति॥ एतत्पुनः पश्चात्काय-
स्मृत्युपस्थानपर्यन्तं निर्देक्ष्यामः॥

एवं निर्विषय एवाहंप्रत्ययः॥ स्यादेतद्यदि नाम केशादयो
ऽहंप्रत्ययवेद्या न भवन्ति। तथापि नायं निर्विषयः सिध्यति।
यतो ऽन्तर्व्यापारपुरुषगोचर एवाहंप्रत्ययो ऽस्माभिरिष्यत इति
10 नैयायिकादयः। नैतदपि युक्तं। यस्मादहं गौरः कृशो दीर्घो
गच्छामीत्याद्याकारपरामर्शात्मक एवायमहंप्रत्ययः प्रतिभासते।
न चात्मन एतद्रूपमिष्यते[7] परैः। न चान्याकारेण ज्ञानेनान्यस्य
ग्रहणं युक्तमतिप्रसङ्गात्। तथा हि। तद्वान्। इदमि[164a]दं
तस्य लक्षणमुपवर्णयन्ति परे[8]। तत्र नैयायिकास्ताव-
15 न्नित्यं सर्वगतं प्रतिप्राणिभिन्नमचेतनं चेतनायोगात्तु चेतनं।

---

1 *Çikṣās.* has *snāyuḥ*; see p. 451 l. 1.

2 So Ms.

3 So Ms.—Read *vṛkkā* and see Prof. Bendall's note.—*M. Vyut.* has *plīhaḥ.*

4 *loṅ-ka* = intestines, entrails, guts.—*len-ge* in Tib. translation of *Çikṣās* is a misprint.—*M. Vyut.* 189 (100).

5 So Ms.

6 *Çikṣās.* has *mastakam mastakaluṅgam.*

7 Reading uncertain, not supported by Tib. *hdi-dag-la bdag-tu hdod-pa-ma-yin* "do not consider them as ātman."

8 Ms. *lakṣaṇam* । *upa*°.—Tib. *hdi ltar yaṅ de-daṅ-ldan-pa hdi ni hdi o zhes mthsan-ñid yin-par*... ..

सुखादिगुणाधारं[1] शुभाशुभकर्मकर्तारं। तत्फलोपभोक्तारं परलोकिनं चात्मानमिच्छन्ति॥ नैयायिकवैशेषिका अपि। यदुक्तं।

अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयं।
स्वतो ऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा॥ 5
शुभाशुभानां कर्तारं कर्मणां तत्फलस्य च।
भोक्तारं चेतनायोगाच्चेतनं न स्वरूपतः॥ इति।

जैमिनीयास्तु। व्यावृत्त्यनुगमात्मकं बुद्धिरूपेण परिणामिनं चैतन्यरूपमात्मानमिच्छन्ति। तच्च चैतन्यं बुद्धिस्वभावं न च तस्य प्रवृत्तिनिवृत्ती भवतः। तस्योभयत्राऽनुगतरूपत्वात्। 10 तद्यथा सर्पस्य कुण्डलावस्थानिवृत्तावृजुत्वावस्थाप्रवृत्तौ च सर्पत्वस्योभयत्राप्यनुवृत्तिः॥ यथोक्तं।

व्यावृत्त्यनुगमात्मानमात्मानमपरे पुनः।
चैतन्यरूपमिच्छन्ति चैतन्यं बुद्धिलक्षणं॥
यथाहेः कुण्डलावस्था व्यपेति तदनन्तरं। 15
संभवत्यार्जवावस्था सर्पत्वं न निवर्तते॥
तथैव नित्यचैतन्यस्वभावस्यात्मनो ऽपि न।
निःशेषरूपविगमः सर्वस्यानुगमो ऽपि च॥ इति।

इति विशेषः। अन्यत्सर्वं पूर्ववत्॥ जैनास्तु जैमिनीय-

---

1 Ms. *sukhādiravaguṇādhāram.*—Tib. bde-ba-la-sogs-pa yon-tan rgyui-rten dan.

वचैतन्यमात्मानमिच्छन्ति द्रव्यपर्यायरूपेण यथायोगमनुगमव्यावृत्त्यात्मकं॥ तथा चोक्तं।

जैमिनीया इव प्राज्ञैर्जैनाश्चिल्लक्षणान्तरं।
द्रव्यपर्यायरूपेण व्यावृत्त्यनुगमात्मकं॥

5 कापिलास्तु नित्यं व्यापकं निर्गुणं स्वयमेव चैतन्यात्मकमात्मानमिच्छन्ति। न तु बुद्धिसंबन्धात्। बुद्धेः स्वयमचित्स्वभावत्वात्। चैतन्यं पुरुषस्य स्वरूपमिति वचनात्। नापि स कस्य चित्कार्यस्य कर्ता स्वयं तत्फलोपभोक्ता वा निष्क्रियत्वात्। प्रकृतिरेव तत्कर्त्री तस्य। तत्फलोप[164]भोक्त्री च।
10 विपर्यासवशादसौ स्वात्मनि तत्समारोपयति॥ तथा हि। यदा पुरुषस्य शब्दादिविषयोपभोगाकारमौत्सुक्यमुपजायते। तदा प्रकृतिः[1] परिज्ञातपुरुषौत्सुक्या पुरुषेण युज्यते। ततः शब्दादिसर्गं[2] करोति। शब्दादिषु श्रोत्रादिवृत्तिभिर्मनसाधिष्ठिताभिः परिगृहीतेषु विषयेषु बुद्धिरध्यवसायं करोति।
15 ततो बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयत इति। एवं चैतन्यस्वरूपत्वान्निर्गुणत्वं। व्यापित्वान्निष्क्रियत्वमिति सांख्यपुरुषस्य विशेषः॥ उक्तं च।

चैतन्यमन्ये मन्यन्ते भिन्नं बुद्धिस्वरूपतः।
आत्मनश्च निजं रूपं चैतन्यं कल्पयन्ति ते॥

---

1 rañ-bzhin. 2 hbyin-pa.

प्रधानेनोपनीतं च फलं भुङ्क्ते च केवलं ।
कर्तृत्वं तस्य नैवास्ति प्रकृतेरेव तन्मतं ॥

प्रवर्तमानान् प्रकृतेरिमान् गुणां-
स्तमोवृतत्वाद्विपरीतचेतनः ।
अहं करोमीत्यबुधो हि मन्यते 5
तृणस्य कुब्जीकरणे ऽप्यनीश्वरः[1] ॥ इति ॥

औपनिषदादिनस्तु समस्तप्राणिसंतानान्तर्गतमेकमेव व्यापि नित्यं च ज्ञानमिच्छन्ति । तद्विवर्तरूपतया सकलमिदं क्षिति-जलपवनहुताशनादिकं जगदवभासते । तत्स्वभाव एव चात्मा । न बाह्यं किमप्यवयवि परमाण्वादिकं ग्राह्यं प्रमाणप्रसिद्धमस्ति ॥ 10 आह च ।

नित्यो ज्ञानविवर्तो ऽयं क्षितितेजोजलादिकः ।
आत्मा तदात्मकश्चेति संगिरन्ते ऽपरे पुनः ॥
ग्राह्यलक्षणसंयुक्तं न किंचिदिह विद्यते ।
विज्ञानपरिणामो ऽयं तस्मात्सर्वं परीक्ष्यते ॥ इति । 15

पुद्गलवादिनस्तु पुनरन्तश्चरतीर्थिकाः स्कन्धेभ्यस्तत्त्वान्यत्वा-भ्यामवाच्यं पुद्गलनामानमात्मानमिच्छन्ति । अन्यथा तीर्थिक-सिद्धान्ताभिनिवेशदर्शनं स्यात् ॥ आह चात्र ।

---

1 = *Sāṁkhyakramadīpikā*, 43, with the reading *bhimanyate* (Garbe, *Sāṁkhya Phil.* p. 308 and 69).—Prof. Garbe wrote to me in 1898: "I have never considered the *S. Kr. d.* so old that it could be quoted by an author of that antiquity (Prajñākaramati). Perhaps both, the quotation in your text and the corresponding passage in *S. Kr. d.* are taken from an original source which we don't know yet."

केचित्सौगतंमन्या[1] अप्यात्मानं प्रच[165 ]क्षते । इति ॥

[2]कथमात्मनो ऽहंप्रत्ययविषयता स्यात् । स्वस्वरूपेण तथा-
प्रतिभासनात् । तत्कथमात्माहंप्रत्ययतया प्रतिभासत इत्युच्यते ।
तस्मादिकल्पमात्रमेतत् । निर्विषयमुत्पद्यत इति स्थितं ॥

5 संप्रति चित्स्वभावात्मवादिनः सांख्यादयः । षड्विज्ञानाना-
मात्मनिषेधमसहिष्णवः प्राहुः । शब्दादिज्ञानं चिदात्मकमा-
त्मैवास्माभिरभिधीयते । तत्कथमस्यात्मताप्रतिषेध उच्यते ॥
इति पराभिप्रायमाकलय्य सिद्धान्तवादी प्रसङ्गमासञ्जयन्नाह ।

**शब्दज्ञानं यदि तदा शब्दो गृह्येत सर्वदा[3] ।**

10 ननु यदि शब्दज्ञानात्मक आत्मा तस्य च नित्यत्वाच्छब्दज्ञानं
नित्यं स्यात् । तदा शब्दो ऽपि सदा[3] नित्यमेव तद्भावाभाव-
कालयोर्ग्रहीतव्यः स्यात् । शब्दग्रहणस्वभावस्य तस्य तत्सद्सत्ता-
काले सर्वदानुवर्तनात् । अन्यथा नित्यत्वमेव तस्य हीयेत ॥
भवत्येवमेवेति चेत् । आह ।

15 **ज्ञेयं विना तु किं वेत्ति येन ज्ञानं निरुच्यते ॥ ६४**

ज्ञानमेव नित्यमुपस्थितं । शब्दस्य तु कादाचित्कत्वान्न

[1] Tib. = *kecit saugatā anye* = bder-gçegs-pa hga-kha-cig ni gzhan yaṅ bdag-tu rab-brjod-byed.

[2] Tib. *dei phyir ji-ltar* = *tasmāt katham, tat katham.*

[3] The Sanskrit text has *sarvadā* and the Tib. *thams-cad thse-na*—Tib. Commentary has *rtag-tu* = *sadā nityam eva.*

सर्वदा व्यक्ताभिव्यक्तिः । ततश्च तदव्यक्ताकारे ज्ञेयं विना विषयमन्तरेण किं वेत्ति किं जानाति तज्ज्ञानं । तुच्छो ऽव्यक्ताकारज्ञानविशेषे वर्तते । येन ज्ञेयेन शून्यमपि ज्ञानं निरुच्यते । अभिधीयते । ज्ञेयं जानातीति ज्ञानमाख्यायते । तदभावात्कथं ज्ञानमित्याशयः । एतदेवाह । 5

अजानानं यदि ज्ञानं काष्ठं ज्ञानं प्रसज्यते ।

यदपि विषयं न जानाति तदपि यदि ज्ञानमुच्यते । तदा काष्ठमज्ञानस्वभावं ज्ञानं प्रसज्यते । न हि तेन किंचिदपराद्धं येन न विज्ञानं स्यात् । न चैवं । तस्माद्विषयपरिज्ञानाभावाद्यथा काष्ठं ज्ञानं न भवति तथान्यदपि न स्यात् । 10 इत्याह ।

तेनासंनिहितज्ञेयं ज्ञानं नास्तीति निश्चयः ॥ ६२

येन निर्विषयं न ज्ञानं तेन कारणेन । असंनिहितज्ञेयं । असंनिहितमयोग्यदेशस्थं[1] ज्ञेयं ग्राह्यो विषयो यस्य तदयोग्यं ज्ञानं नास्ति न विद्यत इ[165b]ति । निश्चय एकान्त एव । 15 सापेक्षत्वात् ।

स्यादेतत् । शब्दस्य सदाविद्यमानत्वात्[2] । नासंनिहितविषयं शब्दज्ञानं । अपरथं तु कदा चित्कादाचित्काभिव्यक्ति-

---

1 See *Nyāyabindu*.

2 Sgra rtag-pa yod-pa ma-yin-pai-phyir = .... sadā a°.

कादाचित्कत्वादिति[1] नोक्तदोषप्रसङ्गः । नैतदस्ति । यतो यद्यस्य ज्ञानस्य
परिच्छेद्यं रूपं तत्तस्य ग्राह्यमित्युच्यते । तच्च यदासंनिहितविषयतया[2]
ग्राहकमज्ञानमभिधीयते[3] । शब्दस्य तु यदा संबन्धमात्रं वा न
विवक्षितं । ज्ञानं तु सदा चिद्ग्राहकमित्येतावतैव साध्यसिद्धेः ।
5 तस्मादसंनिहितविषयमित्यनेन ज्ञानस्यैवाग्राहकत्वं साध्यते ।
येन रूपेण ज्ञानस्य ग्राह्यो विषयस्तस्य न सर्वदा संनिधान-
मस्तीति कृत्वा इति कथं नोक्तदोषप्रसङ्गः । शब्दस्य यथा
सर्वदा सत्त्वं नास्ति तदिदमत्रभवानोच्यते ॥

अपि च । यदि शब्दज्ञानमेवात्मा तदा तद्ग्रहणात्मकत्वा-
10 त्तस्य रूपग्रहणं न स्यात् । नैतदस्ति । यतस्तदेव रूपग्राहक-
मिष्यत इति चेदाह । तदेवेत्यादि ।

तदेव रूपं जानाति तदा किं न शृणोत्यपि ।

तदेव शब्दज्ञानमेव यदि रूपं जानातीति मतं । तदा
किं न शृणोत्यपि । तदा रूपग्रहणकाले किमिति न शृणो-
15 त्यपि । शब्दमपि किं न गृह्णाति । शब्दज्ञानत्वात् । अथ
शृणोत्येव । यदि संनिहितं स्यात् । केवलमसंनिधानात् । न
दोष इति । परस्योत्तरमाशङ्क्याह । शब्दस्येत्यादि ।

---

1 Kādācitkatva = res-hga-yin-pa.

2 = sadā-a°.

3 MS. grāhakaṃ jñānam (Virāma after ṃ).—...hdzin-par byed-pa çes-pa ma-yin-par brjod-par-byao.—I print according to the Tibetan; but I have little doubt that we must read *agrāhakaṃ jñ°*—See below l. 5.

**शब्दस्यासंनिधानाद्वा ततस्तज्ज्ञानमप्यसत् ॥ ६६ ॥**

शब्दस्य विषयतामापन्नस्यासंनिधानादयोग्यदेशात् । ग्रहणं [न] स्यादि[1] एवमभिधीयते । ततस्तत्[2] ज्ञानमप्यसत् । तस्मात्तर्हि शब्दस्यासंनिधानात्तत् ज्ञानमपि शब्दज्ञानं । असदविद्यमानं । शब्दज्ञानमेव तर्हि तत्र भवतीत्यर्थः ॥ 5

किं च यदि शब्दज्ञानं तदा रूपग्रहणात्मकं तन्न युज्यत इत्याह । शब्दग्रहणेत्यादि ।

**शब्दग्रहणरूपं यत्तद्रूपग्रहणं कथं ।**

शब्दस्य ग्रहणरूपं शब्दस्य ग्रहणस्वभावं शब्दग्राहकमिति यावत् । यत् ज्ञानं तद्रूपग्रहणं रूपग्रहणात्मकं । कथं । न 10 कथंचिदपि स्यात् । एकस्य निरंशस्य रूपद्वयायोगात् ॥ ननु यथा कश्चि[166a][3]देक एव कस्यचिदपेक्षया पिता कस्यचिदपेक्षया च स एव पुत्रः स्यात् । तथा प्रकृते ऽपि रूपद्वय-मेकस्य भविष्यतीत्याह । एकः पितेत्यादि ।

**एकः पिता च पुत्रश्च कल्प्यते न तु तत्त्वतः ॥ ६७ ॥** 15

एक पिता एव जनकः पुत्रश्च अन्यः स एवेति कल्प्यते ।

---

1 So MS.—Tib. gives no help.

2 So MS.

3 The fol. 166 is wanting in the Nep. MS.; the fol. 167 is numbered (figures and letter-numerals) 166.

तत्र कश्चिद्विशेषः । ततः कालमिक प्रथमं [illegible] । यदि च रूपग्रहणकाले ऽपि शब्दग्रहणात्मक[मेक]मेव तत् ज्ञानं[1] तदा तत्स्वभावमुपलभेत । न चोपलभ्यते । ततो न तद्रूपा-त्मकमित्याह । शब्दग्रहणेत्यादि ।

शब्दग्रहणयुक्तस्तु स्वभावस्तस्य नेष्यते ॥ ६५ 5

शब्दग्रहणेन युक्तः संबद्धः । तु शब्दो विशेषाभिधाने । स्वभावस्तस्य रूपग्राहकस्य ज्ञानस्य नेष्यते न प्रतीयते । यत-स्तदा तस्य शब्दग्रहणात्मता नास्तीति निश्चीयते ॥

स्यादेतत् । यदि नाम न प्रतीयते तथापि तदेव तत्[2] ॥
[166a] कथं तर्हि रूपग्रहणमित्याह । तदेवेत्यादि । 10

तदेवान्येन रूपेण नटवत्सोऽप्यशाश्वतः ।

तदेव शब्दज्ञानं । अन्येन रूपेण स्वभावेन रूपग्रहणात्मकेन रूपं गृह्णातीति शेषः । कथमिव तथानुरूपता । नटवत् । यथा नाट्यसमये रङ्गभूमिगतो नटः । एक एव नानारूपेणा-वतरति । तथा प्रकृते ऽपीति न दोषः ॥ अत्राह । सो 15 ऽप्यशाश्वत इति । अनित्यः पूर्वस्वभावपरित्यागेन रूपान्तरमा-विशति । न च पूर्वापरकालयोरेकस्वभाव एव नटो नाना-

---

[1] çes-pa de gcig ñid yin-na...
[2] de-lta-na yaṅ de ñid de yin-no she-na, de-ltar-na, ji-ltar . .

रूपसंबन्धात् । अन्यथा तथापि रूपद्वयमेकदा चेति[1] भवेत् ।
इति साध्यविकलो दृष्टान्तः ।

यथापि स्यात् । भावः स एव । स्वभावः पुनरस्यापरापर उत्पद्यते निरुध्यते च । ततो ऽयमदोष इत्यत आह । स
5 एवान्येत्यादि ।

स एवान्यस्वभावश्चेदपूर्वेयं तदेकता ॥ ६६

स एवात्मा नटो वा । अन्यस्वभावो ऽपरस्वभावः । चेदुच्यते । तदा ऽपूर्वेयं तदेकता । अपूर्वेयमदृष्टपूर्वेयमीदृशी तदेकता । तस्य भावस्यापरस्वभावोत्पत्तावप्येकता । अभिन्ना-
10 त्मता । तथा हि स एवेति तत्त्वमाख्यायते । पुनरन्यस्वभाव इति तस्यैवान्यत्वं । न चैतत्परस्परविरुद्धधर्मद्वयमेकस्य युक्तं । न हि भावो नामान्य एव स्वभावात् । येन तस्योत्पादनिरोधयोरपि भावस्य तौ न स्यातां । नापि तदभिन्नस्य स्वभावस्योत्पादनिरोधयोर्भावस्य तादवस्थ्यं युक्तमभेदाभावप्रसङ्गात्[2] ।
15 भेदे वा संबन्धासिद्धिरिति भावः ॥

स्यादेतत् । भवत्येवैष प्रसङ्गो यदि रूपद्वयमस्यात्मनः सत्यं स्यात् । किं तर्हि नियमस्य रूपमपहायापरं रूपमतात्त्विकं

---

[1] So MS.—Tib. gives no help: gñis-po yaṅ gcig-tu sems-la (?) snaṅ-bar hgyur-ro. Possibly *sems-la* = *iti*.

[2] So Nep. (first-hand) and Tib. *tha-dad-pa ma-yin-pa med-par thal-bar hgyur-bai-phyir.*—Second-hand *yuktaṁ bheda°.*

तेन गोमहिषप्रसङ्गः । इत्याशङ्कामपाकुर्वन्नाह । अन्यद्रूप-
मित्यादि ।

अन्यद्रूपमसत्यं चेन्निजं तद्रूपमुच्यतां ।

अन्यद्रूपं तद्विषयोपाधिकं स्फटिकोपलस्येव असत्यमस्वाभा-
विकं । इति चेद्यदि । तर्हि निजं तद्रूपमुच्यतां । निजं 5
स्वाभाविकं । तस्यात्मनो रूपं तत्त्वं । उच्यतां । यस्यैवान्यद्रूपं
तस्य किं तत् । ज्ञानता चेत् ।

ज्ञानता चेत्ततः सर्वपुंसामैक्यं प्रसज्यते ॥ ६७

ज्ञानात्मतैव तस्य पूर्वापरकाला[166a]नुगामिनी । निजं रूपं
किमन्यद्वाच्यं । [1]आपद्यते । वस्तुतो भेदे ऽपि विशेषाभावात् ॥ 10
इत्थं च पुनरिदमतिप्रसज्यत इत्याह चेतनेत्यादि ।

---

1 There is no lacuna in Nep. MS.—I have no information concerning the Maith. MS.—Tib. has: gzhan ni ci-zhig brjod-par-bya. dei gzugs-kyis sña-ma dań phyi-ma-dag-tu gzugs gzhan dań hbrel-ba-na yań çel bzhin-du hdi gcig-pa yin-no zhes gal-te zer-nao. de-ltar-na skyes-bu kun gcig-tu thal-bar hgyur-te. de-ltar-na de çes-pa-ñid-du thun-moń-bai chos yin-pas-so. dper na sña-ma dań phyi-mai dus-kyi sgra dań gzugs-kyi çes-pa-dag dei rnam-pa tha-dad-pas tha-dad-pa yin-na yań gcig yin-pa de-ltar-na sems-can kun-te. srog-chags-kyi rgyud-du gtogs-pa-rnams bdag-gcig-tu thal-bar hgyur-ba hthob-par hgyur-la. dńos-po tha-dad-pa yań khyad-par med-pai-phyir-ro = *kim anyad vaktavyam*, tadrūpeṇa pūrva-apara-anya-rūpa-saṁbandhe pi sphaṭikavad yady eko 'stīty ucyate, evam sarvapuṁsām aikyaṁ prasajyate, evaṁ jñānatvena tat-sādhāraṇarūpatvāt, tadyathā pūrvāparakālikayoḥ çabdarūpajñānayor bhinnākāratvād bhinnayor apy ekatvam eva, tathā sarvasattvānām. prāṇi-gati-gatānām ekātmatā prasajyate, *āpadyate*.

चेतनाचेतने चैवं तयोर्येनास्तिता समा ।

यदि वावान्तरं[1] भेदनिबन्धनं विशेषमपास्य किं[2]चिदा-
कारकमाश्रित्यैकत्वमुच्यते । तदा चेतना पुरुषधर्मः । अचेतना
प्रकृत्यादिधर्मः । चकारो दोषान्तरसमुच्चये । ते ऽप्येकमभिन्नं
5 वस्तु स्यातां । कथं । तयोश्चेतनाचेतनयोर्येन कारणेन । अस्तिता
समा । सापि भावानां निजं रूपं । समा द्वयोरपि तुल्या ॥

[3]ननु चात्रापि सादृश्यनिबन्धनमिष्यत एवैकत्वं वस्तुभेदे ऽपि ।
ततो ऽयमिष्टप्रसाधनाददोष इत्याह । विशेषस्येत्यादि ।

विशेषस्य यदा मिथ्या कः सादृश्याश्रयस्तदा ॥ ६८

10 दूषणान्तरद्योतने चकारः । विशेषो भेदः । सर्वभावाना-
मनिष्टेन यदा मिथ्या ऽसत्यं । निजमेव रूपं सत्यं । तदा
कः सादृश्याश्रयः स्यात् । किमाश्रित्य[4] सादृश्यं व्यवस्थाप्यते ।
विशेषसद्भावे हि किंचित्साधर्म्येण सादृश्यं स्यात् । विशे-
षाभावे च तदेव तत्स्यान्न सदृशं । न हि गोगवययोर्विशेष-
15 मननुभवन् । स गवयो गोसदृशो भवेदपि तु गौरेव

1 *yadi vā av°*—bar-skabs-kyi.

2 rnam-pa cuṅ-zhig-la brten-nas = kaṁ cid ākāram.—ākārakam? *ka* from a second hand.

3 ci-ste hdi-la yaṅ dhos-po tha-dad-na yaṅ hdra-bai rgyu-mtshan-gyis gcig-pa-ñid yin-te de-lta-bas na = *nanu atrāpi vastubhede pi sādṛçyanibandhanenai-katvam asti tatas ...*

4 Ms. āçrtya.

स्यात्[1] । अतो विशेष एव सादृश्याश्रयः । स च यदा पारमार्थिको न भवति । तदा कः सादृश्यस्य समानाकारतायाः पुंसामन्यस्य वा आश्रयो निबन्धनं वा भवेत् । नैव कश्चिदित्यर्थः । अतो वस्तुत एवैकत्वमापतितं भवतो न सादृश्यकृतं[2] । तत्कथं सिद्धसाधनाद्दोष इत्युच्यते ॥ 5

एवं कापिलजैमिनीयपरिकल्पितस्य चित्स्वभावस्यात्मनः सत्त्वमसिद्धं । उपनिषदादिपरिकल्पिते ऽपि यथासंभवं दूषणं यदिदमभिधेयमिति ॥

सांप्रतमचेतनस्य नैयायिकादिपरिकल्पितस्यात्मनः सद्व्यवहारप्रतिषेधायाह । अचेतनस्येत्यादि । 10

अचेतनश्च नैवायमाचैतन्यात्पटादिवत् ।

चेतनस्तावदुक्तक्रमेणात्मा न युज्यते । अचेतनोऽपि न[3] चायमात्मा युक्त इति चकारार्थः । कुतः । आचै[167a]तन्यात् । चैतन्याभावात् । न विद्यते चेतनाऽस्येत्यचेतनः । तस्य भाव आचैतन्यं । उभयपदवृद्धिः । पारलौकिकादिवत् । तस्मात् । 15 अचेतनत्वादित्यर्थः । कथमिव पटादिवत् । यथा पटघटपर्वतादयश्चैतन्यविरहादात्मा न भवन्ति । तथाभिमतोऽपि[4]

---

1 So Ms.—According to the Tib. *gogavayayor viçeṣânanubhave na...*

2 Hdra-bas byas-pa ni ma yin-no.

3 So Ms.—Sems-med kyaṅ bdag ma yin-par bstan-pai ched-du min-te shes te . mi-rigs-so shes-pa ni aṅ-gi sgrai don-te.

4 de-bzhin-du mṅon-par-hdod-pa kyaṅ.

कर्मकर्तृत्वादेरस्याभ्युपगमात्। अन्यथा न किंचित्प्रयोजनं तेन। न चाचेतनस्य तद्युक्तं। यथा पटादेः॥

यदि नाम स्वयमसावचेतनस्तथापि बुद्धेश्चेतना[1] चेतयते। तेनायमदोष इति पराभिप्रायं संभावयन्नाह। अथ ज्ञ
5 इत्यादि।

**अथ ज्ञश्चेतनायोगादज्ञो नष्टः प्रसज्यते॥ ६९**

अथेति पृच्छायां। अथायमात्मा चेतनायोगाद्बुद्धिधर्मवा-यात्। स्वयमचेतनोऽपि ज्ञो भवति। जानातीति ज्ञ इति कप्रत्ययान्तस्य रूपं[2]। एवमुपगम्यमानेऽज्ञो नष्टः प्रसज्यते। यदा
10 तर्हि मदमूर्छावस्थायां चेतनानिवृत्तावयमात्माऽज्ञो न किं-चिदपि जानाति। तदा नष्टः प्राक्तनचैतन्यसंबद्धस्वभावपरि-त्यागाद्विनष्टः प्रसज्यते॥

चैतन्यसंबन्धासंबन्धकालयोरेकस्वभावत्वान्नायं दोष इति परमाशङ्कयन्नाह। अथाविकृत इत्यादि।

15 **अथाविकृत एवात्मा चैतन्येनास्य किं कृतं।**

अथ चैतन्योत्पादनिरोधयोरविकृत एव। अनुत्पन्नानिरुद्ध-स्वभाव एवात्मा। यद्येवं तर्हि चैतन्येनास्य किं कृतं।

---

1 *buddhiç*, second hand.—bloi sems-kyis sems-dan-ldan-par byed-de.

2 *Pāṇ*. 3. 1. 135.

अचेतनस्य सर्वकालमविज्ञातस्य सतः । अस्यात्मनः । चैतन्येन बुद्धिसमवायेन किं कृतं । किमतिशयाधानमनुष्ठितं । न किं चित् । बुद्धिसमवाये पि तथैवाप्रच्युतप्राच्यस्वभावस्यावस्थाना-दचेतन एवात्मा ॥

तथा च सति किमनुष्ठितं भवद्भिरित्याह । 5

## अशस्य निष्क्रियस्यैवमाकाशस्यात्मता मता ॥ ७०

अशस्य किं चिदपि हिताहितं ज्ञातुमशक्तस्य । निष्क्रियस्य । निर्गतो बहिर्भूतः क्रियाया इति निष्क्रियः । तस्य सर्वप्रतीकार-रहितस्यानाधेयातिशयतयाऽसंस्कर्तव्यस्य । अथ वा सर्वकर्मणि [167b] शक्तिविकलस्य गमनादिक्रियाशून्यस्य वा आकाशस्य 10 प्रकृतानुपयोगित्वादाकाशकल्पस्य । एवं सत्यात्मता आत्म-स्वभावताव्यवस्था व्यवस्थापिता ॥ एतच्च स्वमतेनोदाहरणं । यथा निःस्वभावतया सर्वक्रियाशून्यं प्रज्ञप्तिसन्मात्रमाकाशं तथात्मापीत्यर्थः । परमतेनापि वा । यथा च न कर्मकर्त्रादिरूप-माकाशमचेतनत्वादक्रियत्वाच्च । तथात्मापीति भावः ॥ 15

इदानीं पुनरन्यथात्मप्रतिषेधबाधकं परमतेनोत्थापयन्नाह । न कर्मेत्यादि ।

## न कर्मफलसंबन्धो युक्तश्चेदात्मना विना ।

यदि न कश्चिदेकः परलोकी स्यात् । तदा तेनात्मना

परलोकगामिना विनाऽन्तरेण कर्मफलसंबन्धोऽयुक्तः[1] । कर्म शुभाशुभं । फलं च तस्यैवेष्टानिष्टलक्षणं । तयोः संबन्धः । कर्मणः कृतस्य फलेन वा संबन्धः । येनैव कृतं कर्म तस्यैव तत्फलप्रतिलम्भो नान्यस्येति । न युक्तो न घटत इष्यते च
5 परलोके कर्मफलसंबन्धः । तत्र च सौगतानामप्यविवादः ।

तथा च सूत्रं[2] । अनेनैव कृतं कर्म कोऽन्यः प्रत्यनुभविष्यति । न हि भिक्षवः कृतोपचितानि[3] कर्माणि पृथिवीधातौ विपच्यन्ते । नाब्धातौ । न तेजोधातौ । न वायुधातौ । उपात्तेष्वेव[4] स्कन्धधात्वायतनेष्विति विस्तरः ।

10 उक्तं च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।

सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनां । इति ॥[5]

ततः कर्मफलसंबन्धोऽनिवारितो भवतामपि । तस्माद्-अवश्यमङ्गीकर्तव्य आत्मा । अन्यथा सर्वमेतदसंगतं स्यात् ॥

15 कथमसत्यात्मनि कर्मफलसंबन्धो घटत इत्याह । कर्म कृत्वेत्यादि ।

---

1 gal-te hjig-rten pha-rol-po hgro yaṅ med-par hgyur-na dei-tshe bdag-dṇ hjig-rten pha-rol-tu hgro-ba yod-pa ma yin-zhiṅ. med-na las-hbras-hbrel-par mi rigs-so = *yadi na kaç cit paralokaḥ syāt tadā sa ātmā paralokagāmī na syāt.* [*tad*] *abhāvāt karmaphalasambandho na yuktaḥ syāt.*—Observe that *ekaḥ* (na kaçcid ekaḥ) is not translated. The original reading was *yadi na kaçcid ekaḥ paralokagāmī*; from the wrong reading *paraloki* follows the total alteration of the sentence.

2 See *Divyāvadāna*, p. 54, and elsewhere.

3 On the import of the word *upacita*, see *Madh vṛtti*. 303, n. 4.

4 See ibidem 285, n. 3.

5 See *Divya* 504, 23; 582, 4; etc: *Abhidh. k.v.*, Soc. Asiat. fol. 221.

**कर्म कृत्वा विनष्टे हि फलं कस्य भविष्यति ॥ ७१**

हि यस्मात्[1] कर्म कृत्वा कर्मेत्यादि शुभाशुभलक्षणं । विनष्टे निरुद्धे सति कर्मकर्तरि । फलं कस्य भविष्यति । आत्मनोऽसत्त्वे परलोकगामिनः कस्यचिदभावात् । येन चित्तक्षणेन कृतं कर्म तस्य क्षणिकतया [168ᵃ] तत्कर्मक्रियाकाले निरुद्धत्वात् । कृतस्य कर्मणः फलं सुगतौ दुर्गतौ वा सुखदुःखात्मकं कस्य भविष्यति । उत्पत्स्यते । नैव कस्यचित् । परलोके च कृतकर्मण एव फलयोगिनो[2] ऽन्यस्य कस्यचिदुत्पादात् । इति कृतविप्रणाशो [ऽ]कृताभ्यागमश्च स्यात्[3] ॥ उपलक्षणं चैतत् । स्मृतिप्रत्यभिज्ञानसंशयनिर्णयस्वार्थनिहितप्रत्यनुमार्गण-दृष्टार्थकुतूहलविरमणकार्यकारणभावतदधिगतप्रमाणबन्धमोक्षा-दयोऽपि न स्युः । चेद्यदि मतं तन्न युक्तमित्याह । द्वयोरित्यादि ।

**द्वयोरप्यावयोः सिद्धे भिन्नाधारे क्रियाफले ।**

द्वयोरप्यावयोः । आत्मवादिनो भवतो मम च नैरात्म्य-वादिनः । सिद्धे निश्चिते । के सिद्धे आह । भिन्नाधारे क्रियाफले । कर्मक्रिया यस्मिन् भवे । तस्याः फलं परलोके । ते भिन्नाधारे । नानाधिकरणे सिद्धे । तथा हि । न येनैव शरीरेण तस्मिन्

---

1 nii sgras ni gaṅ-gi-phyir.

2 hbras-bu daṅ ldan-pa.

3 byas-pas chud-za zhiṅ ma-byas-pa daṅ hphrad-par hgyur—See *Syādvāda-mañjarī*, § 18 (p. 151); *Sarvadarçana* 26, 18 (Gough's translation of this passage and my own translation are wrong).

जन्मनि कर्म करोति तेनैव प्रेत्य फलमुपभुङ्क्ते । अतोऽन्यदेव कर्मकर्तृ तदन्यच्च फलोपभोक्तृ । अतो भिन्नाधारे क्रियाफले भवतः । अत्र चाविप्रतिपत्तिरावयोः ॥

स्यादेतदात्मव्यापारमन्तरेण ते एव कर्तृत्वोपभोक्तृत्वे न
5 स्यातामित्यत्राह ।

## निर्व्यापारश्च तत्रात्मेत्यत्र वादो वृथा ननु ॥ ७२

निर्व्यापारो व्यापाररहितः । तत्र तयोः कर्मक्रियाफलोप-भोगयोरात्मा निःक्रियत्वादचेतनत्वात् । नित्यत्वाच्च क्व चिदपि क्रियायां समर्थः ॥ यदप्युक्तं ।

10 ज्ञानमात्रादिसंबन्धः कर्तृत्वं तस्य भण्यते ।
सुखदुःखादिसंवित्तिसमवायस्तु भोक्तृता ॥ इति ।

तदपि पूर्वापरकालयोरविचलितस्वभावस्योक्तक्रमेण न संगच्छते ॥ इति हेतोरत्रात्मनि निर्व्यापारे वादो विवादो । वृथा निष्फलो । यदर्थमयावष्टब्धस्तत्र तस्यानुपयोगित्वात् ॥
15 नन्विति परसंबोधने ॥

ननु यद्यात्मा न भवेत्कथं तर्हि कृतविप्रणाशादिदोषो न स्यात् । ततो [न][1] वृथा तद्वाद इत्याह । हेतु[168ᵇ]मानित्यादि ।

## हेतुमान् फलयोगीति दृश्यते नैष संभवः ।

---

[1] de ltar-bas na rtsod-pa don-med-pa ma-yin-no zhe-na.

यो हेतुमान् कर्मणा युक्तः स एव फलयोगी फलसंबद्धः। इत्येवमेष संभवो न दृश्यते नोपलभ्यते। यस्मादन्य एव मृतो लोके जायते अन्य एव हि[1]। ततो हेतुमतः फलयोगो न दृश्यते॥

एतर्हि कथं नीयते यदुक्तं। अनेनैव कृतं कर्म कोऽन्यः 5 प्रत्यनुभविष्यतीति[2]। अत्राह। संतानस्येत्यादि।

## संतानस्यैक्यमाश्रित्य कर्ता भोक्तेति देशितं॥ ७३

संतानस्योत्तरोत्तरानेकक्षणपरंपरालक्षणस्य कार्यकारण- भावेन प्रवर्तमानस्य। ऐक्यमाश्रित्य[3]। अनेकेष्वेकत्वं[4] लोकाध्य- वसायवशाद्वरोपितमेव[5] निमित्तीकृत्य कर्ता भोक्तेति देशितं। 10 य एव कर्मणः कर्ता स एव तत्फलस्योपभोक्ता च। इत्येतद्देशि- तत्वेऽपि नेयाभिप्रायवशात् भगवता प्रकाशितं। अन्यथा कर्मफलोच्छेदं मन्येत जनः। न तु तावता उभयलोकानुगामिनः सत्त्वमाख्यातं॥ अत एव च तथैवोक्तं। उपात्तेष्वेव स्कन्धधात्वाय- तनेषु विपच्यन्त इति[6]। तथा चेतना कर्म चेतयित्वा कर्मेति 15 वचनाच्च[7]। तदुक्तं।

---

1 So Ms. See above, VIII. 98.

2 See above, 468.6.

3 Ms. āçrtya.

4 One of the aspects of the *avidyā*, *piṇḍasaṁjñā*, *ekasaṁjñā*, etc.

5 Ms. °vaçād āvaropitam.—Possibly *āropitam*.

6 See above, 468.9.

7 See above ad V. 6; also *Madh. vṛtti* ad XVII. 2.—de-bzhin-du sems-pai las-kyis bsam-pas bsams-pai las yin-no zhes gsuṅs-pas-so (?)

कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत् ।
चेतना मानसं कर्म तज्जे वाक्कायकर्मणी । इति[1] ॥

अन्यत्राप्युक्तं ।

सत्त्वलोकमथ भाजनलोकं
5 चित्तमेव रचयत्यतिचित्रं ।
कर्मजं हि जगदुक्तमशेषं
कर्म चित्तमवधूय न चास्ति । इति[2] ॥

तस्मान्न चित्तविनिर्मुक्तमन्यत्कर्मास्ति । [3]तच्च कुशला-
कुशलं चित्तमुत्पाद्य निरुध्यमानं स्वोपादेयचित्तक्षणे कुशला-
10 कुशलादिसंस्कारविशेषवासनामादधाति[4] । तदपि तदाश्रित-
वासनमुत्तरोत्तरतदभिसंस्कृतक्षणपरंपराविच्छेदतः संतानप्रवर्त-
मानं[5] परिणतिविशेषमुपगच्छत्[6] कर्मविशेषानुरूपं तथाविधं
सुखादिस्वभावं चित्तात्मकमेव फलमभिनिर्वर्तयति परलोके[8] ॥

---

1 Quoted *Abhidh. k.v.*, Soc. As., fol. 337 b (chapter IV, initio).—*las-las hjig-rten sna-tshogs skye. las ni sems-pa dan des byas.*

2 Quoted *Pañcakramaṭ*, p. 40, and also *Madh. vṛtti.*

3 de yan dge-ba yan mi dge-bai sems skyes-nas hgags-pa-na ran-gi ñe-bar-len-pa-las byun-bai sems kyi skad-cig-la dge-ba dan mi-dge-ba-la-sogs-pai hdu-byed-pai bag-chags hjog-go. de yan des gzhag-pai bag-chags gzhan dan gzhan des mnon-par-hdu-byas-pai skad-cig-ma gzhan dan gzhan rgyun ma-chad-pas hjug-pa-na yons-su-gyur-pai khyad-par ñe-bar-skyeo. las-kyi khyad-par dan rjes-su mthun-pa de-lta-bno (?). rnam-pa bde-ba-la-sogs-pai ran-bzhin-gyi sems-kyi bdag-ñid-kyi hbras-bu hjig-rten pha-rol-tu skyed-par byed-do zhes brjod-do.

4 *viçeṣa*, not translated—*vi* from a second hand, *çeṣa* in margin.

5 According to the Tibetan: °*kṣaṇaparamparāsaṃtānāvicchedataḥ pra.*°

6 According to the Tibetan *upajāyate.*

[1] तद्यथा चितिबीजादयः परस्परोपसर्पणप्रत्ययविशेषात्समधिगता-
तिशयतया प्रथमक्षणो[169a]पनिपातिनः स्वोपादेयभूतद्वितीय-
क्षणकलापे कार्योत्पादानुगुणविशेषोत्पादनद्वारेण तदुत्तरोत्तर-
तारतम्यमुपजनयन्तः संततिपरिणामविशेषादन्त्यक्षणलक्षणं प्रकर्ष-
पर्यन्तमासादयन्तो बीजानुरूपशालिकोद्रवाङ्कुरमुत्पादयन्ति ॥ 5
यथा च लाक्षारसपरिभावितं मातुलुङ्गादिबीजमुप्तं तत्संस्कार-
परंपराप्रवृत्तेस्तत्पुष्पादिषु रक्ततामुत्पादयति । न च तत्र
कश्चित्पूर्वापरकालयोरेकोऽनुगामी समस्ति । तच्च कुशलाकुशलं
समानस्यापि[2] कल्पनोपस्थापितत्वात् । नोपन्यासो युक्तः । तदुक्तं ।

यस्मिन्नेव हि संताने आहिता कर्मवासना । 10
फलं तत्रैव बध्नाति कर्पासे रक्तता यथा ॥ इति ॥[3]

तस्माद्यथा बीजादिष्वात्मानमन्तरेणापि प्रतिनियमेन कार्यं
तदुत्पत्तिश्च क्रमेण भवति । तथा प्रकृतेऽपि परलोकगामिनमेकं
विनापि कार्यकारणभावस्य नियामकत्वात्प्रतिनियतमेव फलं ।
क्लेशकर्माभिसंस्कृतस्य संतानस्याविच्छेदेन प्रवर्तनात्परलोके फल- 15

---

1 dper-na de ni sa dañ sa-bon-la-sogs-pa phan-tshun tshogs-pai rkyen-gy khyad-par-las thob-pai khyad-par-du gyur-pa skad-cig-ma dañ-po-las bsed-pa-la rañ-gi ñe-bar-len-pa [r bya-] bas byuñ hgyur-pa skad-cig-ma gñis-par gyur-pai tshogs-pa-la hbras-bu bskyed-pai rjes-su-mthun-pai khyad-par skyed-par gyur-nas phyi-ma phyi-ma khyad-par-du hbyuñ-bai rgyud yoñs-su-gyur-pai khyad-par-las mthar skad-cig-mai mtshan-ñid phul-tu byuñ [ ] thob-bo. sa-bon... skyed-par byed-de.

2 So Ms.—dge-ba dañ mi-dge-ba dañ. mtshuñs-pa-la yañ rnam-par-rtogs-pas gzhag-pai-phyir ñe-bar-dgod-pa ni ma rigs-so.

3 See *Sarvadarçana*, p. 25, and references *Muséon*, 1902, p. 43.

प्रतिसन्धोऽभिधीयते ॥ इति नात्मकृताभ्यागमो न कृतविप्रणाशो बाधकं । ततो नात्मानमन्तरेण कर्मफलसंबन्धो न युज्यते ॥

यथा च सत्येवात्मनि स न घटते । तथा सप्रपञ्चमुच्यमानमतिविस्तरं स्यादिति नेह प्रतन्यते ॥

5 आह च ।

नात्मास्ति स्कन्धमात्रं तु क्लेशकर्माभिसंस्कृतं ।

अन्तराभवसंतत्या कुक्षिमेति प्रदीपवत् ॥ इति ॥

[1]पुद्गलवादिभिस्तत्त्वान्यत्वप्रतिषेधपक्षाभ्युपगमात्स्वयमेव वस्तुत्वं प्रतिषिद्धं । वस्तुनो हि तत्त्वान्यत्वप्रकारानतिक्रमात् । परस्परपरिहारवतोरेकप्रतिषेधापरविधिनान्तरीयकत्वात् ॥ भारहा-

10 [169b]रादि[2]सूत्रमपि समर्थितमचार्यैः । तस्मादाभिप्रायिकीं भगवतो देशनामजानद्भिः परिकल्पितोऽसौ न वस्तु सन् । वस्तुत्वाभ्युपगमे[3] नान्यत्वमित्यात्मनो निराकरणेनैव निरस्तः[4] । इति न पुनर्विशेषेण प्रतिषेधितः ॥

15 उक्तं चैतद्भगवता । इति हि भिक्षवोऽस्ति कर्म । अस्ति फलं । कारकस्तु नोपलभ्यते य इमान् स्कन्धान् विजहाति । अन्यांश्च स्कन्धानुपादत्ते । अन्यत्र धर्मसंकेतात् । अत्रायं धर्मसंकेतो यदस्मिन् सति इदं भवत्यस्योत्पादादिदमुत्पद्यत इति ।[5]

1 gaṅ-zag-tu smra-ba-de-rnams-kyis.
2 See J.R.A.S., 1901, p. 308.
3 dṅos-pos (?) blaṅs-pa na yaṅ gzhan ma-yin-no zhes ..
4 = nirastaḥ pudgalaḥ.—bsal-ba ma yin-no ?? (na nirastaḥ.)
5 *dharmasaṃketa* = chos-kyi-brda.—See *Çālistambasūtra*.

एतेन भगवतैवेदंप्रत्ययतामात्रलक्षणः[1] कार्यकारणभावो ऽपि दर्शित[2] एव । अयमपि च संतानश्चेत्यनेन[3] यथाव्यवहार-मनिरूपितस्वरूपः सूचित[4] एव । संतानवचनेनेदंप्रत्ययतामात्र-स्याभ्युपगमात् । अन्यथा संतान एव न स्यात् । तेन वास्तवकार्यकारणभावभाविनो[5] दोषा नावक्षीयन्ते ॥ 5

इदमेवाचार्यपादैरप्युक्तं ।

अशक्तं सर्वमिति चेत् । बीजादेरङ्कुरादिषु ।
दृष्टा शक्तिर्मता सा चेत्संवृत्यास्तु यथा तथा[6] ॥

कार्यकारणभावप्रतिनियमादेव स्मृत्यभावोऽपि निरस्तः । एकस्यानुगमात्मनोऽभावात् । न स्मर्ता कश्चिदिह विद्यते । किं 10 तर्हि स्मरणमेव केवलमारोपवशात् । स्मर्यमाणवस्तुविषयं । न चात्र स्मर्तुरभावेऽपि कश्चिद्व्याघातः । अनुभूते हि वस्तुनि विज्ञानसंताने स्मृतिबीजाधानात्कालान्तरेण संततिपरिपाकहेतोः स्मरणं नाम कार्यमुत्पद्यते ॥ एवं प्रत्यभिज्ञानादयोऽपि द्रष्टव्याः । अतिविस्तरभयात्प्रत्येकमिह न प्रतिविधीयन्त इति 15 तत्समर्थनमन्यत्रैव विस्तरेणावधार्यमिति ॥

---

1 rkyen-hdi-pa-tsam-kyi mthsan-ñid.

2 Sic Ms. old hand; *r* erased; Tib. has *bstan* = *deçita*.

3 So Ms.—hdi yaṅ rgyun gcig ces-pas = saṁtāna eka ity.

4 bstan-pa.

5 *vāstava* = dnos-po-la grub-pa.—°*bhāvino*... = yod-pai......... = doṣā ye vastutvena siddhe kāryakāraṇabhāve bhavanti.

6 gal-te kun-rdzob hdod-na ji-ltar de-ltar hgyur = *yadi sā çaktir saṁvṛtyā iṣṭā*...

सर्वमेतत्संवृतिसत्यमुपादाय समर्थितं । परमार्थे[1] तु सर्व-
धर्माणां निःस्वभावत्वात्सर्वविकल्पोपरमाच्च । न किंचिदुत्पद्यते
निरुध्यते वा । सात्मकमनात्मकं वा । नापि [170a] विचार्यमाणं
कर्म तत्फलं वा नापीहलोको न परलोको वा न[2] कश्चि-
5 दस्ति । कल्पनाविठपितत्वात् । तस्मात्सर्वमेतत्प्रतिबिम्बसंनिभं
निःस्वभावमुत्पद्यते निरुध्यते च । कार्यकारणं[3] च सात्मकं
निरात्मकं च नित्यमनित्यं चाभिधीयते । स्वप्नवत्कर्मकर्तृत्वं
तत्फलोपभोग[4] इहलोकः परलोकः सुगतिदुर्गतिगमनं च ।
कल्पनानामप्रहाणात् । इति सर्वं सुस्थं । यद्वक्ष्यति[5] ।

10 एवं च न निरोधोऽस्ति न च भावोऽस्ति तत्त्वतः ।
अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत् ॥
स्वप्नोपमास्तु गतयो विचारे[6] कदलीसमाः ।

इत्यादि ॥ उक्तं च ।

कर्ता स्वतन्त्रः कर्मापि त्वयोक्तं व्यवहारतः ।
15 परस्परापेक्षिकी तु सिद्धिस्तेऽभिमतानयोः ॥
न कर्तास्ति न भोक्तास्ति[7] पुण्यापुण्यं प्रतीत्यजं ।
यत्प्रतीत्य न तज्जातं प्रोक्तं वाचस्पते त्वया ॥ इति ।

---

1 Ms. paramārthahetu sarva.°
2 cuṅ-zad.
3 rgyu daṅ hbras-bu.
4 loṅs-spyod-pa-po.
5 Below ix. 150-151.
6 Tib. has *sñiṅ-po med* = asārā.
7 bhoktā = za-ba-po.

यथा निरात्मानश्च सर्वे धर्माः कर्मफलसंबन्धाविरोधश्च[1] । निःस्वभावता च । यथा दृष्टसर्वधर्माविरोधश्च । तथा पितापुत्रसमागमे देशितं । तदुक्तं[2] । भगवानाह । एवमेव महाराज बालोऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयान्यभिनिविशते । सोऽभिनिविष्टः समनुनीयते । समनुनीतः संरज्यते । संरक्तो रागजं कर्माभिसंस्करोति[3] । त्रिविधं कायेन । चतुर्विधं वाचा । [त्रिविधं मनसा][4] । तच्च कर्माभिसंस्कृतमादित एव क्षीणं निरुद्धं विगतं[5] विपरिणतं । न पूर्वां दिशं निश्रित्य[6] तिष्ठति । न दक्षिणां । न पश्चिमां । नोत्तरां । नोर्ध्वं । नाधः । नानुविदिशं । नेह । न तिर्यक् । नोभयमन्तरा । तत्पुनः कालान्तरेण मरणकालसमये प्रत्युपस्थिते । जीवितेन्द्रियनिरोधे आयुषः परिक्षयात् । तत्सभागस्य कर्मणः क्षीणत्वात् । चरमविज्ञानस्य निरुध्यमानस्य[7] मनस आरम्बणीभवति । तद्यथापि नाम [170b] प्रतिविबुद्धस्य जनपदकल्याणी[8] । इति हि महाराज चरमविज्ञानेनाधिपतिना ।

---

1 MS. °sambandhavinirodha—Tib. hbrel-ba mi hgal-ba.

2 Quoted *Çikṣās*. 250.10—Comp. ibid. 226.7.—The first part (... ... ... trividhaṁ manasā) » *locus classicus*, see Madh. vṛtti, 187, note 1.

3 The Tib. adds...*dveṣajam*...*mohajam*.

4 Neither in our MS. nor in the Tib. translation, nor in Çikṣās.

5 hgags-la bral-zhin.

6 = brten-te = niçritya.

7 rnam-par çes-pa tha-ma hgags-pai tshe = caramavijñāna-nirodhakāle.

8 Neither our MS. nor the Tib. translation does repeat the words *ārambaṇam bhavati*. See Çikṣās. p. 253, n. 1.

तेन च कर्मारम्बणेन चौपपत्त्यंशिकं[1] द्वयप्रत्ययं प्रथमं विज्ञान-
मुत्पद्यते। यदि [वा] नारकेषु। यदि वा तिर्यग्योनौ। यदि
वा यमलोके। यदि वा आसुरकाये। यदि वा मनुष्येषु।
यदि वा देवेषु। तस्य च प्रथमविज्ञानस्यौपपत्त्यंशिकस्य समन-
5 न्तरनिरुद्धस्यानन्तरं सभागा[2] चित्तसंततिः प्रतिवर्तते[3] यत्र
विपाकस्य प्रतिसंविदा[4] प्रज्ञायते[5]। तत्र यश्चरमविज्ञानस्य
निरोधस्तत्र च्युतिरिति संख्या भवति। यः प्रथमविज्ञानस्य
प्रादुर्भावस्तत्रोपपत्तिरिति। इति महाराज न कश्चिद्धर्मो-
ऽस्माल्लोकात्परलोकं गच्छति। च्युत्युपपत्ती प्रज्ञायेते। तत्र[6]
10 महाराज चरमविज्ञानमुत्पद्यमानं न कुतश्चिदागच्छति।
निरुध्यमानं न क्व चिद्गच्छति। कर्माप्युत्पद्यमानं न कुतश्चि-
दागच्छति। निरुध्यमानं न क्व चिद्गच्छति।[7] [प्रथमविज्ञान-
मप्युत्पद्यमानं न कुतश्चिदागच्छति। निरुध्यमानं न क्व चिद्ग-
च्छति]। तत्कस्य हेतोः। स्वभावविरहितत्वात्। चरमविज्ञानं
15 चरमविज्ञानेन शून्यं। कर्म कर्मणा शून्यं। प्रथमविज्ञानं
प्रथमविज्ञानेन शून्यं। च्युतिश्च्युत्या शून्या। उपपत्तिरुपपत्त्या

---

1 skye-bai char-gtogs-pai rnam-par çes-pa.
2 skal-ba dañ hdra-ba *or* skal-ba hdra-ba.
3 *Çikṣās.* has *pravartate*, more correct.
4 So MS.—*Çikṣās.* has *pratisamvedanā*, correct.—See below. 479. 1.
5 mñon-par yod.
6 *Çikṣās.* has tatra.
7 Given by *Çikṣās.* and Tib.

शून्या। कर्मणां चावन्ध्यता प्रज्ञायते[1]। विपाकस्य च प्रतिसंवेदना। न तत्र कश्चित्कर्ता न भोक्ता। अन्यत्र नामसंकेतादिति विस्तरः॥ एवं द्वेषमोहाभ्यामपि कर्माभिसंस्करणं यथायोगं वाच्यमिति॥ 5

शालिस्तम्बसूत्रेऽप्युक्तं[2]। पुनरपरं तत्त्वेऽप्रतिपत्तिर्मिथ्याप्रतिपत्तिरज्ञानमविद्या। एवमविद्यायां सत्यां त्रिविधाः संस्कारा अभिनिर्वर्तन्ते। पुण्योपगा। अपुण्योपगा। आनंज्योपगाश्च[3]। [4]इम उच्यन्ते अविद्याप्रत्ययाः संस्कारा इति[4]। पुण्योपगानां संस्काराणां[5] पुण्योपगमेव विज्ञानं भवति[6]। अपुण्योपगानां 10 संस्काराणामपुण्योपगमेव विज्ञानं भवति[7]। [171ᵃ] आनंज्योपगानां संस्काराणामानंज्योपगमेव विज्ञानं भवति[8]। इदमुच्यते संस्कारप्रत्ययं विज्ञानमिति। तदेव विज्ञानप्रत्ययं नामरूपं। नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रिया[:][9] प्रवर्तन्ते।

---

1 las-rnams hbras-bu med-par mi hgyur-bar mnon zhin.

2 See *Çikṣâs*, 222.11—For the first part of the quotation, see above ix. 2.

3 So MS.—*Çikṣâs.* has âniñjya.°

4—4 Wanting in Tib.; but see note 8.

5 hdu-byed-rnams las (abl. not genit.)

6 Tib. adds: hdi-dag ni ma-rig pai rkyen-gyis hdu-byed-rnams zhes-byas zhes-bya-ba dan.

7 Tib adds: hdi-ni hdu-dyed kyi rkyen-gyis rnam-par-çes-pa zhes-bya-bao.

8 The text is corrupt. Tib. has: ..... mi gyo-bar hgro-bai rnam-par çes pa ñid-du hgyur-te hdi ni rnam-par-çes-pai rkyen-gyis min dan gzugs çes byas. min dan gzugs rnam-par hphel-bas......—*Çikṣâs.* has: idam ucyate saṁskārapratyayaṁ vijñānam iti. evam nāmarūpam. nāmarūpavivṛddhyā...—As observed by Prof. Bendall, the Madhyamakavṛtti gives better readings and is followed by the Tibetan translation of *Çikṣâs* itself.

9 bya-ba byed-pa.

तन्नामरूपप्रत्ययं षडायतनमुच्यते । षड्भ्य आयतनेभ्यः षट्
स्पर्शकायाः प्रवर्तन्ते । अयं षडायतनप्रत्ययः स्पर्श इत्युच्यते ।
यज्जातीयः स्पर्शो भवति तज्जातीया वेदना प्रवर्तते । इयं
स्पर्शप्रत्यया वेदनेत्युच्यते । यत्तां वेदयति । विशेषेणास्वादयति ।
5 अभिनन्दयति । अध्यवस्यति । अधितिष्ठति । सा वेदनाप्रत्यया
तृष्णेत्युच्यते । आस्वादना । अभिनन्दना । अध्यवसायस्थानं[1]
आत्मप्रिय[रूप]सातरूपैर्वियोगो मा भवत्विति । अपरित्यागो
भूयो भूयश्च प्रार्थना इदं तृष्णाप्रत्ययमुपादानमित्युच्यते । एवं
प्रार्थयमानः पुनर्भवजनकं कर्म समुत्थापयति । कायेन वाचा
10 मनसा । स उपादानप्रत्ययो भव इत्युच्यते । तत्कर्मनिर्जातानां
[2][पञ्च]स्कन्धानामभिनिर्वृत्तिर्या सा भवप्रत्यया जातिरित्युच्यते ।
या जात्यभिनिर्वृत्तानां स्कन्धानामुप[चय]परिपाकाद्विनाशो[3]
भवति । तदिदं जातिप्रत्ययं जरामरणमित्युच्यते । पेयालं । तत्र
विज्ञानं बीजस्वभावत्वेन हेतुः[4] । कर्म क्षेत्रस्वभावत्वेन हेतुः ।
15 अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः । कर्मक्लेशा विज्ञानबीजं
संजनयन्ति । तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्यं करोति । तृष्णा
विज्ञानबीजं स्नेहयति । अविद्या विज्ञानबीजमवकिरति । [अ]-
सतामेषां प्रत्ययानां विज्ञानबीजस्याभिनिर्वृत्ति[र्न] भवति । तत्र

---

1 *Çikṣās.* has: ...adhyavasānam mā me priyarūpaçātarūpair viyogo bhavatv iti.—Tib. has: ...myoṅ-ba, mṅon-par-dga, lhag-par-zhen-nas hdug-pa-las bdag sdug ṅo-bo dan bden-pai ṅo-bo daṅ hbral-bar. .

2 pañca = lṅa.

3 According to Tib. °pākavināço bhavati = *yoṅs-su-smin-pa* daṅ hjig-par hgyur-ba.

4 rgyu byed-do.

[illegible], Fasc. 1 @ /10/ each ... 0 10
*[illegible] Prakarana, Vol. I, Fasc. 2-5; Vol. II, Fasc. 1-4 @ /10/ each ... 5 0
Padumawati, Fasc. 1-4 @ 2/ ... ... ... 8 0
Pariçista Parvan, Fasc. 1-5 @ /10/ each ... ... 3 2
Prākrita-Paingalam, Fasc. 1-7 @ /10/ each ... ... 4 6
Prithvirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Part II, Fasc. 1 @ 1/- each ... ... 1 0
Prākṛta Lakṣaṇam, Fasc. 1 @ 1/8/ each ... ... ... 1 8
Parāçara Smṛti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... ... 12 8
Parāçara, Institutes of (English) @ 1/- each ... ... ... 1 0
Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... 3 12
Ṣaddarśana-Samuccaya, Fasc. 1, @ /10/ each ... ... 0 10
*Sāma Vēda Saṁhitā, Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV 1-6; V, 1-8, @ /10/ each ... ... ... 20 10
Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... 2 8
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 3 0
*Sankara Vejaya, Fasc. 2-3 @ /10/ each ... ... ... 1 4
Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... 3 12
Srauta Sutra Latyayan, Fasc. 1-9 @ /10/ each ... ... 5 10
„ „ Asbalayana, Fasc. 1-11 @ /10/ each ... ... 6 14
Suçruta Saṁhitá, (Eng.) Fasc. 1 @ 1/- each ... ... ... 1 0
Suddhi Kaumudī, Fasc. 1-4 @ /10/ each ... ... ... 2 8
*Taittreya Brahmana, Fasc. 8-25 @ /10/ each ... ... ... 14 6
„ Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... 1 14
*Taittirīya Saṁhitā, Fasc. 22-45 @ /10/ each ... ... 15 0
Tāṇḍya Brāhmaṇa, Fasc. 1-19 @ /10/ each ... ... ... 11 14
Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... 7 8
*Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol. II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc 1 Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... 23 12
Tattvārthādhigama Sutram, Fasc. 1-3 @ /10/ ... ... ... 1 14
Trikāṇda-Maṇḍanam, Fasc. 1-3 @ /10/ ... ... .. 1 14
Tul'si Satsai, Fasc. 1-5 @ /10/ ... ... ... ... 3 2
Upamita-bhava-prapañca-kathā, Fasc 1-9 @ /10/ each ... ... 5 10
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- ... ... 6 0
Vallāla Carita, Fasc. 1 @ /10/ ... ... ... ... 0 10
Varṣa Kriyā Kaumudī, Fasc. 1-6 @ /10/ ... ... ... 3 12
*Vāyu Purāṇa, Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /10/ each ... 7 8
Vidhāna Pārijata, Fasc. 1-8 @ /10/ ... ... ... ... 5 0
Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... 4 6
Vṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ ... ... ... 3 12
*Yoga Aphorisms of Patanjali, Fasc. 2-5 @ /10/ each ... ... 2 8

*Tibetan Series.*

Pag-Sam Thi S'iñ, Fasc. 1-4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... ... ... 14 0
Rtogs brjod dpag hkhri S'iñ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... 11 0

*Arabic and Persian Series.*

'Ālamgīrnāmah, with Index, (Text) Fasc. 1-13 @ /10/ each ... 8 2
Al-Muqaddasi (English) Vol. I, Fasc. 1-3 @ 1/- ... ... 3 0
Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... 33 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/- each ... ... ... ... 34 0
Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each ... ... 55 8
Ditto English Vol. I, Fasc. 1-8; Vol. II, Fasc 1-3 @ 1/4/ each 13 12
Arabic Bibliography, by Dr. A. Sprenger @ /10/ ... ... 0 10
*Bādshāhnāmah, with Index. Fasc. 1-19 @ /10/ each ... ... 11 14
Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... ... 5 10
Catalogue of Arabic Books and Manuscripts 1-2 @ 1/- each ... 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each ... ... ... ... ... ... ... 31 8
Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... ... 21 0
Fihrist-i-Ṭūsī, or, Tūsy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... 4 0
Futūḥ-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... ... [illegible] [illegible]

| | | |
|---|---|---|
| Haft Āsmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... Rs. | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... | 7 | 8 |
| Iqbālnāmah-i-Jahāngīrī, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Iṣābah, with Supplement, 51 Fasc. @ 1/- each ... ... | 51 | 0 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... | 35 | 0 |
| Maghāzi of Wāqidi, Fasc. 1-5 @ /10/ each ... ... Rs | 3 | 2 |
| Muntakhabu-t-Tawārīkh, Fasc. 1-15 @ 10/ each ... Rs. | 9 | 6 |
| Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... | 15 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... | 11 | 14 |
| Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... | 0 | 10 |
| Niẓāmī's Khiradnāmah-i-Iskandarī, Fasc. 1-2 @ /12/ each ... | 1 | 8 |
| Riyāẓu-s-Salāṭīn, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-5 @ 1/ ... ... . | 5 | 0 |
| Tabaquat Nasiri, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-14 @ 1/ each ... ... | 14 | 0 |
| Ditto Index ... ... ... .. | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhī of Ẓiyāu-d-dīn Barnī, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Tārīkh-i-Fīrūzshāhī, of Shams-i-Sirāj Aif, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| Wis o Rāmīn, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Ẓafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each .. | 10 | 10 |
| Tuzuk-i-Jahāngīrī (Eng.) Fasc. 1 @ 1/ ... ... . | 1 | 0 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... ... 20
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/per No. to Non-Members.

*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N.S., 1905, to date, @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members. ... ...
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25°/₀ to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No.. *J.A.S.B.*, 1878) ... ... . 4 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1884. ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
11. Ditto Grammar " " ... ... ... 8 0
12. Kaçmiraçabdāmṛta, Parts I and II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kaśmir, by M. A Stein, Ph.D., Jl. Extra No. 2 of 1899 ... .. ... 4 0
15. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-33 @ 1/ each ... ... 33 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

N.B.—All Cheques. Money Orders, &c., must be made payable to the "Treasu-

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1305.

## बोधिचर्यावतारपञ्जिका ।

## PRAJÑĀKARAMATI'S COMMENTARY
TO THE
## BODHICARYĀVATĀRA OF ÇĀNTIDEVA.

EDITED WITH INDICES




BY
LOUIS DE LA VALÉE POUSSIN,
*Professor of Sanskrit in the University of Ghent.*

FASCICULUS VI.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1912.

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

The Society's Agents—

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*, AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... | 14 | 6 |
| Aitareyalocana ... ... ... ... ... | 2 | 0 |
| Amarakosha, Fasc. I ... ... ... ... ... | 2 | 0 |
| *Anu Bhāshya, Fasc. 2-5 @ /10/ each ... ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. I, @ /10/ ... ... ... | 0 | 10 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Ātmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-9. Vol. II, Fasc. 1-9 @ 1/ each ... ... ... ... | 18 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhāyana Srauta Sūtra, Fasc. 1-3; Vol. II, Fasc. 1-4 @ /10/ each | 4 | 6 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1, @ /10/ each ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Bṛhaddevatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Çri Çantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 Vol. III, Fasc. 1-7; Vol. V, Fasc. 1-4 @ /10/ each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... | 3 | 2 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-16 @ /10/ each ... | 10 | 0 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 @ /10/ each | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... ... | 1 | 4 |
| Çlokavartika, (English), Fasc. 1-7 @ 1/4/ each ... ... | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. 4, Fasc. 1 @ /10/ each | 10 | 0 |
| Çrī Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1-4 ... ... ... | 3 | 2 |
| Gobhilīya Gṛhya Sūtra, Vol. I, @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2 @ 1/4 /each ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Ditto Gṛhya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. 1 ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... | 17 | 8 |
| Kurma Purana, Fasc. 1—9 @ /10/ each ... ... ... | 5 | 10 |
| Kiranavali, Fasc. I, @ /10/ ... ... ... ... | 0 | 10 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahābhāṣya-pradīpodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1-10 @ /10/ each ... ... | 19 | 6 |
| [illegible] Vol. IV, Fasc. 1-2 @ 1/4/ each ... | 2 | 8 |

कर्मणां नैवं भवति। अहं विज्ञान[बीजस्य] क्षेत्रकार्यं करोमि। तृष्णाया अपि नैवं भवति। अहं विज्ञानबीजं स्नेहयामि। अविद्या[या] अपि नैवं भवति। अहं विज्ञानबीजमवकिरामीति। विज्ञान[171b]बीजस्यापि नैवं भवति। अहमेभिः प्रत्ययैर्जनितमिति। अपि तु विज्ञानबीजं कर्मक्षेत्रप्रतिष्ठितं। तृष्णास्नेहाभिष्यन्दितं। अविद्यावकीर्णं विरोहति। नामरूपाङ्कुरस्याभिनिर्वृत्तिर्भवति[1]। स च नामरूपाङ्कुरो न स्वयंकृतो न परकृतो नोभयकृतो नेश्वरनिर्मितो न कालपरिणामितो न चैककारणाधीनो[2] नाप्यहेतुसमुत्पन्नः। अथ च मातापितृसंयोगादृतुसमवायादन्येषां च प्रत्ययानां समवायादास्वादनानुप्रबद्धं विज्ञानबीजं तत्र तत्रोपपत्त्या मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति। अस्वामिकेषु धर्मेष्वममेष्वपरिग्रहेष्वप्रत्य[3]र्थिकेष्वाकाश[समे]षु मायालक्षणस्वभावेषु। हेतुप्रत्ययानामवैकल्यात्। पेयालं[4]। न तत्र कश्चिद्धर्मोऽस्माल्लोकात्परलोकं संक्रामति। अस्ति च कर्मफलमस्ति च[5] विज्ञ-

---

[1] *Çikṣās.* has: ...vijñānabīje...°pratiṣṭhite...°abhiṣyandite 'vidyāvakīrṇe tatra tatrotpattyāyatana[prati]saṁdhau mātuḥ kukṣau virohati nāma.°... These readings are supported by our Tibetan translation except as concerns the reading *utpatti°* (*correct : upapattyāyatana*).

[2] So MS. and *Çikṣās.*—Tib. has: raṅ-bzhin-las ma byuṅ byed-pa-la rag-las-pa ma yin=na svabhāvād utpanno na kāraṇādhīnaḥ.

[3] *apratyarthikeṣu* is wanting in Tib.

[4] Supply the omitted passage from *Çikṣās* 225, 5—18.

[5] *Çikṣās.* asti ca karmaphalaprativijñaptiḥ, hetu°—Supported by our Tib. translation: las-kyi hbras-bu mṅon-par yaṅ yod-do=karmaṇaḥ phalam prajñāyate.

भिर्हेतुप्रत्ययानामवैकल्यात्। पेयालं[1]। यथाग्निरुपादान-
वैकल्यान्न ज्वलति[2]। उपादानावैकल्याच्च ज्वलति। एवमेव
कर्मक्लेशजनितं विज्ञानबीजं तत्र तत्रोपपत्त्यायतनप्रतिसंधौ
मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति। अस्वामिकेषु धर्मेष्व-
5 ममेष्वपरिग्रहेष्वप्रत्यर्थिकेषु। [आकाशसमेषु]। मायालक्षण-
स्वभावेषु हेतुप्रत्ययानामवैकल्यात्॥ एवमाध्यात्मिकस्य प्रतीत्य-
समुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः[3]॥

तत्राध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिः[4] कारणैर्द्रष्टव्यः।
कतमैः पञ्चभिः। न शाश्वततः। नोच्छेदतः। न संक्रान्तितः।
10 परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः। तत्सदृशानुप्रबन्ध-
तश्चेति[5]। कथं न शाश्वततः। यस्मादन्ये मारणान्तिकाः[6]
स्कन्धा। अन्य औपपत्त्यंशिकाः[7] स्कन्धाः प्रादुर्भवन्ति[8]। न
तु य एव मारणान्तिकाः स्कन्धाः त एव औपपत्त्यंशिकाः
प्रादुर्भवन्ति। अतो न शाश्वततः॥ कथं नोच्छेदतः। [172 a]
15 न च पूर्वनिरुद्धेषु[9] मारणान्तिकेषु स्कन्धेषु औपपत्त्यंशिकाः

---

1 *Çikṣās.* omits this mention.

2 This first clause wanting in our MS.; the second in *Çikṣās.*

3 This clause wanting in *Çikṣās.*

4 So MS. and *Çikṣās.*—The correct reading is: *pañcabhir ākārair* (rnam-pa lṅar).

5 de daṅ hdra-bai rgyud-du o.

6 tha-ma chi-bai phuṅ-po.

7 skye-bai char-gtogs-pa.

8 *prādurbhavanti* omitted by Tib. translator and by Çikṣās. which adds: api tu māraṇāntikāḥ skandhā nirudhyamānā aupapatty-aṃçikāḥ skandhāç ca prādurbhavanti—But see below.

9 pūrva (sṅon) wanting in *Çikṣās.*

स्कन्धाः प्रादुर्भवन्ति। नाप्यनिरुद्धेषु। अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते। तस्मिन्नेव च समय औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति। तुलादण्डोन्नामावनामवत्। अतो नोच्छेदतः॥ कथं न संक्रान्तितः। विसदृशात्सत्त्वनिकायाद्धि सभागाः[1] स्कन्धा जात्यन्तरेऽभिनिर्वर्तन्ते। अतो न संक्रान्तितः॥ कथं परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः। परीत्तं कर्म क्रियते। विपुलफलविपाकोऽनुभूयते। अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः॥ कथं तत्सदृशानुप्रबन्धतः। यथावेदनीयं कर्म क्रियते। तथावेदनीयो विपाकोऽनुभूयते। अतस्तत्सदृशानुप्रबन्धतः॥ एवमाध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिर्द्रष्टव्य इति विस्तरः॥

तदेवमात्मादिविरहेऽपि कर्मफलसंबन्धोऽविकलः सूत्रेषु भगवता स्वयमुपदर्शित[2] इत्युपदर्शितं[3] भवति। इति नैकस्यो-भया[4]नुयायिनोऽभावेऽपि किं चिद्विरुध्यत इति।

यदि कथं चिदपि नास्त्येवात्मा कथं तर्हि।

आत्मा हि आत्मनो नाथः को नु नाथः परो भवेत्।
आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः॥

---

[1] MS. has °*nikāyād visabhāgāḥ*...; and *Çikṣās*.-MS. ddhi ṣabhāgāḥ. But the Tibetan translators agree: de skal-pa mñam-pai skye-bas (*sabhāga*, not *visabhāga*)—Prof. Bendall prefers °*nikāyād dhi sa*° and he may be right. The meaning is that a man can be reborn as a god, etc.

[2] = gsuṅs.

[3] = bstan.

[4] gñi-gar hgro-ba.

इति गाथायामुक्तं ॥ चित्तमेवाहंकारसंनिश्रयतया आत्मा-
मात्मशब्देनोक्तं। अन्यत्र सूत्रे

चित्तस्य दमनं साधु चित्तं दान्तं सुखावहं।

इति चित्तस्य दमनवचनात्। तदपि चात्मदृष्ट्यभिनि-
5 विष्टानामन्यथा[1] आत्माद्यपरिकल्पविच्छेदार्थं नेयार्थतया संवृत्या
चित्तमात्मेति प्रकाशितं। न तु परमार्थतः। एतेन यदुक्त-
मार्यलङ्कावतारे।

पुद्गलः संततिः स्कन्धाः प्रत्यया अणवस्तथा[2]।
प्रधानमीश्वरः कर्ता चित्तमात्रं वदाम्यहं ॥

10 इति। तदपि व्याख्यातं[3] भवति यतस्तदपि चान्यत्र पुद्गला-
द्यभि[172b]निवेशबाधनाय वचनं। न तु तावता चित्तस्य
परमार्थसत्त्वमुक्तं। एवमन्यत्रापि स्कन्धादिष्वात्मदेशना नेयार्था।
अतश्चित्तमपि वस्तुतो नाहंप्रत्ययस्य विषयः ॥

भवतु वा चित्तं परमार्थसत्। तथापि न वस्तुतस्तदहंकार-
15 गोचर इत्युपदर्शयन्नाह। अतीतेत्यादि।

अतीतानागतं चित्तं नाहं तद्धि न विद्यते।

त्रिधा हि चित्तं संभवति। परिकल्पमुपादाय। अतीत-

---

[1] gzhan-du hdzin-pai, °ātma° not translated.—This last text (*cittasya damanam*), by which it is established that by *ātman* the only thought is meant, has been said in order of cutting the wronger view of those who search elsewhere for an ātman.

[2] According to the Tib.: *pratyayā hetavas tathā* (rkyen dañ rgyu dañ de-bzhin-du).

[3] vyākhyāta = bsgrubs-pa = siddha.

अनागतं प्रत्युत्पन्नं च। तत्रातीतानागतं नष्टाजातं। चित्तं नाहं। नाहंदर्शनविषयः। कुतः। विध्वंसात्। तदतीतानागतं चित्तं न विद्यते। न संप्रत्यस्ति। नष्टाजातत्वात्। यदतीतं तत्क्षीणं निरुद्धं विगतं विपरिणामितं। यदनागतं तदप्यसंप्राप्तमिति। प्रत्युत्पन्नं तर्हि चित्तमहं भविष्यतीत्यत आह। 5

**अथोत्पन्नमहं चित्तं नष्टेऽस्मिन्नास्त्यहं पुनः ॥ ७४ ॥**

यथोत्पन्नं वर्तमानं चित्तमहमस्तु तदपि न युक्तं। यतो नष्टेऽस्मिन्ना[स्त्य]हं पुनः। अस्मिन् प्रत्युत्पन्ने चित्ते नष्टे द्वितीयक्षणेऽतीते सति नास्त्यहं पुनः। पश्चादहंप्रत्ययस्य विषयो नेष्टः स्यात्। प्रत्युत्पन्नस्य स्थितिर्नोपलभ्यते। तत्कुतश्चित्तमालम्ब्यतां 10 येन आलम्बनं स्यात्। अतो न चित्तालम्बनोऽपीति निरालम्बन एवायमहंप्रत्यय उत्पद्यते। एवमात्मनो ऽसत्त्वानात्मा अध्ववर्तिनश्चित्तस्य च तद्विषयत्वात्[1]। नापि चित्तमहंकारस्य विषय इति प्रसाध्योपसंहरन्नाह। यथैवेत्यादि।

**यथैव कदलीस्तम्भो न कश्चिद्भागशः कृतः। 15**
**तथाहमप्यसद्भूतो मृग्यमाणो विचारतः ॥ ७५ ॥**

यथैव कदलीस्तम्भो रम्भादण्डखण्डं। भागशः प्रत्यवयवशः कृतोऽवधूतो न कश्चिन्न वस्तु सन् प्राप्यते। तथाहमप्यसद्भूतः[2]

---

[1] de-bzhin-du bdag med-de bdag yod-pa ma yin-la dus gsum-du hbyuṅ-bai sems ñid dei yul yin-pai phyir ro = ......cittasyaiva . ...

[2] MS. asambhūta.—Tib. yod-par hgyur-ba ma yin-la.

कदलीस्तम्भवत्। अहमपि अहंप्रत्ययस्य विषयोऽपि। असद्भूतो ऽवस्तुभूतः। वन्ध्यातनयवत्। न कश्चिद्विषयोऽस्यास्तीति भावः। कथं मृग्यमाणो विचारतः। निरूपणात्॥

पुनरन्यद्बाधकमात्मप्रतिषेधे प्रसञ्जयन्नाह। यदीत्यादि।

5 **यदि सत्त्वो न विद्येत कस्योपरि कृपेति चेत्।**

यदि सर्व[173a]थैव सत्त्व आत्मा पुद्गलो वा विचार्यमाणो न विद्येत। न स्यात्। तदा कस्योपरि कृपा करुणा बोधिसत्त्वानां भवेत्। सत्त्वमन्तरेण किमालम्ब्य प्रवर्तेत। करुणा च सम्यक्संबोधिसाधनं। तत्पूर्वकमेव संभारनिदानेषु दानादिषु 10 प्रवर्तनात्। अतः करुणापुरःसराः सर्वबुद्धधर्माः प्रवर्तन्ते।

तथा चोक्तमार्यधर्मसंगीतौ[1]। अथ खल्वार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्।[2] न भगवन् बोधिसत्त्वेनातिबहुषु धर्मेषु शिक्षितव्यं। एक एव हि धर्मो बोधिसत्त्वेन स्वाराधितः[3] कर्तव्यः सुप्रतिविद्धः[4]। तस्य करतलगताः सर्वे 15 बुद्धधर्मा भवन्ति[5]। तद्यथा येन राज्ञश्चक्रवर्तिनश्चक्ररत्नं

---

1 See Çikṣās. 286. 7.

2 This clause is twice repeated in Tib.: bcom-ldan-hdas byaṅ-chub-sems-dpas chos-maṅ-po-rnams-la bslab-par mi bgyio. bcom-ldan-hdas byaṅ-chub-sems dpas chos çin-tu-maṅ-po bslab-par mi byao.

3 = rab-tu-gzuṅ = sugṛhītaḥ.

4 = rab-tu-rtogs-pa = su pratividdha (Çikṣās )—Our MS. supratibaddhaḥ.

5 Çikṣās. adds: katama ekadharmo? yad uta mahākaruṇā. mahākaruṇayā bhagavan bodhisattvānāṁ sarvabuddhadharmāḥ karatalagatā bhavanti.—Supported by our Tib. translation: chos gcig-po gaṅ zhe-na. hdi-lta-ste sñiṅ-rje chen-po....

गच्छति । तेन सर्वबलकायो गच्छति । एवमेव भगवन् येन बोधिसत्त्वस्य महाकरुणा गच्छति । तेन सर्वे बुद्धधर्मा गच्छन्ति[1] ॥ तद्यथा भगवन् जीवितेन्द्रिये सत्यन्येषामिन्द्रियाणां प्रवृत्तिर्भवति[2] । एवमेव भगवन् महाकरुणायां सत्यां बोधिकारकाणां[3] धर्माणां प्रवृत्तिर्भवतीति ॥ 5

आर्यगयाशीर्षे चोक्तं । किमारम्भा[4] मञ्जुश्रीर्बोधिसत्त्वानां चर्या । किमधिष्ठाना[5] । मञ्जुश्रीराह । महाकरुणारम्भा देवपुत्र बोधिसत्त्वानां चर्या सत्त्वाधिष्ठानेति विस्तरः ॥

तस्मादवश्यं प्रथमतः सत्त्वालम्बना करुणाभ्युपगन्तव्या दुःखितसत्त्वाधिष्ठानेन समुत्पत्तेः । सत्त्वाभावे च सा न स्यात् । 10 इति[6] चेत् । एवं मन्यसे यदि । तदा नैतदवक्तव्यमित्याह कार्यार्थमित्यादि ।

**कार्यार्थमभ्युपेतेन यो मोहेन प्रकल्पितः ॥ ७६ ॥**

कार्यमभिमतसाध्यं पुरुषार्थ इत्युच्यते । तदर्थमभ्युपेतेन स्वीकृतेन मोहेन संवृत्या यः प्रकल्पितः समारोपितः सत्त्व- 15 स्तस्योपरीत्यर्थः । तथा हि सकलकल्पनाजालरहितं[7] । सर्वा-

---

1 One more simile in *Çikṣâs.*

2 pravṛtti = hbyuṅ-ba.

3 The first ā is erased (°karakāṇām).—*Çikṣâs.*: bodhikarāṇām.

4 brtsam-pa.

5 brten-pa.

6 *iti* is translated by *she-na.*

7 *jālarahitam* is wanting in Tib.

वरणविनिर्मुक्तं। परमपुरुषार्थतया कुशलमिह साध्यं। तच्च सर्व-
धर्मानुपलम्भमन्तरेण नाधिगम्यते। स च [173b] प्रज्ञाप्रकर्ष-
गमनात्संपद्यते। तच्च सादरनिरन्तरदीर्घकालाभ्यासादुपजायते।
तदारम्भश्च करुणावशादुत्पद्यते। सा च प्रथमतो दुःखितसत्त्वेषु
5 प्रवर्तमाना संभारारम्भनिदानमुत्पद्यत[1] इति कार्यार्थं मोहस्य
संवृतिसत्यरूपस्याभ्युपगमः[2]। ततः प्रथमतः सत्त्वालम्बनैव करुणा।
ततः परं धर्मालम्बनाऽनालम्बना च॥ अयमभिप्रायः। न सर्वथा
सत्त्वस्याभावः। स्कन्धादयो हि संवृत्यात्मशब्देनोच्यन्ते[3]। यथोक्तं
भगवता ये के चिद्भिक्षवः श्रमणा वा ब्राह्मणा वा आत्मेति
10 समनुपश्यन्तः समनुपश्यन्ति इमानेते पञ्चोपादानस्कन्धानिति।
ततो यदि नाम प्रज्ञया निरूपयतः परमार्थतः सत्त्वानुपलम्भः
तथापि संवृत्या न निषिध्यत इति। तदुक्तं।

यतः प्रज्ञा तत्त्वं भजति करुणा संवृतिमतः
तवाभून्निःसत्त्वं जगदिति यथार्थं विमृशतः।
15 यदा चाविष्टोऽ[4]भूर्दशबलजनन्या करुणया
तदा तेऽभूदार्तं सुत इव पितुः प्रेम जगति॥ इति।

चतुस्तवेऽपि[5]।

---

[1] Read *upapadyate* (*pa* written in marg. and erased.—Tib. hgyur-thsogs-kyi rgyu rtsom-pa = saṁbhāra-nidāna-ārambha.

[2] MS. mohasya saṁvṛtisatya *sya* (*sya* erased).—hbras-bui don-du rmoṅs-pa kun-rdzob-kyi bden-pai ṅo-bo khas-blaṅs-pa yin-no.

[3] bden-pai sgras = satyaçabdena.

[4] MS. bhūdd°.

[5] bstod-pa bzhi-pa-las.

सत्त्वसंज्ञा च ते नाथ सर्वथा न प्रवर्तते।
दुःखार्तेषु च सत्त्वेषु त्वमतीव कृपात्मकः॥ इति।

तस्मादमी रूपादय एव संवृत्या[1] सत्त्वशब्देनोच्यन्त इति न करुणा निर्विषया॥

ननु परमार्थतः सत्त्वाभावे कस्य तत्कार्यं। इति कथं 5 तत्साधनाय कस्य चित्प्रवृत्तिरित्यभिसंधायाह। कार्यमित्यादि।

कार्यं कस्य न चेत्सत्त्वः सत्यमीहा तु मोहतः।

न चेत्सत्त्व इति। यदि सत्त्वो नास्ति। तदा एकस्यानुयायिनो[2]ऽभावाद्रूपादीनां चोत्पन्नविनाशित्वात् कार्यं कस्य। न कस्य चित्स्यादित्यर्थः। सत्यमित्यभ्युपगम इति। एवमेवैतन् 10 मतमेवास्माकं। नैव कस्य चित्परमार्थतः कार्यं। अस्वामिकत्वात्सर्वधर्माणां। यद्येवं कथं तर्हि तत्साधनाय प्रथमतः प्रवृत्तिरिति चेत्। ईहा तु [174a] मोहतः। ईहा चेष्टा पुनस्तत्कार्यार्थितया व्यापार[ो] मोहात्। ममैव तत्कार्यं भविष्यतीत्येकत्वाध्यवसायेन सत्त्वाभावेऽपि संवृत्या मायास्वभावतया 15 वस्तुतो निरीहत्वात्सर्वधर्माणामन्यच प्रतीत्यसमुत्पादात्। तदुक्तं।

निरीहा वञ्चिकाः[3] शून्या मायावत्प्रत्ययोद्भवाः।
सर्वधर्मास्त्वया नाथ निःस्वभावाः प्रकाशिताः॥ इति।

तस्मात्संवृतेरेव[4] कार्यार्थव्यापारः॥

---

1 bden-pai sgras = satyaçabdena.

2 rjes-su hgro-ba.

3 So MS.

4 Kun-rdzob-ñid-du = saṁvṛtyā.—hbras-bui don-du bya-ba ldan-pa yin = phalārtham kriyāvattvam.

ननु च मोहो ऽस्माभिः अविद्यास्वभावतया सर्वथैवानुपादेयः। तत्कथं पुनरत्रैव स्वीकार इत्यत आह। दुःखेत्यादि।

**दुःखव्युपशमार्थं तु कार्यमोहो न वार्यते॥७७॥**

द्विविधो हि मोहः संसारप्रवृत्तिहेतुः। तत्प्रशमहेतुश्च। तत्र यः संसारनिदानं स प्रहातव्य एव। अन्यस्तु यः परम्परया दुःखव्युपशमार्थं। सर्वसत्त्वात्माद्यभिनिवेशनिवृत्तिनिमित्तं। कार्यमोहः। कार्यस्य परमार्थसत्यलक्षणस्याधिगमाय मोहः स पुनर्न वार्यते। न प्रतिषिध्यते। उपादीयत एव। परमार्थोपयोगित्वात्। इदमिहा[धि]कृतं[1]। तदपि कार्यं नात्मसुखाभिलाषेण महद्भिरुपादीयते। अपि तु सर्वसत्त्वानामात्यन्तिकसर्वदुःखव्युपशमार्थं। तत्र चोपायभूतः परमार्थाधिगम एव। तस्याप्युपायभूतं[.] [संवृतिसत्यं][2]। संवृतिमन्तरेण परमार्थानधिगमात्। इति दुःखप्रशमार्थता कार्यमोहस्य। एतत्कार्यार्थमविचारत इति[3]। अस्मिन् प्रस्तावे प्रतिपादितमेव पूर्वं। पुनर्विपञ्चितमुक्तं॥

स्यादेतत्। यथा दुःखोपशमहेतुत्वात्। कार्यमोहोऽविद्यास्वभावोऽप्युपगम्यते। तथैवात्ममोहोऽपि तद्धेतुत्वादस्तु। तत्किमात्मा यत्नेन निषिध्यते। तत्सद्भावेऽप्यात्मभावनया संस्कार-

---

1 MS.: ihākṛtam.—Tib. bsam-pa ni hdi yin te.

2 MS. °bhūta *saṁvṛti* saṁvṛtim antareṇa (*saṁvṛti* erased).—Tib.: ..gyur pa ni kun-rdzob-kyi bden-pao yin-te. Kun-rdzob med-par.....

3 See above IX. 4 (p. 371).

क्षयात्[1]। भविष्यति संस्कारनिवृत्तिः। ततः किं नैरात्म्यभावन-येत्याह। दुःखहेतुरित्यादि।

दुःखहेतुरहंकार आत्ममोहात्तु वर्धते।

यथा कार्यमो[174b]हो दुःखोपशमहेतुः। न तथा द्वितीय आत्ममोहः। तस्मिन् सत्यहंकारक्षयाभावात्[2]। आत्म-मोहात्तु। अनात्मन्यात्मविपर्यासदर्शनात्। पुनरहंकारो वर्धते। दृढ उपजायते[3]। किंभूतः। दुःखहेतुः दुःखस्य सांसारिकस्य त्रिदुःखतालक्षणस्य हेतुः कारणं। अहंकारक्षयाच्च दुःखोपशम इष्यते। सति चात्मदर्शने कथमसौ निवर्तेत। कारणेऽविकल-सामर्थ्ये कार्यस्य निवृत्त्ययोगात्। ततो दुःखमपि न निवर्तते। तथा ह्यात्मानं पश्यतः संस्कृतेषु स्कन्धधात्वायतनेष्वहमिति दृढ-तरमुत्पद्यते स्नेहः। ततस्तद्दुःखप्रतीकारेच्छया सुखाभिलाषो दोषान्[4] प्रच्छाद्य तदर्थितया गुणाध्यारोपात्तत्साधनेषु प्रवर्तते। स्वोपकारिणि[5] वयमिति बुद्धिरुपजायते। अहं ममेति च दर्शनात्। परिपन्थिनि विद्वेषः। ततः समस्तदुःखनिदानं सर्व एव क्लेशोपक्लेशा लब्धप्रसराः प्रवर्तन्ते। इत्यात्ममोहप्रवर्तितो दुःखहेतुरहंकारो भवति। तदुक्तमाचार्यपादैः[6]।

---

[1] According to Tib.: tatsadbhāve' pi bhāvanayā....

[2] MS. *pratyuta* erased.

[3] MS. second-hand *vṛddhim upa.*—Tib.: hphel-ba ñe-bar skye-bar hgyur-ro (=vṛddhir upa°).

[4] bde hdod-pai ñes-rnams bsgriba nas=sukhābhilāṣadoṣān....

[5] kho-bo-la phan-pa byed-pao zhes blo skye-bar hgyur-ro=asmāsu hitam karotīti buddhir jāyate.

[6] Nāgārjuna.

यः पश्यत्यात्मानं तस्याहमिति शाश्वतः स्नेहः।
स्नेहात्सुखेषु तृष्यति[1] तृष्णाद्दोषांस्तिरस्कुरुते।
गुणदर्शी परितृष्यन्ममेति[2] तत्साधनान्युपादत्ते
तेनात्माभिनिवेशो यावत्तावत्स संसारः॥
5 आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ।
अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते॥ इति।

इत्यमात्मस्नेहान्निवर्तयितुमशक्तो ऽहंकारः।

ततो ऽपि न निवर्त्यश्चेत्।

ततोऽप्यात्मदर्शनादपि न निवर्त्यो निवर्तयितुमशक्यः।
10 अहंकारश्चेद्यदि। तदा

वरं नैरात्म्यभावना॥ ७८॥

नैरात्म्यस्य पुद्गलादिविरहस्य भावनाभ्यासः। वरमुत्तमं।
आत्मदर्शनप्रवृत्ताहंकारनिवृत्तिहेतुत्वात्। तावत्कालमस्तु[3] प-
[ 175a ] श्चात्पुनरियमपि प्रहास्यते। उपलम्भदृष्टित्वादिति[4]
15 भावः॥ तथा हि तद्भावनाप्रकर्षपर्यन्तगमनात्। साक्षान्नैरात्म्य-
दर्शनात्। विरोधिनः[5]। सत्कायदर्शनं निवर्तते। तन्निवृत्तौ
चैकस्यानुगामिनो दर्शनाभावात्। पूर्वापररूपविकलस्य क्षणमात्रस्य

---

1 Tib.: sred-pas = tṛṣṇayā doṣān....

2 *ti*, from a second-hand.—Tib. = na-yi zhes dei sgrub byed len.—The Tib. has twice seven syllables for each pāda.

3 astu = gzhag-nas (*sthitvā?*).

4 dṅos-por dmigs-pa yin-pai phyir = vastvālambanatvāt.

5 According to Tib.: tatviruddhasatkāya°.

दर्शनं। ततः पूर्वापरसमारोपाभावादनागतसुखसाधनं किं-
चिदात्मनः पश्यति। ततो न तस्य क्वचिद्विषये रागो जायते।
नापि तत्प्रतिविरोधिनि द्वेषः। आसङ्गाभावादेव[1]। नाप्यप-
कारिणं प्रत्यपकारस्थानं पश्यति। येन यस्मिन् कृतोऽपकारः।
तयोर्द्वयोरपि द्वितीयस्याभावात्। न चान्येन कृते ऽपकारे 5
प्रेक्षावतो ऽन्यत्र वैरिनिर्यातनमुचितं। नापि यस्य कृतस्तेनापि[2]।
एवं रागादिनिवृत्तावन्ये ऽपि तत्प्रभवाः क्लेशोपक्लेशा नोत्पद्यन्ते।
नापि वस्तुतः कश्चित्कस्य चिदपकारकारी। इदं प्रतीत्य इद-
मुत्पद्यत इति प्रतीत्यसमुत्पाददर्शनाद्वा। एवं हि पुद्गलशून्य-
तायां सत्कायदर्शननिवृत्तौ छिन्नमूलत्वात्। क्लेशा न समुदा- 10
चरन्ति।

यथोक्तमार्यतथागतगुह्यसूत्रे[3]। तद्यथापि नाम शान्तमते
वृक्षस्य मूलच्छिन्नस्य सर्वशाखापत्रपलाशं शुष्यति। एवमेव
शान्तमते सत्कायदृष्टिप्रशमात्सर्वक्लेशा उपशाम्यन्तीति॥
तस्माद्वरं नैरात्म्यभावना॥ 15

गतमिदमानुषङ्गिकं। संप्रति पुनरहंकारविषयं निरूपयि-
तुमुपक्रमते। स्यादेतत्। यदि नामात्मा विचारेण खरवि-
षाणवदभूतत्वान्नाहंकारस्य विषयः। तथापि कायावयवी[4]
तद्विषयो भविष्यतीत्यत आह। कायो नेत्यादि।

---

1 zhen-pa ñid yin-pas so = āsaṅgabhāvāt (?).

2 gaṅ-la des byas-pa de-la yaṅ-ño = yatra tena kṛtas tatrāpi.

3 This passage is also quoted *Çikṣās.* 242. 7 and *Madh. vṛtti*, p. 361. Çikṣās. has °*palāçāḥ*; Madh. vṛtti° *palāçāni*.

4 See p. 495, l. 11, p. 496, l. 13.

कायो न पादौ न जङ्घा नोरू कायः कटिर्न च।
नोदरं नाप्ययं पृष्ठं नोरो बाहू न चापि सः॥ ७९

न हस्तौ नाप्ययं पार्श्वौ न कक्षौ मांसलक्षणः।
न ग्रीवा न शिरः कायः कायोऽत्र कतरः पुनः॥ ८०

5 कायोऽपि विचारेणैको नैव कश्चिदस्तीत्युपदर्शयति। तथा हि करचरणादयो भागा एव परं[1] दृश्यन्ते। न त्वेकः कायो नाम प्रतिभास[175b]ते। न च तेष्वन्यतमः कायो युज्यते। तथा हि कायो न पादौ। न चरणौ। न जङ्घा। जङ्घा च कायो न भवति। नोरू जानुकटेर्मध्यविशेषौ न
10 कायः। कटिर्न च। श्रोणिरपि नैव कायः। नोदरं जठरमपि कायो न भवति। नाप्ययं पृष्ठं। अयं कायः पृष्ठमपि नैव। नोरः। उरो वक्षोऽपि न कायः। बाहू न चापि सः। स कायो भुजावपि न भवति। न हस्तौ। करावपि न कायः। नाप्ययं पार्श्वौ। अयं कायः पार्श्वावपि न भवति।
15 न कक्षौ भुजमूले अपि न कायः। मांसलक्षणः। नापि स्कन्धलक्षणः कायः। न ग्रीवा। न कंधरा कायः। न शिरः कायः। मस्तकोऽपि कायो न भवति॥ चरणादीनां कायत्वमविचारेण परमाणुशो ऽप्यनवस्थानात्। करचरणादीनामन्यतमच्छेदे कायविनाशेन मरणप्रसङ्गात्। पराभ्युपगमाभावाच्च। नैषु प्रत्येकं

1 hba-zhig = kevalam.

कायात्मता । एवं यदा न प्रत्येकमेते कायस्वभावाः । करोरु-मुखादिमात्रं च शरीरं । तत्कायो ऽत्र कतरः पुनः । अत्र एषु पादादिभागेषु पुरोवर्तिषु शरीरलक्षणाभिमतेषु कतरः कायो भवतु । नैव कश्चिदेकोऽपि विचार्यमाणः कायात्मक उपलभ्यत इति यावत् ॥ 5

अथापि स्यात् । नैवमभिधीयते प्रत्येकं करादयः कायः किं तर्हि सर्वावयवव्यापकत्वादवयविनः सर्वावयवेषु वर्तत इत्याह । यदीत्यादि ।

यदि सर्वेषु कायोऽप्येकदेशेन[1] वर्तते ।

सर्वावयवेषु वर्तमानो ऽप्येकदेशेन वर्तते । युगपत्सर्वात्मना वा । तत्र यदि । सर्वेषु करचरणादिष्ववयवेषु कायो ऽवयवी । एकदेशेन वर्तते । येन स्वभागेन कं स्वावयवं व्याप्नोति । न सर्वात्मना सर्वमित्यर्थः । तदेतत्र वक्तव्यं । यतो यैरेकदेशैरवयवेषु वर्तते । तेष्वपि किमेकदेशेष्वपरैरेकदेशेन व[176a]र्तते सर्वात्मना वेति विकल्पो न निवर्तते । तत्रापि पुनरेकदेशेन वृत्तिकल्पनायामनवस्थाप्राप्तिश्च स्यात् ॥ 10 15

अपि च तस्यावकाशाभावादेवावयवेषु न वृत्तिरित्याह । अंशा इत्यादि ।

---

1 phyogs-gcig-gis.

अंशा अंशेषु[1] वर्तन्ते स च[2] कुत्र स्वयं स्थितः ॥ ८१

अंशा भागा अंशेषु स्वस्वभागेषु वर्तन्ते । व्यवतिष्ठन्ते । स्वस्वभागव्यवस्थितत्वात्सर्वभावानां । स च कुत्र स्वयं स्थितः । स्वयं पुनरसौ कायोऽवयवी क्व नु नाम व्यवस्थित इति न विद्मः ॥

5 अथ द्वितीयो विकल्पः । तत्राह । सर्वात्मनेत्यादि ।

सर्वात्मना चेत्सर्वत्र स्थितः कायः करादिषु ।
कायास्तावन्त एव स्युर्यावन्तस्ते करादयः ॥ ८२

सर्वात्मनापि वृत्तिसंभावनायामवयवेष्वनवकाशत्वाच्च कुत्र स्वयं स्थित इति प्रसङ्गो नाद्यापि निवर्तते । तथापि पुनरपर-
10 मुच्यते । सर्वात्मना सर्वभावेन नैकदेशेन । सर्वत्र सर्वेषु करादिष्व-वयवेषु । आदिशब्दाच्चरणादिषु । स्थितः समवेतः । कायावयवी चेद्यदि । तदा पुनरयं दोषः स्यादित्याह । [3]काया इति कायावयविनः तावन्त एव स्युः । तत्संख्यापरिच्छिन्ना एव प्राप्नुयुः । कियन्तः । यावन्तस्ते करादयः । ते करचरणादयो
15 ऽवयवा यावन्तः । [4]यत्संख्यापरिच्छिन्नास्तत्समवेता अवयविनो ऽपि तावन्त एव भवेयुः । तस्य निरंशतया । सर्वात्मना तेषु परिसमाप्तत्वात् । तदनेकसंबन्धादनेकत्वात् । नान्यथा एकवृत्तिः स्यात् । अयं च प्रसङ्गो ऽनेकैकदेशेन [5]वृत्तिपक्षेऽपि चोदयि-

---

1 So L[2]., M., Commentary.—Min.: aṅgadeçeṣu; Dev. 85: aṅgā aṅgeṣu.

2 Min. has *tu*. (nu ?).

3 According to Tibetan: kāyā ityādi.

4 MS.: tatsaṁkhyā°.

5 d -ma yul-gcig-tu hjug-pai phyogs-la.

तथ्यः । यथा[1] रकारकपिहितापिहितकम्पादयोऽपि यथायोगं वक्तव्या इति ॥

एवं प्रत्यक्षादिप्रमाणसमधिगम्यः कायो नास्ति । बाधकं पुनरस्यानन्तरमुक्तमस्तीति प्रसाधितमित्युपदर्शयन्नाह । नैवान्तरित्यादि । 5

**नैवान्तर्न बहिः कायः कथं कायः करादिषु ।**

पूर्वमन्तर्व्यापारपुरुषप्रतिषेधात् । मांसशोणितादीनां विचारितत्वात् । नैवान्तर्मध्ये कायः । अधुना पुनरवयविनः प्रतिषेधाच्च बहिः न बाह्य[:] प्रत्यक्षादिगोच[ 176b ]रः कायः । इति कथं कायः करादिषु व्यवस्थाप्यते । अथ करादिव्यतिरिक्तो 10 भविष्यतीत्याह । करादिभ्य इत्यादि ।

**करादिभ्यः पृथग् नास्ति कथं नु[2] खलु विद्यते ॥ ८३**

करादिभ्योऽवयवेभ्यः पृथग् भिन्न उपलब्धिलक्षणप्राप्तः[3] कायो नास्ति न प्रतिभासते । करादय एव हि केवलाः प्रतिभासन्ते । एवं यो न करादिस्वभावो नापि तदाधेयः समवेतो 15 नाप्यन्तर्गतो न चापि तद्व्यतिरिक्तः स[4] कायः कथं नु खलु विद्यते । कथं चिदिति । कथं चिदपि कायमनुपलभमानस्तत्त्व-

---

1 = de-bzhin-du = tadyathā.—Comp. *Sāṁkhyasūtravṛtti*, i. 42.

2 Minaev has: tu.

3 Second hand: °prāptiḥ.

4 According to Tib.: sa iti kāyaḥ.

असंभावयन्[1]। पृच्छति। कथं नु। केन प्रकारेण। स्थिति विमर्शे। विद्यते। तत्त्वता व्यवस्थाप्यते ॥

यदा चैवं विचारेण कायो व्यवस्थापयितुमशक्यस्तदा ऽसन्नेव व्यवहर्तव्य इत्युपसंहरन्नाह। तन्नास्तीत्यादि।

**तन्नास्ति कायो मोहात्तु कायबुद्धिः करादिषु।**

तन्नास्ति काय इति यस्मादुक्तविचारेण नोपलभ्यते। तस्मादुपलब्धिलक्षणप्राप्तो ऽनुपलभ्यमानो नास्ति कायः। यदि नास्ति कथं तर्हि करादिषु कायबुद्धिरित्याह। मोहात्त्वित्यादि। मोहादविद्यावशात्। [तु] पुनः। कायबुद्धिः। करादिष्वेकद्रव्यरहितेषु। न तु परमार्थतः। अवधारणे वा तुशब्दः। तथा ह्यनवराग्रसंसारप्रवृत्तिजन्मपरम्परापरिचितमिथ्याभ्यासवासनावशात्। यथावस्थितवस्तुतत्त्वप्रतिपत्तावपि तद्विपरीतसमारोपकल्पनोपजायते। तदुपनिबद्धोऽयं कायादिव्यवहारो लोके प्रवर्तते। न तु पारमार्थिक इति ॥

कथमन्यत्र सा न भवति। इत्यत्राह। संनिवेशेति।

**संनिवेशविशेषेण स्थाणौ पुरुषबुद्धिवत् ॥ ८४**

करचरणादिसंनिवेशः संस्थानं। तदेव विशेषो भेद इतरस्मात्। तेन विभ्रमहेतुना। करादिष्वेव न सर्वत्र सा भवति। प्रतिनियतविषया हि भ्रान्तय इष्यन्ते। कथमिव। स्थाणौ

---

1 de yod mi srid-pa ñid kyi bdri-bar byed-do.

पुरुष[बुद्धि]वत् । यथा स्थाणौ पुरुषस्वभावरहितेऽपि[1] पुरुष-साधारणोर्ध्वता[ 177a ]दिसंनिवेशविशेषमुपलभ्यमानो दूराद्-विवेचितपरविशेषस्य[2] कस्यचिद्विभ्रमात्पुरुषबुद्धिरुपजायते । तथा प्रकृतेऽपीत्यर्थः ॥

स्यादेतत् । कथं पुनरेतदवसितं मोहात्कायबुद्धिर्न तु   5
पुनर्वस्तुत इत्यचाह । यावदित्यादि ।

**यावत्प्रत्ययसामग्री तावत्कायः पुमानिव ।**

यावत् । यावत्कालावधिपरिच्छिन्ना । प्रत्ययानां कारणानां । पृथिव्यादिषड्धातुषट्स्पर्शायतनाष्टादशमनोपविचारात्मकानां कर्माक्षिप्तवृत्तीनां सामग्री समवधानं । तावत्कालावधिरेव कायः   10
पुमानिव । यथा पुरुषस्वभावविरहितोऽपि परमार्थतः परि-कल्पितरूपतया पुरुष इव प्रतिभासते । व्यवह्रियते । उपलक्षणं चैतत् । स्त्रीवेत्यपि द्रष्टव्यं । न पूर्वं कललाद्यवस्थायां न पश्चादिकलितत्वाद्भस्माद्यवस्थायां निजस्वभावाभावात् ॥

इदमत्रापि सामान्यमित्युपदर्शयन्नाह । एवमित्यादि ।   15

**एवं करादौ सा यावत्तावत्कायोऽत्र दृश्यते ॥ ८५**

यथा प्रत्ययसामग्रीसद्भावे कायः पुमानिव प्रतिभासते । सद्भावेन[3] प्रतिभासते । एवं तथा करादौ यावत्सा प्रत्ययसामग्री

---

[1] Skyes-pa dań mtshuńs-par gyen-du hgreń-ba la sogs-pao. dbyibs-kyi.. = ūrdhvatādi. saṁniveça ..................—Possibly : uddhatādi.

[2] MS. dūrādivivecitaḥ. para° (i erased).

[3] So MS.—Tib. has : *de med-pa-na* = tadabhāve na pratibhāsate.

तावत्कायोऽपि करादौ दृश्यते । कल्पनावशात् प्रतिभासते । न तु परमार्थतः । तस्मात्सामग्रीसाकल्ये भवति । तदभावे च न भवति कायबुद्धिः । अतो मोहादेव करादिषु कायबुद्धिरिति स्थितं ॥

अयमत्र समुदायार्थः । तत्तत्प्रत्ययसामग्रीसद्भावे तत्तद्वस्तुस्वभाव-
5 मन्तरेणाप्यभूतं तत्त्वमादर्शयन्ती भ्रान्तिवशादसौ कल्पनोपजायते । तद्वशात्संनिवेशविशेषेषु स्त्रीपुरुषकायादिव्यवहारः प्रवर्तते । अत एव भस्माद्यवस्थायां सामग्रीवैकल्यान्निवर्तते । अतो नायं कायादिव्यवहारो वास्तव इति वक्ष्यति । तदुक्तं[1] ।

कायस्वभावो वक्तव्यो यो ऽवस्थारहित[:][2] स्थितः ।
10 कायश्चेत्प्रतिमाकारः[2] [ 177ᵇ ] पेशीभस्मसु नास्ति सः ॥
सूक्ष्मभावेन चेत्तत्र सौक्ष्म्यं त्यक्त्वा व्यवस्थितः ।
अनिर्देश्यः स्वतः प्राप्तः काय इत्युच्यते कथं ॥ इति ।

उक्तं[3] च ।

हेतुतः संभवो यस्य स्थितिर्न प्रत्ययैर्विना ।
15 विगमः प्रत्ययाभावात्सो ऽस्तीत्यवगतः कथं ॥ इति ।

क्वचित्पाठः ।

यावत्प्रत्ययसामग्री तावत्काष्ठं पुमानिव । इति ।

तत्रेदं व्याख्येयं । यावद्विपर्यासप्रत्ययसामग्री स्थाणौ पुरुष-

---

1 These two stanzas occur Çikṣāsamuccaya 358, 14-17 (with the reading: kāya ity ucyate na saḥ).

2—2 Wanting in the Tibetan.

3 This stanza is quoted from Nāgārjuna's Yuktiṣaṣṭikā—See also Madh. vṛtti, 413. 6.

प्रतीतिस्तावत्काष्ठं स्थाणुस्वभावं पुमानिव पुरुष इव प्रतीयते। न तदभावे। एवमेव करादौ। यावत्सा प्रत्ययसामग्री तावत्कायो ऽयं करादौ दृश्यते। न पश्चात्। अतो मोहादेव कायबुद्धि-रिति निश्चयः॥

ननु यदि नाम कायो नास्ति करचरणादयः पुनरवयवाः 5 प्रत्यक्षोपलब्धत्वात्प्रतिषेद्धुमशक्या इत्याशङ्क्य करादयोऽपि परि-कल्पितस्वभावा एवेत्युपदर्शयितुमाह। एवमङ्गुलीत्यादि।

एवमङ्गुलिपुञ्जत्वात्पादोऽपि कतरो भवेत्।

यथैव विचार्यमाणः कायो नास्ति। एवं करचरणादयोऽपि न सन्ति। यतः। अङ्गुलीनां पुञ्जः समुदायः। अङ्गुलीनामि- 10 त्युपलक्षणं। पार्ष्णिप्रभृतीनामपि द्रष्टव्यः। तस्य भावस्तत्त्वं। तस्मात्तत्स्वभावादित्यर्थः। पादोऽपि चरणोऽपि कतरो भवेत्। तत्समुदायमन्तरेण विचार्यमाणो नैव कश्चिदिति भावः॥ अङ्गुलिपुञ्जोऽपि नैकस्वभाव इत्याह। सो ऽपीत्यादि।

सोऽपि पर्वसमूहत्वात्पर्वापि स्वांशभेदतः॥ ८६ 15

सोऽपि। अङ्गुलिपुञ्जोऽपि विचारतो न वस्तु सन्। कुतः पर्वसमूहत्वात्। पर्वणामङ्गुलिभागानां समूहत्वात्। संघातत्वात् कतरो भवेदिति प्रकृतेन संबन्धः॥ पर्वणामपि प्रत्येकमवस्तुत्व-मित्यत आह। पर्वापि न वस्तु। कस्मात्। स्वांशभेदतः। स्वस्यात्मनो ऽंशानामवयवानां भेदतोऽपि विभागात्॥ 20

अंशा अपि तत्त्वतो न सन्तीत्याह।

**अंशा अप्यणु[178a]भेदेन।**

इति। अंशाः पर्वभागा अप्यणुभेदेन परमाणुशो विभागेन भिद्यमानत्वात्। कल्पिता एव॥

5 अणवोऽपि न प्रत्येकं परमार्थसन्त इत्याह।

**सोऽप्यणुर्दिग्विभागतः।**

दिशां पूर्वापरदक्षिणोत्तराधरोर्ध्वस्वभावानां संबन्धेन विभागतो नानात्वात्। तद्विभागभेदाद्भिद्यमानस्य परमाणोः षडंशता स्यात्। दिक्षु वा विभागा नानादिगवस्थिता नानारूपांशाः
10 परमाणोः। ततो भेदेन [न] तस्य स्वभावोऽवतिष्ठते[1]। दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यत इति न्यायात्॥ तथा हि। पूर्वापरादिदिगवस्थितपरमाण्वभिमुखं यत्तत्परमाणोर्मध्यवर्तिनो रूपं। तत्किमेकमेवापरापरं वा। यद्येकमेवेति पक्षः। तदा सर्वपरमाणूनां परिवार्यावस्थितानामेकदेशताप्रसङ्गः। यतः पूर्वादि-
15 दिगवस्थितपरमाणुसमानदेशतामन्तरेणापरदिगाद्यवस्थितपरमाणुना न प्राग्देशावस्थितपरमाण्वभिमुखस्वरूपाभिमुखं स्यात्। अन्यथा रूपभेदप्रसङ्गात्। तत्समानदेशता च न तत्स्वरूपान्तर्भावमन्तरेण तस्यापि पूर्वदिगवस्थितस्य परमाणोरपरपरमाणुना सर्वात्मना संबन्धेन। तत्स्वरूपान्तर्भावात् परमाणुमात्रं द्रव्यं

1 Tib.: dei rañ-bshin gnas-pa ma yin-no =

स्यात्। तथा च सति प्रचयरूपा भूधरादयो न स्युः॥ अतो भवनादीनां प्रचयमिच्छता द्वितीय एव पक्षः समभ्युपेयः। तदा च षड्भिरपरापररूपेण युगपत्संबन्धात्। षड्भागो मध्यपरमाणुः स्यात्। तत्तद्देशावस्थितापरापरपरमाणुसंबन्धेन तत्परमाणुरूपस्य भेदात्। इति परमाणुरपि नैकस्वभावो युक्तः। 5
यदुक्तमाचार्यपादैः।

षट्केन युगपद्योगात्परमाणोः षडंशता।
षण्णां समानदेशत्वात्पिण्डः स्यादणुमात्रकः॥ इति[1]।

तेऽपि पुनरणीयांसो भागास्तथैव निरू[178b]प्यमाणा निरात्मतया नभःस्वभावतां प्रतिपद्यन्त इत्याह। दिग्विभागो- 10
ऽपीत्यादि।

**दिग्विभागो निरंशत्वादाकाशं तेन नास्त्यणुः॥ ८७**

दिग्विभागोऽपि दिग्भेदेन परमाणोर्विभागोऽपि पूर्ववत्। षडंशतया भिद्यमानः कतरो भवेत्। न किंचिदस्तु स्यात्। एतत्सर्वं च पूर्वेषु योजनीयं। कुतोऽनंशत्वात्। अतोऽभिनिरूप्य- 15
माणो निःस्वभावतया आकाशं शून्यमेव। तेन कारणेन नास्त्यणुः। न विद्यते परमाणुरिति॥

---

1 This celebrated stanza occurs Sarvadarçanasaṁgraha, 18. 5; Nyāyavārttika, iv, 2. 24; Tātparyaṭīkā 459. 28; Sarvasiddhāntas, iii, 12-13; see Wassilieff, 303—[Some various readings: ṣaṭkena yugapad yogāt..........ṣaṭkoṇayugapad yogāt............kiṁ na syād aṇumātrakaḥ...........piṇḍaḥ syād aṇumātrakaḥ]—The first line refers to the Sautrāntika-system; the second line to the Vaibhāṣika.

एवं करादयोऽपि विचारतो निःस्वभावा द्रष्टव्या इति ।
ततः कायोऽपि न परमार्थतः कश्चिदस्ति । एकानेकस्वभाव-
वियोगस्य प्रतिपादनात् । इत्थं न केशादयो न चात्मा नापि
चित्तं न च कायोऽहंकारस्य विषयो वस्तुतः । तस्मादविद्या-
5 समुत्थापितात्मतया आत्मादिसत्त्वमन्तरेणापि प्रवर्तमानोऽयमह-
मिति प्रत्ययो निर्विषय एव समुत्पद्यते । तेन यदुक्तं ।

अहमेव न किं चिच्चेद्भयं कस्य भविष्यति ।

इति तत्समर्थितं । सर्वेण चैतेन कायस्मृत्युपस्थानमुपदर्शितं
भवति । यदुक्तं धर्मसंगीतिसूत्रे[1] । पुनरपरं कुलपुत्र बोधिसत्त्व
10 एवं कायस्मृतिमुपस्थापयति । अयं कायः पादपादाङ्गुलिजङ्घो-
रुत्रि[2]कोदरनाभीपृष्ठवंशहृदयपार्श्वपा[3]र्शुकाहस्तकलाचीबाहुग्री-
वाहनुललाटशिरःकपालमात्रसमूहः कर्मभवकारकोपचितो
नानाक्लेशोपक्लेशसंकल्पविकल्पशतसहस्राणामावासो । बहूनि चात्र
द्रव्याणि समवस्थितानि । यदुत केशरोमनखदन्तास्थिचर्मपिशित-
15 वपुः[4]स्नायुमेदोवसालसिकायकृन्मूत्रपुरीषामाशयपक्वाशयरुधिर-

---

[1] The same quotation occurs Çikṣās. 228. 12—Compare the stock-lists quoted ibidem, p. 209 and here above ad ix. 58 (p. 452), also Khuddaka pāṭha, 3 (J.R.A.S., 1869, 311, 326), Mahāvyutpatti, 189 and Triglotte 65.—I give, in the text, the readings of our MS.

[2] Marked as doubtful M.vyut. 189. 75.

[3] So MS.—*Çikṣās*......pārçvakā—*Trigl.* pārçvikaḥ (*m*)—*Pāli* phāsukā—*Mhv.* II. 520: parçukā (?).

[4] Read vapā (Çikṣās.) = çai-phyi.

खेटपित्तपूयसिंहा[1]णकमस्तिष्क[2]मस्तकलुङ्गानि । एवं बहुद्रव्य-
समूहात्मको ऽयं कायः । तस्य प्रत्यवेक्षमाणस्यैवं भवति ।
आकाशसमो ऽयं कायः । स आकाशवत्काये कृतिमुपस्था-
[ 179a ]पयति । सर्वमेतदाकाशमिति पश्यति । तस्य काय-
परिज्ञानहेतोर्न भूयः क्वचित्स्मृतिः प्रसरति न विसरति न
प्रतिसरतीति ॥

पुनरुक्तं[3] । अयं कायो न पूर्वान्तादागतो नापरान्ते संक्रान्तो
न पूर्वान्तापरान्तावस्थितोऽन्यत्रासद्विपर्याससंभूतः कारकवेदक-
रहितो नाद्यन्तमध्ये प्रतिष्ठितमूलः । अस्वामिको ऽममो
ऽपरिग्रहः । आगन्तुकैर्व्यवहारैर्व्यवह्रियते काय इति देह इति
भोग इति आश्रय इति शरीरमिति कुणप इति आयतन-
मिति । असारको ऽयं कायो मातापितृशुक्रशोणितसंभूतो
ऽशुचिपूतिदुर्गन्धिस्वभावो रागद्वेषमोहविषादतस्कराकुलो नित्यं
शत[4]नपतनभेदनविकिरणविध्वंसनधर्मा नानाव्याधिशतसहस्र-
नीड इति ॥

एवं यदा विचार्यमाणो वस्तुतः शून्यस्वभावतया आका-
शसंकाशः सर्वथा कायस्तदा मिथ्यैव वस्तुतत्त्वमारोप्य रागादि-

---

[1] The reading of our MS. seems to be: Siṁhâṇaka (mchil-ma) written *Sinhāṇaka* (compare elsewhere *vidhvansana*).

[2] Not supported by Çikṣâs., but the Tib. has: klad-pa daṅ klad-rgyas-rnams = mastiṣka-mastaka-luṅgāni = brain and the membrane covering the brain (Çarad Candra).

[3] See Çikṣâs. 229. 7.

[4] bjig-pa, hdrul-ba, brul-ba.

कमुत्पादयन्तः संसारमुपबृंहयन्ति बाला इत्याह । एव-
मित्यादि ।

एवं स्वप्नोपमे रूपे को रज्येत विचारकः[1] ।

एवमित्युक्तक्रमेण स्वप्नोपमे स्वप्नोपलब्ध इव रूपे
5 सौमनस्यस्थानीये को रज्येत्[2] । क आसज्येत्[2] ॥ अस्य
चोपलक्षणत्वात् । को द्विष्यात् । को मुह्येदित्यपि वेदितव्यं ।
तद्य[था][3] सौमनस्यस्थानीयानि चक्षुषा रूपाणि दृष्ट्वा रागो
जायते । दौर्मनस्यस्थानीयानि चक्षुषा रूपाणि दृष्ट्वा द्वेषो
जायते । उपेक्षास्थानीयानि चक्षुषा रूपाणि दृष्ट्वा मोहो
10 जायत इति । यदेतन्मनोऽप्रतिकूलेषु रूपेष्वनुनीतं चरति
तेनास्य राग उत्पद्यते । प्रतिकूलेषु रूपेषु प्रतिहतं चरति
तेनास्य द्वेष[4] उत्पद्यते । नैवानुकूलेषु न प्रतिकूलेषु संमूढं
चरति तेनास्य मोह उत्पद्यते । एवं शब्दादिषु त्रिविधमालम्ब-
नमनुभवति पूर्ववत् । तत्र यः पण्डितजातीयः[5] । इति अत्य-
15 न्ततया चक्षुरायतनं[6] शून्यं चक्षुरायतनस्वभावेन तत्पूर्वान्ततो
[ 279b ] ऽपि नोपलभ्यते । अपरान्ततोऽपि नोपलभ्यते ।
मध्यतो नोपलभ्यते । स्वभावरहितत्वात् । एवमन्येषु श्रोत्रादिषु

---

1 So Burn. 90 and Dev. 85—Minaer has: vicakṣaṇaḥ.
2 So MS.
3 = de-bzhin-du.
4 MS. first hand doṣa.
5 Tib: de la gaṅ dpyod-ldan su zhig ces te | çin tu yaṅ...... = tatra yaḥ kaç cid vicārayukta iti. atyantatayā........
6 *Āyatanam* wanting in Tibetan.

वाच्यं । एवमत्यन्ततया रूपायतनं शून्यं[1] रूपायतनस्वभावे-
नेत्यादि पूर्ववत् । एवं शब्दादिषु वाच्यं ॥

इति हि[2] मायोपमानीन्द्रियाणि स्वप्नोपमा विषया
यस्येति[3] । तस्य कथं रागादिकमुत्पद्यते । अत एवाह ।
विचारक इति । विचारको विचक्षणः । एवमेतद्यथाभूतं 5
सम्यक् प्रज्ञया पश्यन् । को रज्येत् । द्वेष्टि । मुह्यति वा ॥

अत्र च स्वप्नोपमस्त्र्यजनपदकल्याणीप्रभृति भगवतोक्तं
निदर्शनमुपदर्शितव्यं । कायाभावे च स्त्र्यादिकल्पनयापि रागो
न युक्त इत्याह । कायश्चेत्यादि ।

**कायश्चैवं यदा नास्ति तदा का स्त्री पुमांश्च कः ॥ ८८** 10

हेतुसमुच्चये चकारः । यस्मात्स्त्र्यादिकल्पनया रागो न
भवति । कायो यदा एवमुदितनयेन नास्ति । निःस्वभावः ।
तदा कायाभावात् । का स्त्री कामिनी यस्याः कमनीयतया
पुरुषे रागो भवेत् । कश्च पुमान् कामुकः यस्य रञ्जनीयतया
स्त्रियां रागो भवेत् । स्त्री हि स्वात्मनि स्त्रीति संकल्प्य 15
बहिर्धा पुरुषे पुरुष इति रागं जनयति । एवं पुरुषोऽपि
स्वात्मनि पुरुष इति संकल्प्य बहिर्धा स्त्रियां स्त्रीति रागं

---

[1] Tib. = rūpasvabhena.........

[2] Tib. has: de-ltar na......= evaṁ hi............

[3] MS. has: svapnopamān viṣayān paçyati (çya, second hand); but Tib. dbaṅ-po-rnams ni rgyu-ma lta-bu yin-la, yul-rnams ni rmi-lam lta-bu gaṅ-gi yin-pa de-la ji-ltar.........

जनयति । कायाभावे तु स्त्रियां स्त्रीति न संविद्यते । पुरुषे
पुरुषो न संविद्यते । यच्च स्वभावेन न संविद्यते । न तत्स्त्री न
पुरुष इति । तस्मादसति काये स्त्र्यादिकल्पनाकृतो ऽपि
न युज्यते रागः । तत्कस्य हेतोः । मन्यनापगता[1] हि सर्वधर्मा
5 इति ॥ यथाप्रधानमयं निर्देशः[2] । एवमेव चक्षुरादयो
ऽपि स्वभावरहिता वेदितव्याः । तथा द्वेषमोहविषया अपीति ॥

उक्तं चैतद्भगवता पितापुत्रसमागमे[3] । षड्धातुरयं महा-
राज पुरुषः[4] [180a] । षट्स्पर्शायतनः । अष्टादशमनोप-
विचारः[5] । षड्धातुरयं महाराज पुरुष इति । [6]न खलु पुनरेत-
10 दुक्तं । किं चैतत्प्रतीत्य कं[6] । षडिमे महाराज धातवः । कतमे
षट् । तद्यथा पृथ्वीधातुः । अब्धातुः । तेजोधातुः । वायुधातुः ।
आकाशधातुः । विज्ञानधातुश्च । इमे महाराज षड् धातवः ।
यावत् । षडिमानि महाराज स्पर्शायतनानि । कतमानि
षट् । चक्षुःस्पर्शायतनं रूपाणां दर्शनाय यावन्मनःस्पर्शायतनं
15 धर्माणां विज्ञानाय । इमानि महाराज षट् स्पर्शायतनानि ।

---

1 manyanā = mtshan-ma: see below, p. 511.

2 ji-ltar hdi gtsor bstan-pa de-bzhin-du.

3 See Çikṣās. 244. 11.—Compare Majjhima III, p. 240.

4 Skyes-bu gaṅ-zag hdi ni = ayaṁ puruṣapudgalaḥ.

5 So MS.—Çikṣās. has: mana-upa°.

6.6 So MS.—Çikṣās. has: ...... na khalu punar etad yuktam kiṁ caitad pratītyoktam—Both Tibetan versions agree: skyes-bu hdi ni khams drug-pa zhes gaṅ smras-pa ci-la (s) brten te smras çe-na rgyal-po chen-po khams drug ni hdi-dag-go = ṣaḍdhātur ayaṁ puruṣa iti yad uktaṁ kiṁ pratītyoktam iti cet. ṣaḍ ime mahārāja dhātavaḥ......

पेयालं ॥ अष्टादशेमे महाराज मनउपविचाराः । कतमे अष्टादश । इह पुरुषः चक्षुषा रूपाणि दृष्ट्वा सौमनस्यदौर्मनस्योपेक्षास्थानीयानि रूपाण्युपविचरति[1] । एवं श्रोत्रादिषु वाच्यं । तेन प्रत्येकमिन्द्रियषट्के[न][2] सौमनस्यादित्रयभेदादष्टादश मनउपविचारा भवन्ति । पेयालं ॥ कतमश्च महाराज आध्यात्मिकः पृथ्वीधातुः । यत्किंचिदस्मिन् काये ऽध्यात्मं खक्खटत्वं[3] खरगतमुपात्तं । तत्पुनः कतमत् । तद्यथा केशो रोमाणि नखा दन्ता इत्यादि । कतमश्च महाराज बाह्यः पृथ्वीधातुः । यत्किंचिद्बाह्यं खक्खटत्वं[4] खरगतमनुपात्तं । अयमुच्यते बाह्यः पृथ्वीधातुः ॥ तत्र महाराजाध्यात्मिकः पृथ्वीधातुः । उत्पद्यमानो न कुतश्चिदागच्छति । निरुध्यमानो न क्वचित्संनिचयं गच्छति ॥ भवति महाराज समयो ऽयं [यत्स्त्री] अध्यात्मं [अहं] स्त्रीति कल्पयति[5] । सा अध्यात्ममहं स्त्रीति कल्पयित्वा बहिर्धा पुरुषं पुरुष इति कल्पयति । सा बहिर्धा पुरुषं पुरुष इति कल्पयित्वा संरक्ता सती बहिर्धा पुरुषेण सार्धं संयोगमाकाङ्क्षते । पुरुषो ऽप्यध्यात्मं पुरुषो ऽस्मीति कल्पयतीति पूर्ववत् । तयोः संयोग[180b]-माकाङ्क्षणां संयोगो भवति । संयोगप्रत्ययात्कललं जायते ।

---

1 Çikṣās. omits *rūpāṇy*.—Our reading is supported by Tibetan.

2 From Çikṣās.

3 Çikṣās. has Kakkhaṭatva—See p. 245, n. 2.

4 MS. khakkhaṭam.

5 Çikṣās.: *Sa samayo yat strī.—adhyātmam* in marg.

तत्र महाराज यश्च संकल्प्यते[1] यश्च संकल्पयिता उभयमेतन्न
संविद्यते । स्त्रियां स्त्री न संविद्यते । पुरुषे पुरुषो न संविद्यते
इति असद्भूतः संकल्पो जायते[2] । सो ऽपि संकल्पः स्वभावेन
न संविद्यते । यथा संकल्पः । तथा संयोगो ऽपि कल्पमपि
5 स्वभावेन न संविद्यते । यच्च स्वभावतो न संविद्यते तत्कथं
संक्लिष्टतां जनयिष्यति । इति हि महाराज संकल्पं ज्ञात्वा
संक्लिष्टत्वं वेदितव्यं यथा संक्लिष्टमुत्पद्यमानं न कुतश्चिदा-
गच्छतीति[3] । भवति महाराज समयो यदयं कायः क्षयप-
र्यवसानो भवति । तच्च तत्संक्लिष्टत्वं संक्षियमाणं संनिरुध्यमानं
10 न पूर्वां दिशं गच्छति । न दक्षिणां न पश्चिमां । नोत्तरां ।
नोर्ध्वं । नाधो । नानुविदिशं गच्छति । एवं महाराजाध्या-
त्मिकः पृथिवीधातुर्द्रष्टव्यः । पेयालं[4] ॥ तत्र महाराज पृथि-
वीधातोरुत्पादो ऽपि शून्यो व्ययो ऽपि [शून्य] । उत्पन्नो
[ऽपि] पृथिवीधातुः स्वभावशून्यः[5] ॥ इति हि महाराज पृथि-
15 वीधातुः पृथिवीधातुत्वेन नोपलभ्यते । अन्यत्र व्यवहारात् ।
सो ऽपि व्यवहारो न स्त्री न पुरुषः । एवं[6] महाराज यथा-

---

1 Çikṣās.: saṁkalpo.

2 Çikṣās.: jātaḥ.

3 Çikṣās, has: ...... na kutaç cid āgacchati nirudhyamānaṁ na kva cit saṁnicayaṁ gacchatīti.

4 Peyālam = Çikṣās. 245. 18—246. 12.

5 The Tibetan does not support these readings: sai khams te hbyuṅ-ba yaṅ stoṅ, sai khams hjig-pa daṅ hbyuṅ. ba yaṅ ṅo-bo-ñid-kyis stoṅ-no.

6 Çikṣās.: evam evaitat.......

भूतं सम्यक् प्रज्ञया द्रष्टव्यमिति ॥ [1]तेन का मन्यना । मन्यना मारगोचरः । तत्कस्य हेतोर्मन्यनापगता हि सर्वधर्मा इति ॥

एवं कायस्मृत्युपस्थानं प्रतिपाद्य वेदनास्मृत्युपस्थानमुपदर्शयितुं वेदनां विचारयन्नाह । यद्यस्तीत्यादि ।

यद्यस्ति दुःखं तत्त्वेन प्रहृष्टान् किं न बाधते । 5
शोकाद्यार्ताय मृष्टादि सुखं चेत्किं न रोचते ॥ ८९

त्रिविधा हि वेदना सुखा वेदना । दुःखा वेदना । अदुःखासुखा चेति । तच्च रूपवद्वेदनापि परमार्थतो नास्ति । कथमिति चेत् । यद्यस्ति दुःखमसातं वेदितं । तत्त्वेन परमार्थेन । तदा प्रहृष्टान् किं न बाधते । संतोषयुक्तान् किं न 10 दुःखयति । [181a] सुखमपि यद्यस्ति तत्त्वेन तदा शोकाद्यार्ताय । आदिशब्दात्कामभयोन्मादार्ताय । मृष्टादि सुखं चेत् । मृष्टादि सुरसमाहारपानादि । आदिशब्दात्स्रक्चन्दनादि सुखं सुखहेतुत्वात् । सुखं चेद्यदि किं न रोचते । न हि वस्तु सत्स्वभावं कदाचिदपि निवर्तितुमुत्सहते । तस्मात्क- 15 ल्पनोपस्थापितमेव सुखदुःखं वेदनीयमिति ॥

---

1 Çikṣās. 251. 8: tena kā manyanā, manyanā ca nāma mahārāja māragocaraḥ, amanyanā buddhagocaraḥ. tat kasya hetoḥ.........—Tibetan translators do not agree as concerns *manyanā*. We have had above (p. 508) *mtshan-ma* (= nimitta). Here we have: des-na ci-shig-la dpyad-par bya ste. dpyad-par-bya-bai yul ma yin-no......chos thams-cad ni dpyad-pa dañ bral-bao. (= tena kutra vicāryam? nāsti vicāraviṣayaḥ...vicārāpagatā sarvadharmāḥ]—Çikṣās. has *rlom-sems* = 'pride, self-consciousness.'—Bendall compares maññanā, Dh.-Sṇi, 1116. 1233; see also Nettipak. 24 and manana (rlom-pa), amanana (Madh. vṛtti, p. 381, n. 5).

यदुक्तं प्रहृष्टान् किं न बाधत इति। तत्र परस्य समाधानमाह। बलीयसेत्यादि।

**बलीयसाभिभूतत्वाद्यदि तन्नानुभूयते।**

न हि प्रहृष्टावस्थायां सर्वथैव दुःखमसत्। किं तर्हि
5 समुद्भूतवृत्तिना सुखेन तिरस्कृतत्वात् विद्यमानमपि नानुभूयते। बलीयसा ऽतिबलवता सुखेनाभिभूतत्वादुपहतत्वात्। यद्यपि यदि तद्दुःखं नानुभूयते। न वेद्यत इत्युच्यते। तदा न युक्तमेतत्। इत्याह वेदनात्वमित्यादि।

**वेदनात्वं कथं तस्य यस्य नानुभवात्मता॥ ९०**

10 वेदनात्वं वेदनास्वभावत्वं कथं केन प्रकारेण तस्याप्यन्यस्य सुखस्य यस्य नानुभवात्मता। यस्य नानुभूयमानस्वभावता। वेद्यत इति हि वेदनोच्यते। वेदनानुभव इति वचनात्। यदि चावेद्यमानापि वेदना स्यात्। तदा न किं चित्र वेदना स्यादित्यतिप्रसङ्गः॥ अथापि स्यात्। न सर्वथा नानु-
15 भूयते। किं तु। सूक्ष्मतयानुभूतमप्यननुभूतकल्पमित्यचाह। अस्तीत्यादि।

**अस्ति सूक्ष्मतया दुःखं स्थौल्यं तस्य हृतं ननु।**
**तुष्टिमात्रा ऽपरा चेत्स्यात्तस्मात्साप्यस्य सूक्ष्मता[1]॥ ९१**

अस्ति विद्यते। सूक्ष्मतया अनुपलक्ष्यमाणतया दुःखं तर्हि

[1] Dev. 85 has: tuṣṭimātrāpaçreṣṭhā cet = tuṣṭimātrā'pareṣṭā cet.

बलीयसा सुखेन किं कृतमस्य । स्तौल्यमस्य हतं ननु ।
प्रकृष्टावस्थायां प्रवृत्तेन बलवता सुखेन स्तौल्यं प्राबल्यमस्य
दुःखस्य हतमभिभूतं । ननु । नन्विति परस्य संबोधने । इति
मतं भो तव । न हि सूक्ष्मता नाम दुःखस्य सातानुभवकाले
का चिदुपलभ्यते । तत्कथं सूक्ष्मता तस्येति व[ 181b ]क्तव्यं[1] । 5
अथ तुष्टिमात्रा ऽपरा ---- तस्मात्[2] । तस्मादुद्भूतवृत्तेः
सुखात् । अपरा तुष्टिमात्रा द्वितीया सुखमात्रा अल्पीयसी
सुखकणिका स्यात् । दुःखस्य सूक्ष्मता भवेत् । चेदस्याभिप्रेतं ।
ननु साप्यस्य सूक्ष्मता सापि तुष्टिमात्रा ऽपरा । अस्य सुखस्यैव
सूक्ष्मता । न तु दुःखस्य । तुष्टेः[3] सुखजातित्वात् । इति दुःखस्य 10
सूक्ष्मता ऽवेद्यस्वभावा सुखानुभवकाले नास्त्येवेति निश्चितं ॥

स्यादेतत् । न दुःखं कात्स्न्यनिकतया कादाचित्कं । किं तर्हि
कारणवैकल्यात् कदा चिन्नोपलभ्यते । इत्यत्राह । विरुद्धे-
त्यादि ।

विरुद्धप्रत्ययोत्पत्तौ दुःखस्यानुदयो यदि । 15

दुःखेन विरुद्धस्य सुखस्य यः प्रत्ययो हेतुः स्पर्शः । तस्यो-
त्पत्तौ साभिमुख्ये सति । अथ वा । विरुद्धस्य प्रत्ययस्य
सुखहेतोरुत्पत्तौ जन्मनि विरुद्धः प्रत्ययो ऽस्येति वा । दुःखे-

---

[1] MS. vaktavyam atha.

[2] The MS. is almost illegible—the Tib. : on-te de ni de-las gzhan dga-sam zhes te de-las ni phul-du byuṅ-bai bde-las so. =atha sā eva [duḥkhasūkṣmatā] tasmād aparā tuṣṭimātrā iti tasmād eva udbhūtavṛtteḥ sukhāt.

[3] MS. tuṣṭiḥ.

नेत्यपेक्षायामपि ममकत्वात् भवति समाधः। तस्योत्पत्तौ सत्यां प्रहृष्टावस्थायां हेतुवैकल्यात् दुःखस्यानुदयो दुःखस्यानुत्पत्तिरेवेरुच्यते। तदा।

**कल्पनाभिनिवेशो हि वेदनेत्यागतं ननु॥ ९२**

5 ननु यदेवास्माभिरभिहितं तदेव सांप्रतमागतमायातं। किं तत्कल्पनयाभिनिवेशः[1]। कल्पनया कृतो यो ऽभिनिवेशः। हिरवधारणे। स एव वेदना सुखा दुःखा तदितरा वा। नान्यदास्तवं सुखादिसुखादिहेतुर्वास्ति। इति। तथा हि निजस्वभावरहितमपि यत्सुखसाधनत्वेन परिकल्पितं तदभि-
10 निवेशात्सुखं वेदितमुत्पद्यते। इतरस्मादितरत्। कथमन्यथा यदेवान्यस्य दुःखसाधनं तदेवापरस्य कस्य चित्सुखसाधनं स्यात्। तस्यैवैकस्य यस्य शब्दश्रवणादपि दुःखमासीत् पुनः कालान्तरेण तस्य दर्शनात्प्रीतिरुपजायते। तस्मात्काल्पनिकमेव
15 सु[182a]खादिकं तत्साधनं वा न वास्तवं। आह च।

अहिर्मयूरस्य सुखाय जायते
विषं विषाभ्यासवतो रसायनं।
भवन्ति चानन्दविशेषहेतवो
मुखं तुदन्तः करभस्य कण्टकाः॥ इति[2]॥

20 वेदना ऽभिनिवेशस्वभावत्वादेव च विचारेण निवर्तयितुं शक्यत इत्याह। अत एवेत्यादि।

---

1 MS. kalpanāyābhi.°—Tib. rtogs-pas mňon-par shen.

2 Compare the Uṣṭrakaṇṭakabhakṣaṇanyāya, Col. Jacob, First handful, p. i

**अत एव विचारोऽयं प्रतिपक्षो ऽस्य भाव्यते।**

अत एवेति। यत एवाभिनिवेशस्वभावा वेदना। अत एव विचारो ऽयं विमर्शो ऽयं। प्रतिपक्षो विरोधी निराकृतिकारणत्वात्। अस्याभिनिवेशस्य सुखादिरूपस्य। भाव्यते विचिन्त्यते। तत्साधनाभावे तदभिनिवेशाभावात्॥ अपि च। इत्थमप्यभिनिवेशो वेदनेति। आह। विकल्पेत्यादि।

**विकल्पक्षेत्रसंभूतध्यानाहारा हि योगिनः॥ ९३॥**

अत एवेति [अत्रापि] वर्तते[1]। विकल्प एव क्षेत्रं जन्मभूमित्वात्। तस्मिन् संभूतं जातं ध्यानं विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं समाधिजं प्रीतिसुखमित्यादि। ध्यानादि भावना समाधिसमापत्तिर्विकल्पभवत्वात्[2]। तदेवाहारः। शरीरयापनाहेतुत्वात्। येषां ते तथोक्ताः। के ते। योगिनः। हि यस्मात्कल्पनानिर्मितप्रीतिसुखाहारसंधारितशरीरा योगिनः। तस्मात्कल्पनाभिनिवेशो, वेदनेति सिद्धं। एवं हेतुमभ्युपगम्याभिनिवेशो वेदनेति प्रतिपादितं।

सांप्रतं हेत्वनभिसंभवादेव न वेदना वस्तुसती युक्तेत्याह। सान्तरावित्यादि।

---

[1] de-ñid-kyi-phyir zhes-pa ni hdir yaṅ hbrel-to.

[2] So MS.—Tib. bde-ba zhes-pa-la sogs-pai bsam-gtan ni bsgom-pa yin-no. tiṅ-ṅe-hdzin ni sñoms-par hjug-pai yin-no. rnam-par rtog-pa-las byuṅ-ba yin-pai-phyir-ro. = °*sukham ityādidhyānaṁ bhāvanā, samādhiḥ samāpattiḥ, vikalpa*° *bhavatvāt.*

**सान्तराविन्द्रियार्थौ चेत्संसर्गः कुत एतयोः ।**

अयमत्र समुदायार्थः । स्पर्शप्रत्यया वेदना । विषयेन्द्रिय-विज्ञानानां त्रयाणां संनिपातश्च स्पर्शः । स्पर्शाः षट् संनिपातजा इति वचनात्[1] । स च त्रिकसंनिपातजः स्पर्श एव न घटते । कुतस्तत्प्रत्यया वेदना भविष्यतीति । तथा हि । इन्द्रियार्थयोः सान्तरयोर्वा स्यान्निरन्तरयोर्वा । तत्रेन्द्रियार्थावयवि[182b]नौ सान्तरौ सव्यवधानौ यदि तदा संसर्गः संनिपातो मीलनं । कुतः कस्मात् । एतयोरिन्द्रियार्थयोः । नैव युज्यते । स्पर्शो हि संपर्क उच्यते । व्यवधाने सति स कथं भवेदिति भावः ॥

अथ द्वितीयः प्रकारः । सो ऽपि न युज्यत इत्याह । निरन्तर[त्व] इत्यादि ।

**निरन्तरत्वे ऽप्येकत्वं कस्य केनास्तु संगतिः ॥ ९४**

निरन्तरत्वे ऽपि व्यवधानाभावे ऽपि सति । एकत्वं तादात्म्य-मिन्द्रियार्थयोः । एवं हि तयोः सर्वात्मना नैरन्तर्यं भवेद्य-दीषदपि नांशेन व्यवधानं स्यात्सधर्मता[2] च । तत्रान्तराभावे तत्त्वमेव । एवं च कस्य केनास्तु संगतिः । एकत्वे सति भेदा-भावात् । किं केन संगतं स्यात् । न ह्यात्मनैवात्मनः संगतिर्युक्ता ॥

स्यादेतत् । निरंशानामेव परमाणूनां संसर्गो वस्तुतः । न च तेषामंशाभिव्यवहारो युक्तः । स्थूलरूपाणामेव तत्संभवात् । तत्र च संसर्गदूषणे न किं चिद्दूष्यत[3] इत्यपाह । नाणोरित्यादि ।

[1] From Abhidharmakoça, iii, 30.

[2] MS. sadharmitā, i erased.

[3] MS. from a second hand *ddūyate*.

नाणोरणौ प्रवेशोऽस्ति निराकाशः समश्च सः ।

परमाणूनामपि नैव संपर्को युक्तः । यत एकस्याप्यणोरन्यस्मिन्नणौ न प्रवेशोऽस्ति । नान्तर्भावोऽस्ति । कुतः । यो यस्मात् । निराकाशः स नीरन्ध्रः परमाणुः । समः स तुल्यः । निम्नोन्नताभावात्[1] । इति कथं निरंशस्य संगतिरस्तु[2] ॥ अथापि स्यात् । 5
मा भूदणोरणौ प्रवेशः । संगतिमात्रं केवलमस्तु । तावता सिद्धं नः साध्यमित्याह । अप्रवेश इत्यादि ।

अप्रवेशे न मिश्रत्वममिश्रत्वे न संगतिः ॥ ९५

सर्वात्मना हि संपर्कः संगतिरणोः । अन्यथा सांशत्वप्रसङ्गात् । तथा च तत्स्वरूपं स्वात्मना व्याप्नुवत एव तेन संगतिः । एवं 10
तत्स्वरूपमिश्रत्वाभावे संगतिर्न स्यात् । तच्च मिश्रत्वं तच्च प्रवेशमन्तरेण न भवेत् । इत्थमप्रवेशे प्रवेशाभावे सति न मिश्रत्वं नात्मभिन्नरूपत्वं । अमिश्रत्वे [183a][3] मिश्रत्वाभावे च न संगतिर्नाभिसङ्गः ॥ निरंशस्य सर्वथैव संसर्गो न युज्यत इत्याह । निरंशस्य चेत्यादि । 15

निरंशस्य च संसर्गः कथं नामोपपद्यते ।

निरंशस्यांशशून्यस्य च पदार्थस्य । चो दूषणान्तरसमुच्चये । संसर्गो मीलनं कथं नामोपपद्यते । नामेति संभावनायां ।

---

1 *Unna [ta] tābhāvat?*

2 *Praveço stu?*

3 The fol. 183 is numbered 184 in the old pagination (letter-numeral); 184 becomes 185.

कथं संसर्गः संभाव्यते। सर्वात्मनाप्यवयवानेकांशेन भवितव्यं। यस्य पुनरंश एव नास्ति तस्यामूर्तस्यांशाभावेऽव्ययमेव प्राप्तमिति भावः[1]॥ न चैतद्भ(ब)तो[2] ऽपि प्रमाणप्रतीतं क चिद्स्तीत्याह। [संसर्ग इत्यादि।

5 संसर्गे च निरंशत्वं यदि दृष्टं निदर्शय॥ ९६

. . . . . . . . . . . ाह।] विज्ञानस्य लित्यादि।

विज्ञानस्य त्वमूर्तस्य संसर्गो नैव युज्यते।

तुरतिशयाभिधाने। विज्ञानस्य विषयविज्ञप्तेः। पुनः संसर्गो नैव युज्यते। न संगच्छते। कुतः। अमूर्तस्येति हेतु-
10 पदमेतत्। मूर्तिशून्यस्य। विज्ञानस्य। अमूर्तत्वादित्यर्थः। परस्परसंपर्को हि संसर्गः। स च मूर्तिमतामेव विद्यते। यस्य तु मूर्तिरेव नास्ति। तस्य कथं संसर्गः स्यात्॥ इति चक्षुषामपि संसर्गमवधूय संप्रति समूह एव वस्तु नास्ति इति प्रतिपादय-न्नाह। समूहस्यापीत्यादि।

15 समूहस्याप्यवस्तुत्वाद्यथा पूर्वं विचारितं॥ ९७

अपि दूषणसमुच्चये। समूहस्यापि संघातस्यापि। अवस्तु-त्वात्। वस्तुरहितत्वात् स्वविषाणवत्। संसर्गो नैव युज्यत इति

---

[1] See IX, 87.

[2] MS. bhāgato.

प्रकृतेन संबन्धः। समूहस्यैवाभावात्। कथं पुनरवस्तुकत्वं। यथा पूर्वं विचारितं। यथा प्राङ्निरूपितं। एवमङ्गुलिपुञ्जत्वादि-त्यादिना[1] ॥ हेत्वसंभवमेवोपसंहरन्नाह। तदेवमित्यादि।

तदेवं स्पर्शनाभावे वेदनासंभवः कुतः।

तस्मादेवं प्रतिपादितक्रमेण स्पर्शनाभावे विषयसंपर्काभावे। 5 वेदनासंभवः कुतः। वेदनायाः सुखादिरूपायाः संभव उत्पादः। कुतो। नैव युज्यते। कारणाभावे कार्यस्य संभवायो[183b]गात्। इति परमार्थतो वेदनाभावे हिताहितविषयस्यासंभवात्।

किमर्थमयमायासः।

सुखदुःखसाधनप्राप्तिपरिहाराय यो ऽयमायासः क्रियते 10 स किमर्थः। आकाशचर्वणार्थमिव नैवोचित इति भावः ॥ मा भूत्सुखसाधनाय। दुःखस्याभिभोक्तुमशक्यत्वात् तत्परि-हाराय भवतु चेदाह।

बाधा कस्य कुतो भवेत् ॥ ९८

वेदनाया विचारेण निःस्वभावत्वाद्बाधा [ऽ]विचारतः। 15 आत्मादेः पूर्वनिरस्तत्वाद्वेदकाभावः। उपघातहेतोरपि विकल्प-कल्पितत्वात्। न परमार्थतः सत्त्वं। इत्येवं बाधा पीडा वेदनाभावात्। कस्य वेदकाभावाद्भवेत्। कुत उपघातहेतो-रभावाच्च भवेत्। नैव परमार्थतः कस्यचित्कुतश्चित्स्यात्।

---

[1] IX, 86.

तस्माद्वेदितृभावतो ऽपि[1] वेदना न युक्ता॥ संप्रति वेदनाभावात्तत्प्रत्ययया[2] तृष्णापि कारणविरहात्परमार्थतो नोत्पाद-मर्हतीत्युपदर्शयितुमाह। यदा नेत्यादि।

यदा न वेदकः कश्चिद्वेदना च न विद्यते।
5 तदावस्थामिमां दृष्ट्वा तृष्णे किं न विदीर्यसे[3]॥ ९९

यो वेदनां वेदयते स वेदको। यदा कश्चिदात्मादिर्नास्ति तदभावात्तमनन्तरनिरूपणाच्च वेदना न विद्यते। तदावस्थामि-मामेवंविधां स्वजन्मविकलां दृष्ट्वा। उपलभ्य। तृष्णे किं न विदीर्यसे। तद्दुःखदुःखितापि सती किं न विशीर्यसे[3]।
10 यद्वापि तद्वियोगविधुरा त्वमात्मानं न मुञ्चसि॥ स्यादेतत् यदि वेदको न स्यात्। वेदना च नास्ति। केनायं तर्हि सुखसाधनत्वादिना भावेषु दृष्टादिव्यवहारः प्रवर्तते। इत्याशङ्क्याह। दृश्यत इत्यादि।

दृश्यते स्पृश्यते चापि स्वप्नमायोपमात्मना।
15 चित्तेन सहजातत्वाद्वेदना तेन नेक्ष्यते॥ १००

दृश्यते चक्षुरिन्द्रियजेन[4]। स्पृश्यते कायेन्द्रियजातेन चित्तेन ज्ञानेन। एवं तर्हि चित्तमेव वेदकं वस्तुस्त्वीति चेदाह

---

1 MS. *vaiditrabhāvato*; below p. 523, l. 10 *veduyitṛ*.

2 MS. vedānānamabhāvāt.

3 Contrast the readings.

4 So MS.

स्वप्नमायोपमात्मना। स्वप्नोपमत्व[184a]मात्मैव। मायोपम-स्वभावेन च। प्रतीत्यसमुत्पन्नेन चित्तेन। न तु परमार्थसता॥ कथं चित्ताद्भिन्नमिदं चित्तेन दृश्यते। सहजातत्वात्। चित्तेन सहोत्पन्नत्वात्। चित्तेन सह जन्म [यस्य][1] तस्य दर्शनमेक-सामग्रीप्रतिब[द्ध]त्वात्। प्रतीत्यसमुत्पादस्याचिन्त्यत्वाच्च। न तु परमार्थतो दर्शनमस्ति येनैवं दृष्टादिव्यवहारः॥ वेदना तेन नेष्यते। येन दृष्टसुखसाधनादिव्यवहारो ऽप्यन्यत एव। तेन कारणेन वेदना नेष्यते। न दृश्यते वस्तुतः॥ यद्यपि स्यात्। न सहजं दृश्यते। अपि तु ज्ञानं विषयाकारतया तत उत्पद्यमानमुत्तरकालं तस्य ग्राहकमुच्यते। इत्येतदुपदर्शयितु-माह। पूर्वमित्यादि।

पूर्वं पश्चाच्च जातेन स्मर्यते नानुभूयते।

अवश्यं सहजातस्य वेदनं। अन्यथा पूर्वं प्राग्भावि पश्चा-दुत्तरकालं जातेनोत्पन्नेन ज्ञानेन। स्मर्यते नानुभूयते। स्मृतिरूपेण विषयीक्रियते न साक्षात्क्रियते। तज्ज्ञानकाले तस्यातीतत्वात्। न चातीतस्य स्वरूपेण वेदनमुचितमविद्य-मानत्वात्। स्वरूपवेदनं चानुभवः। तस्मात्स्मरणमात्रमेतत्। तच्च युक्तं न स्वरूपवेदनं। वेदनायाः स्वभावव्यवस्थापकं स्वरूप-मेवायुक्तमित्याह। स्वात्मानमित्यादि।

---

[1] The reading of MS. (erased and second hand) may be *janmaivam*.

स्वात्मानं नानुभवति ।

स्वात्मानं स्वं स्वरूपं नानुभवति न वेदयते । स्वसंवेदनस्य पूर्वं निरस्तत्वात् ॥ अन्येन तर्हि सा ज्ञानेनानुभूयते वेदना । आह ।

न चान्येनानुभूयते ॥ १०१

5 न च नैव । अन्येन तत्समानकालभाविना ज्ञानेनानुभूयते । वेद्यते । ज्ञानस्य ज्ञानान्तरेणावेदनात् ।

न चास्ति वेदकः कश्चिद्वेदनातो न तत्त्वतः ।

न च नैवास्ति वेदकः कश्चिद्यो वेदनां वेदयते । चित्तमन्यद्वा । अतो अस्मात्कारणाद्वेदना अनुभव इति वेदना-

10 लक्षणशून्यत्वाद्वेदना न तत्त्वतः न परमार्थतः । अन्य[184b]थाभिनिवेशात् । तत्स्वरूपप्रतिपादकस्य कस्यचिदभावात् ॥ [1]एतदुक्तमार्याक्षयमतिसूत्रे । अपि तु खलु पुनरभिनिवेशो वेदना । परिग्रहो वेदना । उपादानं वेदना । उपलम्भो वेदना । विपर्यासो वेदना । विकल्पो वेदनेत्यादि । धर्मसंगीतिसूत्रेऽप्युक्तं ।

15 वेदनाऽनुभवः प्रोक्ता केनाऽसावनुभूयते ।
वेदको वेदना वेद्यः पृथग्भूतो न विद्यते ॥[2]
एवं स्मृतिस्वपक्षेया वेदनायां विपश्चितैः ।
यथा बोधिसत्वा क्षेमा ज्ञाता शुद्धा प्रभास्वरा ॥[1]

---

1. l. Çikṣāsamuccaya, 233, 7-13.
2. So MS. Çi-has *vedako vedanād anyaḥ*-Our reading is more than doubtful.

तस्माद्वेदकवेदनाद्यभावशून्यं प्रतीत्यसमुत्पन्नमात्रं निर्व्या-पारमस्वामिकं मायाप्रपञ्चवदुपलम्भगोचरतामुपगतमिदं कडे-वरमवभासते । इति न कस्य चित्सुखं वा दुःखं वा स्वकीयं भवतीत्याह । निरात्मक इत्यादि ।

निरात्मके कलापेऽस्मिन् क एव बाध्यते ऽनया ॥ १०२ 5

निरात्मके कस्य चिदात्मादेर्वेदकस्याभावादस्वामिके कलापे । एकस्यानुयायिनो ऽभावात् । प्रतीत्यसमुत्पन्नमात्रेऽस्मिन् मायास्वभाववदुपलम्भगोचरतामुपगते । एवमिन्द्रजालवत्पश्यन् । संजातविस्मयो ब्रूते । क एवं बाध्यते ऽनया । एवमुक्तक्रमेण कस्य चिद्वेदयितुरभावाद्वेदनायाश्च । कः परमार्थतोऽनया वेदनया 10 बाध्यते । पीड्यते । विचारतो नैव कश्चित् । तस्मान्मिथ्या-विकल्प एवायं सुखादिबाधनाध्यवसायः । तदेतद्वेदनास्मृत्युप-स्थानं दर्शितं ॥

सांप्रतं चित्तस्मृत्युपस्थानमुपदर्शयितुमाह । नेन्द्रियेष्वित्यादि ।

नेन्द्रियेषु न रूपादौ नान्तराले मनः स्थितं । 15
नाप्यन्तर्न बहिश्चित्तमन्यत्रापि न लभ्यते ॥ १०३

तत्र षष्ठं तावन्मनोविज्ञानं निरूपयति । तथा क्व पुनरिदं मनोविज्ञानं व्यवस्थितं । तत्र न तावदिन्द्रियेषु चक्षुरादिषु मनः स्थितं स्थितिमुपगतं । न रूपादौ विषये मनः स्थितं । नान्तराले । नापीन्द्रियविषययोरन्तराले मध्ये म[ 185ᵃ ]नः 20

चित्तं। एकस्याप्यनिश्चितस्वरूपत्वात्। नाप्यन्तर् [न] बहिश्चित्तं। नाप्यन्तरा मध्ये कायस्य चित्तं। नापि बहिः। न ह्यङ्गेषु शरीरावयवेषु चित्तं लभ्यते। अन्यत्रापि न लभ्यते। तत्तेभ्यः स्थानेभ्यः। अन्यत्रापि च दिग्देशान्तरे क्व च वा न लभ्यते। न 5 प्राप्यते विचारतः॥ तथा च चित्कथं चिद्भवति ततः कथं तस्य निषेध इत्यपाह। यन्न काय इत्यादि।

**यन्न काये न चान्यत्र न मिश्रं न पृथक् क्वचित्।**
**तन्न किंचित्ततः सत्त्वाः प्रकृत्या परिनिर्वृताः॥ १०४**

यच्चित्तं न काये वा[1] बाह्याभ्यन्तरे शरीरे। न चान्यत्र 10 नैव कायादन्यत्र बाह्ये वस्तुनि। न मिश्रं क्रियाविशेषणमेतत्। द्वयोराध्यात्मिकबाह्ययोर्मिश्रमपि न स्थितं। यच्चित्तं न पृथक्कायात्। नापि पृथक् स्वातन्त्र्येण च क्वचिद्व्यवस्थितं यच्चित्तं। तत्परमार्थतो न किंचित् वस्तुसत्। कल्पनोपदर्शि- तमेव तत्। स्वार्थसारं चित्तं मायावत्प्रतिभासो निःस्वभाव- 15 त्वात्। अतोऽस्मात्कारणात्सत्त्वाः प्राणिनः प्रकृत्या स्वभावेन परिनिर्वृताः परिशुद्धस्वभावा निःस्वभावतालक्षणस्य प्रकृति- निर्वाणस्य सर्वधर्मसंतानेषु सदा विद्यमानत्वात्। स्वयमेव तभूतपरिकल्पवशादसत्यपि सत्यमारोप्य क्लेशावरणोपहतसंतति- चित्तसन्ततयः संसारचारकावरोधनिविष्टस्वातन्त्र्यवन्तोऽपरिशुद्धा 20 इत्युच्यन्ते। न तु परमार्थतः॥ इति मनो विचार्यापि। चक्षुरादिविज्ञानं विचारयन्नाह। ज्ञेयादित्यादि।

---

1 'So MS.

**ज्ञेयात्पूर्वं यदि ज्ञानं किमालम्ब्यास्य संभवः ।**
**ज्ञेयेन सह चेज्ज्ञानं किमालम्ब्यास्य संभवः ॥ १०५**

तथा हि [न] कश्चित्सदा[1] सद्रूपमवस्थितं ज्ञानं । किं तु चक्षुरादिसामग्रीं प्रतीत्योत्पद्यमानं रूपादिज्ञेयग्राहकमित्युच्यते । इति परस्याशयमाशङ्क्य विकल्पयति । तत्पुनर्ज्ञेयात्पूर्वं वा स्यात् । ज्ञेयसमानकालं वा ज्ञेयस्य पश्चाद्वेति । तत्र यदि प्राचीनो विकल्पस्तदाह । ज्ञेयाद्ग्राह्यविषयात् । पूर्वं प्रागेवानुत्पन्न एव ज्ञेये यदि ज्ञानमुत्पन्नमभिधीयते । तदा किमालम्ब्यास्य संभवः । पूर्वं ज्ञेयमालम्बनमन्तरेण किमालम्ब्य किमाश्रित्यास्य[2] संभव उत्पादः ॥ द्वितीयपक्षमाश्रित्याह । ज्ञेयेन ग्राह्यविषयेण सह समानकालं चेद्यदि ज्ञानं किमालम्ब्यास्य संभवः । समानकालस्य ज्ञेयस्याकारणतया अनालम्बनत्वात् । नाकारणं विषय इति वचनात्[3] ॥ अथ तृतीयः [185b] प्रकारः स्वीक्रियते । अथेत्यादि ।

**अथ ज्ञेयाद्भवेत्पश्चात्तदा ज्ञानं कुतो भवेत् ।**

अथेति पृच्छायां । ज्ञेयादिति पूर्वं ज्ञेयं । पश्चात्तदनन्तरं निवृत्ते ज्ञेये भवेदुत्पद्येत ज्ञानं । तदा ज्ञानं कुतो भवेत् । ज्ञानकाले ज्ञेयस्य निवृत्तत्वात् । कुत आलम्बनात् । ज्ञानं

---

1 *S*, second hand; *sadasad*? or *kva cit sadrūpam*?

2 First hand *ārtya*.

3 Compare above IX, 22.

भवेत्। किमाश्रित्योत्पद्येत[1]। तस्माद्विषयादिसामग्रीतोऽपि
परमार्थतो न सिध्यति ज्ञानं।

इदं चित्तस्मृत्युपस्थानमार्यरत्नकूटादिष्वभिहितं[2]। स एवं
चित्तं [परि]गवेषते। कतरत्तच्चित्तं[3] रज्यति वा दुष्यति वा
5 मुह्यति वा। किमतीतमनागतं प्रत्युत्पन्नं वेति। तत्र यदतीतं
तत्क्षीणं। यदनागतं तदसंप्राप्तं। प्रत्युत्पन्नस्य स्थितिर्नास्ति।
चित्तं हि काश्यप नाध्यात्मं न बहिर्धा नोभयमन्तरेणोप-
लभ्यते। चित्तं हि काश्यपारूप्यमनिदर्शनमप्रतिघमविज्ञप्तिकम-
प्रतिष्ठमनिकेतं[4]। चित्तं हि काश्यप सर्वबुद्धैर्न दृष्टं। न
10 पश्यन्ति। न द्रक्ष्यन्ति। [यत्सर्वबुद्धैर्न दृष्टं न पश्यन्ति न
द्रक्ष्यन्ति][5] कीदृशस्तस्य प्रचारो द्रष्टव्यः। अन्यत्र वितथपति-
तया संज्ञया धर्माः प्रवर्तन्ते। चित्तं हि काश्यप मायासदृश-
मभूतकल्पनतया[6] विविधामुपपत्तिं[7] परिगृह्णाति। पेयालं।
चित्तं हि काश्यप नदीस्रोतःसदृशमनवस्थितमुत्पन्नभग्न-
15 विशीर्णं। चित्तं हि काश्यप दीपार्चिःसदृशं हेतुप्रत्ययतया
प्रवर्तते। चित्तं हि काश्यप विद्युत्सदृशं क्षणभङ्गानवस्थितं।
चित्तं हि काश्यपाकाशसदृशमागन्तुकैः क्लेशोपक्लेशैरुपक्लिश्यते।

---

1 MS. *āçrtya.*

2 Quoted in Çikṣās. from Ratnakūṭa, p. 233, 15-234, 18.

3 Çi. has *katarat tu.*

4 Çi. has *arūpam.*

5 From Çi.

6 Çi. has *kalpanayā.*

7 *Skye-ba*-rebirth (Bendall).

पेयालं। यावच्चित्तं हि काश्यप परिगवेष्यमाणं न लभ्यते[1]।
यच्च लभ्यते तन्नोपलभ्यते। तन्नैवातीतं नानागतं न प्रत्युत्पन्नं।
तत्त्र्यध्वसमतिक्रान्तं। यत्त्र्यध्वसमतिक्रान्तं तन्नैवास्ति न नास्ति
[इत्यादि] ॥

एवं चित्तस्मृत्युपस्थानं प्रतिपाद्य धर्मस्मृत्युपस्थानं प्रतिपाद- 5
यितुमुक्तमेव क्रमं योजयन्नाह। एवं चेत्यादि। [186a]।

**एवं च सर्वधर्माणामुत्पत्तिर्नावसीयते ॥ १०६**

चकार एवकारार्थः। एवमेव यथोदितन्यायेन सर्वधर्माणां
सर्वभावानामुत्पत्तिरुत्पादो नावसीयते। न प्रतीयते। तेषा-
मपि स्वहेतुतः पूर्वं समानकालं पश्चाद्वोत्पत्ताविदमेव दूषणं
यथासंभवं वाच्यं। उत्पादाभावान्निरोधो ऽपि न युज्यते। 10
अनुत्पन्नस्य निरोधायोगात्। अत एव चानुत्पन्नानिरुद्ध-
स्वभावतया निष्प्रपञ्चत्वात्सर्वधर्मा विमोक्षाभिमुखा धर्मधातु-
निर्याता आकाशधातुपर्यवसाना अप्रज्ञप्तिका अव्यवहारा
अनभिलाप्या अनभिलपनीया इत्युच्यन्ते। एवं धर्मस्मृत्युप-
स्थानेनाविरचितं सर्वधर्मेष्वनासङ्गज्ञानमुत्पद्यते[2] ॥ 15

धर्मस्मृत्युपस्थानभावना च। आर्याक्षयमतिसूत्रे दर्शिता[3]।
यदुक्तं। धर्मे धर्मानुपश्यी[4] विहरन्बोधिसत्त्वो न कं[5] चिद्धर्मं

---

1 See Madh. vṛtti, p. 45, l. 1.
2 *Anâsaṅgam* ?
3 Çi. p. 236, 6.
4 Çi.-*darçi*.
5 MS. *kim*.

समनुपश्यति । यतो न बुद्धधर्माः । यतो न बोधिर्यतो न मार्गो ।
यतो न निःसरणं । सर्वधर्मा[1] निःसरणमिति[2] विदित्वाऽनावरण-
महाकरुणासमाधिं[3] समापद्यते[4] । स सर्वधर्मेषु सर्वक्लेशेषु न
क्षपितसंज्ञां प्रतिलभते । निःक्लेशा[5] एते [धर्मा] नैते सक्लेशाः ।
5 [तत्कस्य हेतोः] । तथा ह्येते नीतार्थे[6] समवसरन्ति । नास्ति
क्लेशानां संनिचयो[7] राशीभावः । न रागभावो न द्वेषभावो न
मोहभावः । एषामेवानुबोधाद्बोधिः[8] । यत्स्वभावाश्च क्लेशा-
स्तत्स्वभावा बोधिरित्येवं स्मृतिमुपस्थापयतीति ॥ उक्तं च ।

उत्पत्तिर्यस्य नैवास्ति तस्य का निर्वृतिर्भवेत् ।
10 मायागजप्रकाशत्वादादिशान्तं[9] तु वस्तुतः ॥
यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता[10] ।
तथाविधश्च सद्धर्मस्तत्समश्च तथागतः ॥
तत्त्वं परमार्थोऽपि तथता द्रव्यमिष्यते ।
भूतं तदविसंवादि तद्बोधाद्बुद्ध उच्यते ॥ इति ॥

15 एवं धर्मस्मृत्युपस्थानमुपदर्शयता सर्व[186b]धर्मा अनुत्पन्ना-
निरुद्धाः प्रकाशिताः ॥

---

1 First hand °rmān ni.°
2 MS. *nissaraṇam* and elsewhere.
3 Çi. *anāvaraṇaṃ nāma mahā°*.
4 MS. *pratilabhate.*
5 MS. *niṣkleçā.*
6 MS. *nītārtho 'rthaṁ s.*
7 Çi. *saṃcayo.*
8 Çi. *eṣām eva kleçānām avabodhāt.*
9 *Hgro-ba sgyu-mar = gatimāyā ?*
10 MS. *mataḥ.*—Compare, ix, 35.

तथा सति । संवृतिसत्यमयुक्तमित्युक्तं स्यात् । ततः सत्यद्वय-
व्यवस्थापनं न घटत इति परिहर्तुं चोद्यमुत्थापयन्नाह ।
यद्येवमित्यादि ।

**यद्येवं संवृतिर्नास्ति ततः सत्यद्वयं कुतः ।**

यदि परमार्थतः सर्वधर्मा अनुत्पन्नानिरुद्धस्वभावाः । एवं 5
सति संवृतिर्नास्ति । व्यवहारो न स्यात् । परमार्थसत्यमेवैकं
स्यात् । ततः संवृतेरभावात् । सत्यद्वयं । संवृतिसत्यं परमार्थ-
सत्यं चेति । यदुक्तं

संवृतिः परमार्थश्च सत्यद्वयमिदं मतं[1]

इति । तदेतत्सत्यद्वयं कुतः । नैव स्यात् । तदभावाच्च 10
परलोकगमनकर्मक्रियाफलसंबन्धस्वभावोपार्जनादि न स्यात् ।
सर्वव्यवहाराभावात् ॥ अथापि स्यात् । यदि नाम नास्ति
तथा मरीचिकासु जलकल्पनयेव संवृतिस्वभावया कल्पनया
बुद्ध्या व्यवस्थाप्यते । ततः सत्यद्वयमुत्पद्यत इत्याशङ्क्याह ।
अथ सेत्यादि । 15

**अथ साप्यन्यसंवृत्या ।**

अथेति प्रश्ने । सापीति संवृतिर्न केवलं परमार्थसत्यमित्य-
पेरर्थः । अन्यया संवृत्या कल्पनाबुद्धिरूपया व्यवस्थाप्यते । अथ

---

[1] IX, 2.

वा ऽपिरवधारणे निपातने[1] च। अन्यथैव संवृतेति योजनीयं।
एवमियं संविभक्तो ऽन्यग्रथ्यवत्[2] इत्युपदर्शयन्नाह।

स्यात्तस्यो निर्वृतः कुतः ॥ १०७

इति। यदि परमार्थतस्तत्स्वभावशून्यमपि कल्पनाबुद्धि-
5 विषयीकरणात्। सांवृतमुच्यते। यो ऽपि तर्हि सर्वधर्मनिः-
स्वभावतालक्षणं परमार्थसत्यमधिगम्यानुपलम्भयोगेन। सर्व-
प्रपञ्चविरहात्। परिनिर्वृतिमुपयातः। सो ऽपि कथं परि-
निर्वृतो विनिर्मुक्तः कुतो भवेत्। नैव स्यात्। तस्यापि बुद्ध्या
विषयीकरणात्। बुद्धिश्च सर्वैव संवृतिः कल्पनास्वभावत्वात्।
10 बुद्धिः संवृतिरुच्यत इति वचनात्। निर्वृतिरपि सं[187a]वृतिः
स्यात्॥ अत्र परिहारमाह। परचित्तेत्यादि।

परचित्तविकल्पो ऽसौ।

परस्य निर्वृतपक्षादन्यस्य जनस्य चित्तं तस्यासौ विकल्पः।
यो ऽयं निर्वृतस्यापि बुद्ध्या विषयीकरणं। न हि परचित्त-
15 विकल्पेनान्यस्य संवृतिर्युक्ता। ततो ऽन्यबुद्ध्या विषयीक्रियमाणोऽपि
निर्वृत एवासौ। कुतो यतः।

---

1 So MS.

2 See Col. Jacob, Handful of Popular Maxims, I, 2d ed., 1907, p. 14.

स्वसंवृत्या तु नास्ति सः ।

तु पूर्वस्माद्विशेषमभिधत्ते। स्वसंवृत्या निजसंवृत्या स्वकल्पनया स इति परिनिर्वृतो नास्ति न विद्यते। परिनिर्वृत एव स इति स्वयमस्य सर्वविकल्पोपरमात् ॥ अन्यथापि तर्हि कथमन्यसंवृतिः स्यादित्याह । स पश्चादित्यादि ।

स पश्चान्नियतः सो ऽस्ति न चेन्नास्त्येव संवृतिः ॥ १०८ 5

अस्मिन् सतीदं भवति । अस्योत्पादादिदमुत्पद्यत[1] इति । इदंप्रत्ययतामात्रकैव संवृतिः । इति धर्मेभ्यो धर्म उत्पद्यमानः पश्चाद्भावी भवेत् । ततः स पश्चान्नियतो धर्मः सो ऽस्ति यदि । तदा ऽस्त्येव संवृतिः । न चेद्यदि स नास्ति तदा नास्त्येव संवृतिः । गगनेन्दीवरादिष्विदंप्रत्ययताया अभावात् ॥ एतदुक्तं 10 भवति । यदि नाम परिनिर्वृतो बुद्धः विकल्प्यते । नैव तावता परकीयविकल्पमात्रेण तस्यापरिनिर्वृतिः । स्वयमस्य सर्वविकल्पप्रपञ्चोपशमात् । न हि परचित्तेनाकलितः स्वयं प्रक्षीणसर्वक्लेशावरणो वीतरागो ऽप्यवीतरागो भवेत् । तस्मात्सर्वकल्पनाविरहादन्यसंवृत्याकलितो ऽपि स्वयं परिनिर्वृत एवासौ 15 परमार्थतः । अत एव सर्वधर्माः सर्वकल्पनाशून्यत्वादनुत्पन्ननिरुद्धस्वभावत्वाच्च प्रकृतिपरिनिर्वृताः । आदिशान्ता इत्युक्ताः।

---

1 MS. *Upalabhyata*; see p. 474, l. 18

तथापि तथाविधेभ्य एव तथाविधा अन्ये धर्मा उत्पद्यन्ते निरुध्यन्ते च। मायागजाभाववत्। तेन च रूपेण परिकल्प-वशात्पुनराकल्प्यमानाः संवृताः। वास्तवरूपाभावा[187b]चा-नुत्पन्ना अनिरुद्धा इत्युच्यन्ते। खरविषाणवत्॥

5 यदुक्तं[1]। शून्येभ्य एव शून्या धर्माः प्रभवन्ति धर्मेभ्य इति।

आर्यललितविस्तरेऽप्युक्तं[2]।

संस्कार[3] प्रदीप अर्चिवत्। क्षिप्रमुत्पत्तिनिरोधधर्मकाः।
अनवस्थित मारुतोपमाः। फेनपिण्डेव असार दुर्बलाः॥
संस्कार निरीह शून्यकाः। कदलीस्कन्धसमा निरीक्षते[4]।
10 मायोपम चित्तमोहना। बालउल्लापन रिक्तमुष्टिवत्॥

पेयालं।

यथा मुञ्जं प्रतीत्य बल्बजं। रज्जु व्यायामबलेन वर्तिता।
घटियन्त्रं सचक्रं वर्तते। तेषु एकैकश[5] नास्ति वर्तना॥
तथा सर्वभवाङ्गवर्तिनी[6]। अन्योन्योपचयेन निश्रिता।
15 एकैकश[7] तेषु वर्तनी[1] पूर्व अपरान्त नोपलभ्यते॥
मुद्रात्प्रतिमुद्रा दृश्यते। मुद्रासंक्रान्तिर्न चोपलभ्यते।

---

1 See p. 355, l. 13.

2 Raj. Mitra, pp. 209, 210, 211. Lefmann, p. 176. See Çikṣas, p. 237, Madhyamakavṛtti, p. 551—I give the readings of the MS. without corrections.

3 Second hand *saṃskārāḥ*.

4 Second hand *nirīkṣyante*.

5 Second hand *ekaikaço*.

6 Second hand *aṅgaḥ* (?).

7 Second hand *ças*.

न च तत्र न चैव सान्ततो । एवं संस्कार[1] उच्छेदशाश्वताः ॥

अरणि यथ चोत्तरारणि । हस्तव्यायामत्रयेभि[2] संगतिः ।

इति प्रत्ययतोऽग्निर्जायते । जातु कृतुकार्यु[3] लघु निरुध्यते ॥

अथ पण्डित[4] कश्चि मार्गते[5] । कुतो ऽयमागत[6] कुत्र याति वा ।

विदिशो दिशि सर्व मार्गतो । नागतिर्नास्य गतिश्च लभ्यते ॥ 5

स्कन्धायतनानि धातवः । तृष्ण अविद्या[7] इति कर्मप्रत्यया ।

सामग्रि तु क्लेशसूचना[8] । सा च परमार्थत[9] नोपलभ्यते । इति ॥

चतुस्तवेऽप्युक्तं[10] ।

निरुद्धाद्वानिरुद्धाद्वा बीजादङ्कुरसंभवः ।

मायोत्पादवदुत्पादः सर्व एव त्वयोच्यते ॥ 10

अतस्त्वया जगदिदं परिकल्पसमुद्भवं ।

परिज्ञातमसद्भूतमनुत्पन्नं न नश्यति ॥

नित्यस्य संसृतिर्नास्ति नैवानित्यस्य संसृतिः ।

स्वप्नवत्संसृतिः प्रोक्ता त्वया तत्त्वविदां वर ॥ इति ॥

तस्मात्परमार्थत उत्पादनिरोधाभावे[188a]ऽपि न संसृति- 15
सत्यविरोध इति सर्वं समञ्जसं ॥ ननु यदि परमार्थतो-

---

1 Second hand *saṁskārā.*

2 From a second hand; first hand illegible.

3 = *kṛtakārya.*

4 Second hand *°taḥ.*

5 Second hand *n-mārgate.*

6 Second hand *°taḥ.*

7 *a* erased by second hand, avagraha.

8 Common reading sattvasūcanā.

9 Second hand *°to.*

10 See IX, 36 and 76. Catustava, of course, is correct.

ऽनुत्पन्ना निरुद्धाः सर्वधर्मास्तदा न ज्ञानं न न ज्ञेयं सकलाः संशान्ताः। तत्किमिह केन विचार्यत इति विचारोऽपि न स्यात्। तत्तन्यायेनैव ज्ञातव्यमित्यत आह। कल्पनेत्यादि।

कल्पना कल्पितं चेति द्वयमन्योन्यनिश्रितं।
5 यथाप्रसिद्धमाश्रित्य विचारः सर्व उच्यते ॥ १०९

कल्पना आरोपिका बुद्धिः। कल्पितं तया समारोपितं। चेत्युभयसमुच्चये। इत्येवं द्वयमुभयमन्योन्यस्य[1] निश्रितं परस्परसमाश्रितं[2]। कल्पनापेक्षया कल्पितं। कल्पितापेक्षया कल्पनेति। यथा प्रसिद्धं लोकव्यवहारतो निश्चितमाश्रित्य गृहीत्वा विचारो
10 विमर्शः[3] सर्व उच्यते। अभिधीयते। सर्व इति न कश्चिदेव विचारोऽपि संवृतिमाश्रित्य प्रतन्यते। न तु परमार्थसत्यं। तस्य सर्वव्यवहारातिक्रान्तत्वादित्यर्थः॥ विचारोऽपि यदि विचारवत्त्वात्स्वनिकषभावत्वाद्विचारयितव्य इति चेत्। विचारस्याप्यविचारत्वादित्यभिसंधायाह। विचारिते[ने]त्यादि।

15 विचारितेन तु यदा विचारेण विचार्यते।
तदानवस्था तस्यापि विचारस्य विचारणात् ॥ ११०

विचारितेन तु परीक्षितेन पुनर्यदा विचारेण विचार्यते। निरूप्यते। तदानवस्थाऽप्रतिष्ठानं स्यात्। कुतः। तस्यापि

---

1 Adverbial use of *anyonyasya*, Goldstücker, 148*b*, 20.

2 See Senart, Mhv. I, 456.

3 MS. *vimarṣah*.

विचारस्य विचारणात् । योऽसौ विचारस्य विचारणार्थं विचार उपादीयते । तत्रापि विचारस्य विचारणाद्धेतोः ॥ विचार्ये[1] तर्हि विचार्यमाणे कथमियमनवस्था न स्यादित्याह । विचारित इत्यादि ।

विचारिते विचार्ये तु विचारस्यास्ति नाश्रयः । 5
निराश्रयत्वान्नोदेति तच्च निर्वाणमुच्यते ॥ १११

विचार्ये तु परीक्ष्ये पुनर्वस्तुनि विचारिते निर्णीते सति विचारस्य निर्णयस्य पुनरुत्तरकालं कर्तव्यस्याश्रयो नास्ति । यमाश्रित्य पुनर्विचारानुसरणेना[न]वस्थानं स्यात् । विचार्यस्य विचारेण चरितार्थतया पुनराकाङ्क्षाभावात् । अत एव निरा- 10 श्रयत्वान्नोदेति । आश्रयाभावान्न पुनर्विचारः प्रवर्तते । सर्व-समारोप[189b]निषेधं विधाय वस्तुतत्त्वपरिज्ञानात्मकत्वात् । प्रवृत्तिनिवृत्त्यभावात् । न च चिन्त्यते[2] । नापि विरज्यते । तच्च निर्वाणमुच्यते । सर्वव्यवहारनिवृत्तेः । सर्वथा निर्व्यापारतया प्रशान्तत्वात् । तदेव निर्वाणमभिधीयते ॥ कल्पितविषये 15 ऽवश्यमेव सर्वत्र विचारः सत्यो न तु परमार्थत इत्याह । यस्य त्वित्यादि ।

यस्य त्वेतद्द्वयं सत्यं स एवात्यन्तदुःस्थितः ।

यस्य पुनः परमार्थसद्भाववादिनः । एतद्द्वयं विचारो विचार्यं

---

1 First hand *vicāre*. 2 So MS.

चेति । एतदुभयमपि सत्यं । परमार्थसत् । स एव भाव-
स्वभाववादी । अत्यन्तदुःखितः । अत्यन्तमतिशयेन दुःखेन
स्थितो दुःखितः । दुष्करकरणीयत्वात् । एतदेवोपदर्शयन्नाह ।
यदीत्यादि ।

**यदि ज्ञानवशादर्थो ज्ञानास्तित्वे तु का गतिः ॥ ११२**

यदि ज्ञानवशात् । ज्ञानस्य प्रमाणस्य वशात्सामर्थ्यात् ।
अर्थः प्रमेयं व्यवस्थाप्यते । तदा भवतु नाम प्रमाणात्प्रमेय-
व्यवस्था । को नाम निवारयति । केवलमिदमिह निरूपणीयं ।
ज्ञानास्तित्वे तु का गतिः । ज्ञानस्य प्रमाणस्य पुनरस्तित्वं कुतो
निश्चितमिति वक्तव्यं । स्वसंवेदनस्याभावात् । प्रमाणान्तरान्वेषणे-
ऽनवस्थानं स्यादिति का गतिराश्रयणीया ॥ स्यादेतत् ।
स्यादेवानवस्थानं यदि ज्ञानास्तित्वे प्रमाणान्तरं मृग्यते ।
यावता प्रमेयादेव प्रमाणव्यवस्था तत्कुतोऽनवस्थानं स्यादित्या-
शङ्कयन्नाह । अथेत्यादि ।

**अथ ज्ञेयवशाज्ज्ञानं ज्ञेयास्तित्वे तु का गतिः ।**

अथेति पराभिप्रायप्रकाशने । अथ ज्ञेयस्य प्रमेयस्य वशात् ।
ज्ञानं व्यवस्थाप्यते । तर्हि ज्ञेयास्तित्वे तु का गतिः । यदि
ज्ञेयवशात् । ज्ञानं व्यवस्थाप्यते । तदा स्वयमेव ज्ञेयं ज्ञानास्तित्वे
व्यवस्थानिबन्धनं स्यात् । तच्च कुतः प्रमाणात्सिद्धमिति पृच्छति ।
ज्ञेयास्तित्वे पुनः का गतिरिति । प्रमेय[189a]सिद्धये ज्ञाना-
न्तरानुसरणे तदपि ज्ञानान्तरं कुतः सिद्धमिति वक्तव्यं

तस्मादेव ज्ञेयादिति चेत् । ज्ञेयं कुतः सिद्धं । तत्सिद्धौ ज्ञानान्तरानुसरणे पुनरनवस्थानमपर्यवस्थानं च स्यात् ॥ स्यादे-तत् । भवेदेतत् । यदि ज्ञानस्य ज्ञेयस्य वा सिद्धये ज्ञाना-न्तरापेक्षा स्यादपि तु परस्परमितरेतरस्य सिद्धिरतो नोक्त-दोषप्रसङ्ग इति पराशाङ्कमाविर्भावयन्नाह । अथान्यो- 5
न्येत्यादि ।

**अथान्योन्यवशात्सत्त्वमभावः स्याद्द्वयोरपि ॥ ११३**

अथ पुनरेवमभिधीयते । अन्योन्यस्य ज्ञानस्य ज्ञेयस्य परस्परस्य वशात्सामर्थ्यात् । ज्ञानज्ञेययोरपि सत्त्वमस्तित्वं भिधीयते । ज्ञानवशाज्ज्ञेयस्य ज्ञेयवशाच्च ज्ञानस्येति यावत् । 10
तदेवं सति । अभावः स्याद्द्वयोरपि । द्वयोरपि ज्ञानज्ञेययो-रभावः स्यात् । एकस्यापि न सत्त्वसिद्धिर्भवेत् । इतरेतराश्रय-त्वादेकस्यासिद्धौ द्वितीयस्याप्यसिद्धिः ॥ अत्र प्रकृतानुरूप-दृष्टान्तमाह । पिता चे[दि]त्यादि ।

**पिता चेन्न विना पुत्रात्कुतः पुत्रस्य संभवः ।** 15
**पुत्राभावे पिता नास्ति ।**

पिता जनकः । यदि पुत्रं विना पुत्रमन्तरेण न स्यात् । पुत्रजननसापेक्षत्वादस्य व्यपदेशस्य । तर्हि कुतः पुत्रस्य संभवः । कुतः कस्मात्पितुरभावात्पुत्रस्य जन्यस्य संभवो जन्मास्तु । कैमिति चेत् । पुत्राभावे पिता नास्ति हेतुपदमेतत् । यतः 20

पुत्रस्याभावेऽसत्त्वे पिता नास्ति पिता न भवति । पित्रा हि पुत्रो जनयितव्यः । स च न पुत्रं यावज्जनयति तावत्पितैव न भवति । यावच्च पिता न भवति तावत्पुत्रस्य तस्मात्संभवो नास्ति । अत इतरेतराश्रयणादेकाभावादन्यतराभावः
5 स्यादिति । द्वयोरप्यनयोरभाव इति समुदायार्थः ॥ अमुमर्थं दार्ष्टान्तिके योजयन्नाह । तथेति ।

तथासत्त्वं तयोर्द्वयोः ॥ ११४

यथाऽत्र पितापुत्रोदाहरणे[1] तथाऽसत्त्वं तथैवाभावः । तयोर्द्वयोर्ज्ञानज्ञेययोः । तथा हि ज्ञेयजननाज्ज्ञानमुच्यते
10 [189b] ज्ञानपरिच्छेद्यतया च ज्ञेयमिति यावज्ज्ञानं न सिध्यति । यावत्परिज्ञानं[2] न सिध्यति । तावत्तत्परिच्छेद्यतया च ज्ञेयं न सिध्यति । इतरेतराश्रयणादुभयाभावः स्यादिति भावः ॥ स्यादेतत् । न ब्रूमोऽन्योन्यव्याप्तिसिद्धिरनयोरपि तु ज्ञेयकार्यं ज्ञानं । ततो ज्ञानादङ्कुराद्बीजमिव ज्ञेयं सेत्स्यति ।
15 इति पराशयमुद्भावयन्नाह । अङ्कुर इत्यादि ।

अङ्कुरो जायते बीजाद्बीजं तेनैव सूच्यते ।
ज्ञेयाज्ज्ञानेन जातेन तत्सत्ता किं न गम्यते ॥ ११५

अङ्कुरो जायते । उत्पद्यते । बीजात्स्वकारणात्कर्गतात् । बीजं तेनैव बीजाज्जातेनाङ्कुरेण सूच्यते । गम्यते यथा ।

---

1 MS. °ṇam.

2 MS. tāvat. The whole clause is doubtful.

तथाच ज्ञेयात्प्रमेयात् । ज्ञानेन जातेनोत्पन्नेन । तत्सत्ता तस्य ज्ञेयस्य सत्ता सद्भावः किं न गम्यते । किं न प्रतिपद्यते । अत्रापि बीजाङ्कुरवत् कार्यकारणभावस्य विद्यमानत्वात् ॥ नायं सदृशो दृष्टान्त इत्याह । अङ्कुरादित्यादि ।

**अङ्कुरादन्यतो ज्ञानाद्बीजमस्तीति गम्यते ।** 5
**ज्ञानास्तित्वं कुतो ज्ञातं ज्ञेयं यत्तेन गम्यते ॥ ११६**

अङ्कुरात्कार्याद्बीजमस्तीति यद्गम्यते । तत्रायमस्यैव केवलस्य प्रभावः । किं तर्हि । अन्यतो ज्ञानादङ्कुरव्यतिरिक्तात् तदस्तीति गम्यते[1] । तथा हि न योग्यतामात्रेण कार्यं कारणस्य गमकं । बीजस्यैव अङ्कुरजननमप्रतिपन्नस्यापि[2] गमकत्वं स्यात् । 10 नापि स्वरूपप्रतीतिमात्रेण ऽप्रतिपन्नकार्यकारणभावस्यापि तत्प्रतिपत्तिप्रसङ्गात् । अपि त्वविनाभावित्वेन निश्चितं । अतः प्रागप्रतिपन्नकार्यकारणभावस्य पुनः पश्चात्क्वचिद्बीजाविनाभाविनमङ्कुरमुपलभ्यतोऽङ्कुराद्ध्यवसायात्मकमनुमानमुत्पद्यते[3] । ततो बीजमस्तीत्यवसीयते । अतो ज्ञानविषयीकृत एवाङ्कुरो 15 बीजप्रतिपत्तिहेतुः ॥

---

1 *tat* = *bījam*. It is not by the sole knowledge of this *aṅkura* that one understands that this *aṅkura* has a *bīja*, but owing to a knowledge produced from elsewhere, *i.e*, knowledge of the *aṅkuras*, of the *bījas* and of the necessary relation between them.—See on this topic Nyāyabindu, p. 22, and Sarvadarçana, pp. 7 and 8.

2 One who does not know that *aṅkuras* are born from *bījas*.

3 MS. has *bījād adhayavasāyātmakam*.—*bījādhy*° ?

ज्ञानास्तित्वं ज्ञानस्य सद्भावः। कुतो ज्ञातं कस्मात्प्रतीतं।
स्वसंवेदनाभावादनवस्थानभयेन[1] ज्ञानान्तराननुसरणाच्च। ज्ञेयं
यत्तेन गम्यते। यद्यस्मात्त्वेवं [190a] तेन ज्ञानेन ज्ञेयकार्येण
गम्यते। अवसीयते। न हि स्वयमनिश्चितं लिङ्गं साध्यस्य
5 गमकत्वमुपपद्यते। ज्ञापकहेतुत्वादस्य ज्ञेयगमकत्वं॥ तस्माद्वास्तव-
पक्षे ज्ञानज्ञेयासिद्धेर्विचारः कर्तुमशक्यः। काल्पनिकपक्षे तु
यथाप्रसिद्धव्यवहारमाश्रित्य शक्यत इति निश्चितं॥

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्व चन के चन[2]॥

10 इत्यस्यार्थस्य समर्थनार्थं नाप्यहेतुत इति तुरीयकोटि-
प्रसाधनाय तावत्स्वभाववादिमतमपाकर्तुमाह। लोक इत्यादि।

---

**लोकः प्रत्यक्षतस्तावत्सर्वं हेतुमुदीक्षते।**

तथा हि ते स्वपरस्वभावसर्वहेतुनिरपेक्षमेव[3] भावग्राम-
वैचित्र्यमुत्पद्यत[4] इति वर्णयन्ति। यतो न पद्मादीनां नाल-
15 पत्रदलकेसरादिकमनेकप्रकारभेदभिन्नवैचित्र्यमचेतना जल-
पङ्कादयो निर्वर्तयितुमलं। न च चेतनोऽपि कश्चिदन्यः
कर्मणा[5] तादृशं निर्माणप्रवीण उपलभ्यते। नापि चाद्रियते

---

1 *MS. sthānaṁbhavayena.*

2 See Madhyamakavṛtti, p. 12; above p. 357.

3 Compare above p. 357, l. 11.

4 MS. has *upapadyate.* In Amṛtakaṇikā: *sarvabuddhamayabhāvagrāmavaṁpdhāt . . sarvavit.*

5 *ṇā* in the margin and very doubtful.—First hand has *tadṛṇnir°*, *çā* in the margin.

तत्कर्मणो ऽपर्यवसानात् । युगपदपर्यन्तविशेषेषु व्यापारा-
योगाच्च । तस्मात् किं चित्कारणमन्तरेणैव सर्वमिदं जगद्वै-
चित्र्यमुत्पद्यत इति तेषां मतं । तदुक्तं ।

सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते ।
स्वभाववादिभिस्ते च नाहुः स्वमपि कारणम् ॥ 5
राजीवकेसरादीनां वैचित्र्यं कः करोति हि ।
मयूरचन्द्रिकादिर्वा विचित्रः केन निर्मितः ॥
यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकं ।
कादाचित्कतया तत्तद्दुःखादीनामहेतुता[1] ॥

तदेवंवादिनो लोकप्रतीतादेव हेतुसामर्थ्याद्बाधा स्यादि- 10
त्युपदर्शयति । लोकः सर्वो जनः । प्रत्यक्षत इन्द्रियाश्रि-
ताज्ज्ञाना[901b]त् । प्रत्यक्षत इत्युपलक्षणादनुमानतोऽपि[2]
तत्प्रतीतिभावात् । प्रत्यक्षानुमानाभ्यामिति यावत् । सर्वम-
नेकप्रकारं । हेतुं जगद्वैचित्र्यकारणं । उदीक्षते । तदन्वयव्यति-
रेकानुविधायि कार्यमुपजनयन्तं पश्यति । यत्कार्यं यस्य सद्भावे 15
भवति तदभावे च न भवतीति प्रतीयते । स तस्य हेतुरिति
निश्चीयते । इति लोकप्रतीतादेव हेतुव्यापारादस्याहेतुकत्व-
प्रतिज्ञा बाध्यते । तदेवोपदर्शयन्नाह । पद्मनालादीत्यादि ।

---

[1] *tat tad*; query *tadvad*. Compare Ṣaḍdarçana (ed. L. Suali), p. 13: *kaḥ kaṇṭakānāṃ prakaroti taikṣṇyam.*

[2] MS. *upalakṣaṇād*.

**पद्मनालादिभेदो हि हेतुभेदेन जायते ॥ ११७**

पद्मस्य राजीवस्य नालमादि येषां पत्रदलकेसरादीनां ते तथोक्ताः तेषां भेदो नानात्वं। हियस्मात्। हेतुभेदेन हेतोः कारणस्य भेदेन विशेषेण जायते। उत्पद्यते। नान्यथा। अनियमेन सर्वत्र सद्भावप्रसङ्गत्[1]। अतो यद्यस्यान्वयव्यतिरेकानु-
5 विधानं कुर्वत्प्रतीयते तत्तस्यैव कार्यं नान्यस्येत्युपगमनीयं। यस्मात्प्रतिनियतकारणादेव प्रतिनियतविशेषोत्पत्तिः। तद्भेदेन तद्भेदादिति नाहेतुमती ॥ ननु भवेदेष विशेषो यदि हेतो-रेव स्वयमसौ विशेषः सिद्धः स्यात्। किं तु तस्यैव कुतः स भवतीति वक्तव्यं। न च निर्विशेषाद्विशेषोत्पत्तिः पुनरहेतुत्व-
10 प्रसङ्गात्। इत्याशङ्कां परिहरन्नाह। किंकृत इत्याति।

**किंकृतो हेतुभेदश्चेत्पूर्वहेतुप्रभेदतः।**

किंकृतः केन कृतः कुतो यातः। हेतुभेदश्चेत्। हेतोर्भेदो विशेषश्चेदुच्यते। पूर्वहेतुप्रभेदतः। पूर्वस्य प्राक्तनस्य तज्जनकस्य हेतोः प्रभेदतः। प्रभेदाद्विशेषात्। तस्यापि तत्पूर्वस्य हेतोः कुतो
15 विशेष इति चेत्। पुनस्तत्रापि पूर्वहेतुविशेषादिति वक्तव्यं। [191a] इत्युत्तरोत्तरस्य विशेषाकाङ्क्षायां पूर्वपूर्वस्य विशेषा-दित्युत्तरं वाच्यं। न चैवमनवस्थानमनिष्टं किं चिदापादयति[2]

---

[1] Or *tadbhāva*.

[2] See Garbe, Sâmkhya-Philosophie, p 159.

अनवराग्रस्य संसारस्य पूर्वकोटिर्न प्रज्ञायत[1] इत्युपगमात्॥ अत एव फलविपर्ययोऽपि न स्वतो भवतीत्याह। कस्माच्चेदित्यादि।

कस्माच्चेत्फलदो हेतुः पूर्वहेतुप्रभावतः॥ ११८

कस्मात्कारणात्फलदो विशिष्टफलदानसमर्थो हेतुश्चेत्। पूर्वहेतुप्रभावतः पूर्वस्य तज्जनकस्य हेतोः सामर्थ्यात्। स्वहेतुना स तादृशस्तस्य स्वभावोऽजनि येन सहकारिविशेषोपहित-कार्योत्पादानुगुणविशेषपरंपरापरिणतिमधिगच्छन्नसति प्रति-बन्धवैकल्ययोः संभवे तथाविधमेव फलमुत्पादयति। अतो-ऽविपरीतफलदानमपि स्वहेतुसामर्थ्योपजनितमेव। तेनाभ्युदय-निःश्रेयससाधनहेतोर्यथासंख्यमभ्युदयनिःश्रेयसमेव फलं जायते। तद्विपरीताद्विपरीतमिति न कथंचिदपि विपर्ययः॥

एतच्चावश्यं स्वभाववादिना सहेतुकत्वमकामकेनापि स्वीक-र्तव्यं। कथमन्यथा। हेतुमन्तरेण। प्रतिज्ञातमहेतुकत्वं भावानां सेत्स्यति। प्रतिज्ञामात्रेण तस्य केनचिदग्रहणात्। हेतुव्यापा-रेण तत्प्रसाधयतः स्वयमेव पुनः सहेतुकत्वाभ्युपगमाद्वन्ध्या मे मातेति ब्रुवत इव प्रतिज्ञायां[2] स्ववचनेन बाधनं स्यात्। इत्युभयतःपाशा रज्जुरिति[3] संकटप्राप्तो बतायं तपस्वी॥ तदुक्तं।[4]

---

[1] See Madhyamakavṛtti, p. 219.

[2] Or *pratijñāyāḥ*?

[3] See Col. Jacob, Third Handful.

[4] Compare Sarvadarçana, p. 8, &c.

न हेतुरस्तीति वदन् सहेतुकं
ननु प्रतिज्ञां स्वयमेव घातयेत् ।
अथापि हेतुप्रणयालसो भवेत्
प्रतिज्ञया केवलयास्य किं [ 191b ] भवेत् ॥ इति ।

5 तस्मात्कुदृष्टिविजृम्भितमेवैतत्प्रमाणबाधितत्वात् ॥

एवं स्वभाववादिनं निराकृत्य चतुर्थप्रकारप्रसाधनार्थमेवेश्वरकारणतां जगतः प्रत्याख्यातुं तदुपक्षेपं कुर्वन्नाह । ईश्वर इत्यादि ।

## ईश्वरो जगतो हेतुः ।

10 ईश्वरकारणवादिनो हि स्वभाववादिमतनिषेधमाकर्ण्य विशेषमभिधातुमर्धमवसितं भारस्येति मन्यमानाः प्राहुः । साध्व्येवानुष्ठितमेवं भवद्भिः । न हि कारणमन्तरेणैव जगद्वैचित्र्यमुत्पद्यते । देशादिनियमप्रसङ्गात् । केवलमचेतनाः पुनरमी जलपद्मादयो वैचित्र्याधानसमर्था इति युक्तमनेनोक्तम् । तथा-

15 ह्येष स भगवान् विश्ववैचित्र्यनिर्माणप्रवीणः । जगदेकसूत्रधारः । सकलजगदादिभूतः । नित्यात्मतया सर्वदानुपहतशक्तिप्रभावः । सर्वभावानां कार्यकारणभावादितत्त्ववेदी । समस्तार्वाचीनदर्शनागोचरमाहात्म्य ईश्वरः । तेन हेतुना सहेतुकं सकलमिदं चराचरं जगदिति कः सचेतनोऽन्यथा वक्तुमुत्सहते ॥

20 इति नैयायिकादिविपक्षकथामभिधाय प्रत्याचष्टे । ईश्वरो जगतो हेतुः । ईश्वर इति शंकरस्याख्या । स एव जगतो

विश्वस्य हेतुः सृष्टिस्थितिप्रलयकारणं । तस्मादेवैतद्विश्वमशेष-
मुत्पद्यते । अन्यथा पुनरचेतनोपादानत्वात्कथममी गिरिसरिद्व-
निसागरादय उत्पत्तिभाजो भवेयुः । चेतनावदधिष्ठानात्पुन-
रिमे समुत्पत्तुमुत्सहन्ते । तद्व्यापारेणैव प्रवर्तनात् । तदुक्तं ।

सर्वोत्पत्तिमतामीशमन्ये हेतुं प्रचक्षते । 5
नाचेतनः स्वकार्याणि किल प्रारभ[192a]ते स्वयं ॥
न स्थाम्बेरयं न चेयमवनी नैवायमम्भोनिधिः
सूर्यचन्द्रमसौ निवेशसुभगौ नैतौ जगच्चक्षुषी ।
ईशानो न कुलालवद्यदि भवेद्विश्वस्य निर्माणकृत्
सत्यादीश्वरकर्तृकं जगदिदं वक्तीति कश्चित्किल ॥ इति । 10

तस्माज्जगदेवमचेतनविश्वस्वभावमीश्वरकारणतामात्मनो
ब्रूते ॥ अत्रोच्यते । किमनया स्वगृहीतोपकल्पितया प्रमेय-
रचनया वचनरचनाप्रपञ्चमात्रया । नैतदुच्यमानमपि स्वसमया-
भिनिवेशिनां जडधियां प्रीतिकरं प्रमाणशून्यं विदुषां संतोष-
मुत्पादयति । तथा हि यद्यसौ कारुणिकः किमर्थं पुनरिमान् 15
नरकादिदुःखपीडितान् प्राणिनः करोति । तथा च सति
कारुणिकत्वं तस्य श्रद्धासमधिगम्यमेव स्यात् ॥ [1]स्वकृतात्कर्म-
फलोपभोगेन तत्क्षेपापनयने[2] यस्य प्रवृत्तिः कथमकारुणिको
नामेति चेत् । न । तत्कर्म कारुणिकः किमिति कारयति

---

[1] MS. *sakṛta*; tib. *raṅ-gis byas-pai.*

[2] MS. *tat kṣeyāyanayasya pravṛtteḥ;* tib. de-la gtoṅ-ba daṅ sol-ba-la gaṅ-zhig hjug-par hgyur-ba.

चैकान्तिकं फलमुपभुज्यते । तथापि तस्य व्यापारात् । सर्वोत्पत्ति-
मतां निमित्तकारणत्वात् ॥ अपि च किं तत्क्रियया म्रियमाणे
तत्कर्मफलमुपभुज्यते न वा । यदि प्रथमः पक्षस्तदा कथमेतत् ।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
5 ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव च ॥ इति[1] ।

सर्वकार्येष्वेव तद्व्यापाराभ्युपगमस्यानेनैवानैकान्तिकताप्रसङ्गात् ।
अथ द्वितीयः । तदा कृपालुरसौ तयोपेक्षां किमिति नाधि-
वासयति यत्नेन साहाय्यमेव तत्रोपकल्पयति । अथ कृतस्य
कर्मणोऽविप्रणाशादवश्यं तेन तत्फलमनुभवितव्यमिति तदुप-
10 [192b]भोगाय व्याप्रियत इति चेत् । कथं पुनरेतत्क्रियया-
म्रियमाणे ऽवश्यं तेनानुभवितव्यं सामर्थ्यवैकल्यात् । कः पुनरेवं
विप्रणाशे ऽपि दोषः । प्रयत्नत एव ततो निवर्तितुमुचितं कारु-
णिकस्य । एवं हि तद्विपाकजनितदुःखितया[2] तस्यापरिपाकात्तेन
कर्मैश्वर्यमुपदर्शितं तस्य भवेत् । अथ सत्त्वानां तत्कर्मणश्चोदितोऽसौ
15 दयालुरपि त्रातुमक्षमः । तदेतावतानेन कर्मैश्वर्यमित्थं द्योतित-
मनेन स्यात् । तत्परकर्मणापि समाकृष्टो नाम नात्मनि
वशित्वमधिगच्छति । ईश्वरतः[3] कर्मण एव महत्सामर्थ्यमेवं

---

1 This verse occurs in Sarvadarçana (former edition), p. 82 *svargaṃ vā çvabhram eva vā* (same reading in Ṣaḍdarçanasamuccaya, ed. Suali pp. 12, 53); see Cowell's note p. 116, who refers to Mbh. III. 30. 28 (Protap's edition) *svargaṃ narakam eva ca;* and Gauḍapāda, S. Kār. 61. (p 37, Ben. S.S. nº 9).

2 MS. *tasyāḥ p°*.

3 MS. *içvarato.*

प्रकाशितं स्यात्। तद्वरं कर्मैव पर्युपास्यं किमनेन समाराध्य-
मानो महेश्वरोऽपि त्रातुमसमर्थः तस्मादिदमभ्यस्ततमेव।

नमः तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति। इति[1] ॥

अथ न कारुणिकः। तदासौ वीतरागः सरागो वा।
अथाद्यो विकल्पः। तदा यदि नाम दयाविरहात्सुखं नोप- 5
जनयति दुःखं तु जनस्य कस्मादुत्पादयतीति वक्तव्यं। दुःखं हि
रागादिवशेन कस्य चिदुपनीयते। ते चास्य न सन्ति कथम-
कारणमेव जनं दुःखयति। क्रीडार्थं दुःखयतीति चेत्।
क्रीडार्थं वीतरागस्य प्रवृत्तिरिति निश्चितमसौ वीतरागः।
रागादिमतामपि तावज्जितेन्द्रियाणां न क्रीडार्थं दृश्यते 10
प्रवृत्तिः। किं पुनर्वीतरागाणां तथा भविष्यति। न रक्षःक्रूर-
पिशाचादिमन्तरेणान्यस्य परदुःखेन क्रीडा संभाव्यते ॥

अथावीतराग इति पक्षः। तदा कथमयमितरजनसाधारणः
सर्वेश्वरो भवितुमर्हति। रागादिक्लेशपाशाव[198a]बद्धत्वेन-
ऐश्वर्यायोगात्। अन्यथा तदन्यस्यापि तथाविधस्य तत्प्रसङ्गात्। 15
नापि संसारचारकोपरुद्धात्मनस्य विश्ववैचित्र्यरचनाचातुर्यं
तदन्यस्येव युज्यते। तदेवमखिलमेव भवन्तं विप्रलम्भयति यदेवं-
विधस्यापि यावदैश्वर्यमभ्युपगम्यते ॥ भवतु वा तथाविधस्यापि
कर्तृत्वं। तथापि किमसौ स्वस्थात्मा [अस्वस्थात्मा वा]।

---

[1] Vulgata: *namas tat°*; Bhartṛhari, II. 92 (Bohlen), Çilhana's Çānti-çataka, I. 1; Subhāṣitāvali 3079, Çārṅgadharapaddhati, 436 (Bhartṛhari). [F. W. Thomas.]

यदि कृपात्मा तदा किमिति जनमकाण्डमेव दुःखयति । न
हि कृपात्मा निरपराधं जनं पीडयन् दृष्टः । अथ विमार्ग-
गामिनमेव कृतापराधं पीडयतीति चेत् । विमार्गगामिन-
मप्ययमेव कारयति । तथाभूतमपि कारयित्वा पुनः पीडय-
5 तीति । स लौकिकेश्वराणामपि[1] अधन्यतया वृत्तिमतिशेते । ते
हि स्वयंकृतापराधमेवापराधिनमनुशासति । अयं पुनरात्म-
नैव कारयित्वेति महानस्य विशेषः ॥ अथाकृपात्मा । तदा
साधु तदाराधने स्वर्गापवर्गार्थिनां प्रेक्षावतां प्रवृत्तिः । न
ह्युन्मत्तस्याराधनमुन्मत्तकादन्यः कर्तुमुत्सहते । तथा हि स्वर्गा-
10 दिलिप्सया तदाराधनाय प्रवर्तन्ते प्रेक्षावन्तः । तस्यापरिनिश्चि-
तस्वभावतया ततो न संभाव्यते । विपर्ययोऽपि वा तदारा-
धनफलस्य संभाव्यते । तदाराधनप्रवृत्तास्तु गाढतरमश्रद्धावशेन
तमुन्मत्तमाचक्षाणा आत्मानमेवोन्मत्तकमाचक्षीरन्। कथमन्यथा
तदाराधने प्रवर्तन्ते ॥ तदपरोन्मत्तकैर्वा किमपराद्धं यतस्ते न
15 पर्युपास्यन्ते । तेषां प्रभावातिशयविकलत्वादिति चेत् । न वै
प्रकृतेऽपि कं चित्प्रभा[193b]वातिशयमुत्पश्यामः । उन्मत्तकः
सकलजगदतिशायिशक्तिरिति कोऽन्य उन्मत्तकाद्वक्तुमर्हति ।
तदयमभिविचार्यमाणो न कश्चिदवस्थानं लभत इत्यलं दुर्मति-
विजृम्भितेष्वादरेणेति । तस्मात्सूक्तमेतदुक्तं ।
20 सुखस्य दुःखस्य न कोऽपि दाता

1 MS. rāṇutām.

परो ददातीति कुबुद्धिरेषा ।
स्वकर्मसूत्रग्रथितो हि लोकः
कर्ताहमस्मीति वृथाभिमानः ॥ इति ।

तस्मादकर्तृकमेवेदं जगदशेषमिति ॥ न परिदृष्टकारणा-
दन्यः स्वतन्त्रश्चेतनो वा तस्य कर्ता कश्चिदस्ति । इदमेव 5
विस्तरेण प्रतिपादयितुं सिद्धान्तवादी प्राह ।

वद कस्तावदीश्वरः ।

ईश्वरकारणवादिनं पृच्छति । वद ब्रूहि कोऽयमीश्वरो
भवतोऽभिमतः । तावच्छब्देनेदमभिधत्ते । येषां[1] क्षित्यादीनाम-
न्वयव्यतिरेकानुविधायि कार्यमुपलभ्यते । तत्र कतमदीश्वरं 10
भवानाचष्टे । न चानुपलब्धान्वयव्यतिरेकव्यापारस्य कारणता
प्रकल्पयितुं युक्ता । अतिप्रसङ्गात् । तस्मात्तत्कारणतामिच्छता
दृष्टान्वयव्यतिरेकव्यापार एवाङ्गीकर्तव्यः । न चान्यस्य क्षिति-
बीजादिव्यतिरिक्तस्यान्वयव्यतिरेकानुविधानं कुर्वद्दृश्यते कार्यं ।
तत्कथं तस्य कार्योपयोगित्वं व्यवस्थाप्यते । तदुक्तं । 15

येषु सत्सु भवत्येव . . . . .[2]
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥ इति ।

अथ पृथिव्यादीनि भूतान्येवेश्वरो भवत्विति पराभिप्राय-
माशङ्क्याह भूतानि चेत् ।

---

[1] Or kṣitibījādīnām.

[2] MS. may be *yat tebhyo 'nyasya kalpane*.—Tibetan gives no help; it has: *yeṣu satsu yad eva bhavati taddhetutvena*.. [gaṅ-dag yod-na gaṅ ñid hgyur | de rgyu-ñid-du... ].

भूतानि चेद्भवत्वेवं नाममात्रेऽपि किं श्रमः ॥ ११९

यदि भूतानि पृथिव्यादीनीश्वर उच्यते तदाभ्युपगम्यत एव। भवत्वेवं। एवमस्तु। न वयमत्र विप्रतिप[ 194a ]द्यामहे। क्षित्याद्यन्वयव्यतिरेकानुविधानवतः कार्यस्य दर्शनात्। केवलं नाममात्रेऽपि किं श्रमः। नामैव केवलमर्थभेदशून्यं नाममात्रकं। अपिरवधारणे। नाममात्र एव किमिह महासमारम्भेण तत्प्रसाधनाय श्रम आयासः क्रियते। यथा क्षित्यादय उच्यन्ते। तथा पुनस्तान्येव भूतानीश्वर इति नार्थतः कश्चिद्विशेषः। न चात्र विप्रतिपत्तावर्थशून्यायां किं चित्फलमुपलभ्यते॥ अथाप्येवार्थविशेषस्तदा नैषामीश्वरत्वं युक्तमित्याह[1] अपि त्वित्यादि।

अपि त्वनेकेऽनित्याश्च निश्चेष्टा न च देवताः।
लङ्घ्याश्चाशुचयश्चैव क्ष्मादयो न स ईश्वरः ॥ १२०

अपि तु शब्देनाधिकमाह। नैते क्षित्यादयो भवतामीश्वरत्वेन कल्पयितुं युज्यन्ते। तल्लक्षणायोगात्। कथं कृत्वा। अनेके नानास्वभावाः। अनित्याश्च विनश्वरस्वभावाः। निश्चेष्टाः। अचेतनतया निर्व्यापाराः। न च देवता। नापि चाराध्यरूपाः। लङ्घ्याश्चातिक्रमणीयाः। अनभ्यर्च्यत्वात्। अशुचयश्चैव अपवित्राः। अमेध्यादिष्वपि पृथिव्यादिसद्भावात्। क्ष्मादयः क्ष्मा

---

[1] First hand °*tvam uktam*; second hand illegible.

पृथिवी आदिर्येषामप्तेजोवायूनां ते तथोक्ताः। न च ईश्वरः। च ईश्वरत्वादुक्तस्वभावो न भवति। तत्षट्प्रकारविपरीतत्वात्॥ यदि आद्यो नेश्वर आकाशं तर्हि भविष्यतीत्याह ना[काश-मित्यादि।

नाकाशमीशोऽचेष्टत्वात्। 5

आ]काशमपीश ईश्वरो न भवति। कुतः। अचेष्टत्वात्। स्वभावविकलतया निर्व्यापारत्वात्। परमतेऽपि निष्क्रियत्वात्॥ आत्मा तर्हि भवतु।

नात्मा पूर्वनिषेधतः।

पूर्वमेव विस्तरेणात्मनः प्रतिषिद्धत्वात्। निःस्वभावः शश- 10 विषाणवदसौ॥ अथापि स्यात्। अवितर्क्यमाहात्म्यत्वादस्य नार्वाग्दर्शनैरिदमित्थमिति तत्स्वरूपं विवेचयितुं शक्यमित्याह। अचिन्त्यस्येत्यादि।

अचिन्त्यस्य च कर्तृत्वमप्यचिन्त्यं किमुच्यते॥ १२१

यद्यसौ चिन्तातिक्रान्तमाहात्म्यः। तदाचिन्त्यस्य च चिन्ता- 15 गोचरमतिक्रान्तस्येश्वरस्य। कर्तृत्वं युगपत्कारकत्वमप्यचिन्त्यमतर्क्यमेवोच्यते। किमभिधीयते। कर्तृत्वमप्यस्याचिन्त्यत्वान्न वक्तु-मुचितमित्यर्थः॥ स्यादेतत्। अतिदुर्बोधस्वभावतया चिन्ताविषयमशक्योऽसौ। कार्यं तु तस्य। सर्वजनप्रतीतिसाधारणत्वात्। चिन्त्यमेवेति सुवाचं मत्वाह। तेन किमित्यादि। 20

भूतानि चेद्भवत्वेवं नाममात्रेऽपि किं श्रमः॥ ११९

यदि भूतानि पृथिव्यादीनीश्वर उच्यते तदाभ्युपगम्यत एव। भवत्वेवं। एवमस्तु। न वयमत्र विप्रतिप[ 194a ]द्यामहे। क्षित्याद्यन्वयव्यतिरेकानुविधानवतः कार्यस्य दर्शनात्।
5 केवलं नाममात्रेऽपि किं श्रमः। नामैव केवलमर्थभेदशून्यं नाममात्रकं। अपिरवधारणे। नाममात्र एव किमिह महासमारम्भेण तत्प्रसाधनाय श्रम आयासः क्रियते। मया क्षित्यादय उच्यन्ते। त्वया पुनस्तान्येव भूतानीश्वर इति नार्थतः कश्चिद्विशेषः। न चात्र विप्रतिपत्तावर्थशून्यायां किं चित्फल-
10 मुपलभ्यते॥ अथास्त्येवार्थविशेषस्तदा नैषामीश्वरत्वं युक्तमित्याह[1] अपि नित्यादि।

अपि त्वनेकोऽनित्यश्च निश्चेष्टो न च देवताः।
लङ्घ्याश्चाशुचयश्चैव क्ष्मादयो न स ईश्वरः॥ १२०

अपितुशब्देनाधिकमाह। नैते क्षित्यादयो भवतामीश्वर-
15 त्वेन कल्पयितुं युज्यन्ते। तल्लक्षणायोगात्। कथं कृत्वा। अनेके नानास्वभावाः। अनित्याश्च विनश्वरस्वभावाः। निश्चेष्टाः। अचेतनतया निर्व्यापाराः। न च देवता। नापि चाराध्यरूपाः। लङ्घ्याश्चातिक्रमणीयाः। अनतिक्रमणात्। अशुचयश्चैव अपविचाः। अनेध्यादिष्वपि पृथिव्यादिसद्भावात्। क्ष्मादयः क्ष्मा

[1] First hand °tvam uktam; second hand illegible.

पृथिवी आदिर्येषामप्तेजोवायूनां ते तथोक्ताः। न च ईश्वरः। न ईश्वरत्वादृतुस्वभावो न भवति। तत्षट्प्रकारविपरीतत्वात् ॥ यदि आदयो नेश्वर आकाशं तर्हि भविष्यतीत्याह ना[काश-मित्यादि।

## नाकाशमीशोऽचेष्टत्वात्। 5

आ]काशमपीश ईश्वरो न भवति। कुतः। अचेष्टत्वात्। स्वभावविकलतया निर्व्यापारत्वात्। परमतेऽपि निष्क्रिय-त्वात् ॥ आत्मा तर्हि भवतु।

## नात्मा पूर्वनिषेधतः।

पूर्वमेव विस्तरेणात्मनः प्रतिषिद्धत्वात्। निःस्वभावः शश- 10 विषाणवदसौ ॥ अथापि स्यात्। अवितर्क्यमाहात्म्यत्वादस्य नार्वाग्दर्शनैरिदमित्थमिति तत्स्वरूपं विवेचयितुं शक्यमि-त्याह। अचिन्त्यस्येत्यादि।

## अचिन्त्यस्य च कर्तृत्वमप्यचिन्त्यं किमुच्यते ॥ १२१

यस्यासौ चिन्तातिक्रान्तमाहात्म्यः। तदाचिन्त्यस्य च चिन्ता- 15 पथमतिक्रान्तस्येश्वरस्य। कर्तृत्वं युगपत्कारकत्वमप्यचिन्त्यमतर्क्यं किमुच्यते। किमभिधीयते। कर्तृत्वमप्यस्याचिन्त्यत्वाच्च वक्तु-मुचितमित्यर्थः ॥ स्यादेतत्। अतिदुर्बोधस्वभावतया चिन्ताचि-तुमशक्योऽसौ। कार्यं तु तस्य। सर्वजनप्रतीतिबाधाहेतुत्वात्। चिन्त्यतेनैवेति मुधावचं मन्यमाह। तेन किमित्यादि। 20

तेन किं स्रष्टुमिष्टं च।

भवतु नाम तस्य कार्यं चिन्त्यं। तथापि तेन किं स्रष्टुमिष्टं च। तेनेश्वरेणाचिन्त्यमाहात्म्येन किं कार्यं स्रष्टुं निर्मातुमिष्टमभिप्रेतं च। इति परस्योत्तरमाशङ्क्याह

5 आत्मा चेत्।

अत्र पूर्वपदव्याकारेण छन्दोऽनुरोधात्संधिर्न कृतः। आत्मा तेन स्रष्टुमिष्टं चेन्मतं। एतत्प्रतिषेधयति।

नन्वसौ ध्रुवः।

ननु भो असावात्मा ध्रुवो नित्योऽभिमतो भवतां। तत्कथ-
10 मसौ क्रियते। अन्यथा नित्य एव स न स्यात्। सदकारणवन्नित्यमिति नित्यलक्षणाभावप्रसङ्गात्॥ अन्यथापि न तस्य सृष्टिव्यापार उपलक्ष्यत इत्याह। आदीत्यादि।

क्ष्मादिस्वभाव ईशस्य ज्ञानं ज्ञेयादनादि च॥ १२२
कर्मणः सुखदुःखे च।

15 आदिग्रहणेनाप्तेजोवाय्वाकाशकालदिग्मनांसि गृह्यन्ते। तेषां स्वभावो ध्रुवः। सोऽपि न तेन क्रियते। पृथिव्यादीनां परमाणूनां नित्यत्वाभ्युपगमात्। सूक्ष्मरूपे च तद्व्यापारस्य निषेत्स्यमानत्वात्। आकाशादीनामपि नित्यत्वात्। गुणादीनामपि विचार्यमाणत्वात्। ईश[195a]श्चेति। ईश्वरोऽपि ध्रुव इत्यात्मानमसौ न
20 करोति। ज्ञानं ज्ञेयादनादि चेति। ज्ञानमपि ज्ञेयादुत्पद्य-

मानमनादि च । आसंसारं प्रवाहमाश्रित्य प्रवर्तनात्तदपि न तेन क्रियते । तत्कर्मणः सुखदुःखे च । कर्मणः शुभाशुभाद्यथासंभवं सुखदुःखे च भवत इष्टानिष्टविपाकत्वे । तथापि न तस्य व्यापारः[1] ॥ एवं सति ।

**वद किं तेन निर्मितं ।** 5

ब्रूहि किमिदानीं तेनेश्वरेण निर्मितं रचितं । इति न क्वचित्तस्य सामर्थ्यमुपलभ्यते । तत्कथमस्य जगत्कर्तृत्वमुच्यते ॥ अधुना सर्वत्र साधारणं दूषणमाह । हेतोरित्यादि ।

**हेतोरादिर्न चेदस्ति फलस्यादिः कुतो भवेत् ॥ १२३**

तथा ह्यसौ नित्यो वा जगतो हेतुः स्यादनित्यो वा । 10 नित्य एव तद्वादिभिरसौ परिकल्पितः । तत्र नित्यत्वे सति हेतोः कारणस्यादिर्नास्ति यदि । तदा फलस्यादिः कुतो भवेत् । फलस्य तज्जन्यस्य कार्यस्य सदा प्रवृत्तत्वादादिः कुतो भवेत् । नैव स्यादित्यर्थः । नित्यमुपस्थिते समर्थस्वभावे हेतौ कार्यमपि तज्जन्यमजस्रमेव जायेत । इति तत्सामर्थ्यप्रतिबद्धं 15 कार्यं सदा प्राप्नोति । तत्

**कस्मात्सदा न कुरुते ।**

कस्मात्कारणात्सदा सर्वकालं न कुरुते । न सर्वं कार्यं जनयतीति कथं कस्य चित्कार्यस्य कदा चित्क्रियाविरामः ॥

---

[1] See Sāṃkhyasūtra V. 2.

अथ वान्यथावतार्यते। यदि च नेश्वरो जगतः कर्ता स्यात्। कथमिदं प्रलयानन्तरमादितः सर्गभाग्भवेत्। इत्यत आह। हेतोरित्यादि। अनवराग्रो हि जातिसंसारः। ततश्च हेतोः क्लेशकर्मादिलक्षणस्य। आदिः पूर्वकोटिः। न चेदस्ति।
5 फलस्य सत्त्वभाजनलोकविवर्तादिलक्षणस्य। आदिः प्रथमारम्भः कुतो भवेत्। नैव विद्यत इत्यर्थः। अनादौ संसारे हि सत्त्वानां कर्माधिपत्येन स्थितिसंवर्तविवर्तानां प्रवर्तनात्। एतच्चोक्तमेव कर्मणः सुखदुःखे चेत्यनेन॥

अथ वा अत्रापीश्वरमेवाभिसंधायोक्तं हेतोरिति। हेतो-
10 रीश्वरस्यादिर्न चेदस्ति। प्रलयकालेऽपि तस्यानुपहततया सत्ताख्यस्याभ्युपगमात्। फलस्य तत्कृतस्य सर्गादिलक्षणस्यादिः कुतो भवेत्। नित्यतया तत्कारणस्य सदा समर्थत्वात्सर्गादिकमपि नित्यमेव स्यात्। अतो नित्यसमर्थे तस्मिन् सर्गादेरादिरेव न स्यात्। ततः कथं सर्गस्यादावपि तस्य व्यापारो भवेत्॥
15 अपि च यद्यसौ कर्ता स्यात्तदा नित्यत्वात्

कस्मात्सदा न कुरुते।

सर्गादिकमिति शेषः। तथा हि यदि कदा चित्सर्गं करोति। तदा तत्कारणस्वभावतया[1] सदा तमेव कुर्यात्। एवं स्थितिसंहारयोरपि वक्तव्यं युगपद्वा सर्गादिक्रिया तस्य स्यात्।
20 अत एव च हेतोरुपरमाभावात्। न फलस्यापि विरामः। अन्यत्पूर्ववत्॥

1 M.S. *tatkaraṇa*.

अथापि स्यात् । यदि नामासौ सदा समर्थस्वभावः । तथापि कदा चित्सहकारिवैकल्यान्न करोतीत्याह ।

न हि सोऽन्यमपेक्षते

इति । समर्थस्वभावो हेतुरीश्वरः । हिर्यस्मात् । नान्यं सहकारिणमपेक्षते । नित्यस्य समर्थस्वभावस्य सततस्तदपेक्षा- 5
योगात् । न हि नित्यतयाऽनाधेयातिशयस्य का चिदपेक्षा नाम[1] । विशेषोत्पत्तौ वा तद्व्यतिरिक्तस्वभावस्य तस्याप्युत्पत्ति-
प्र[196a]सङ्गात् । व्यतिरेके वा विशेषादेव कार्योत्पत्तिः । तस्याकारकत्वं स्यात् । तदुक्तं

अपेक्ष्यते परः कश्चिद्यदि कुर्वीत किं च न ।[2] 10
यदकिंचित्करं वस्तु किं केन चिदपेक्ष्यते ॥ इति ।

भवन्तु[3] वा तस्य सहकारिणः । तथापि ते नित्या वा स्युरनित्या वा । ये तावन्नित्याः परमाण्वादयस्तेषां न सद्भाव- वैकल्यं संभवति । नापि तदायत्तसंनिधीनां संनिधानवैकल्यं । अनित्यानामपि तदायत्तोदयसंनिधीनां कुतो वैकल्यं नाम 15
येन सहकारिवैकल्यान्न करोतीत्युच्यते । ततो नायमत्र परिहारः ॥ अत एवाह । तेनाकृत इत्यादि ।

---

1 Compare Sarvadarçana, p. 9 foll., Ṣaḍdarçanasaṁgraha, p. 28.

2 So Ṣaḍdarçana, p. 29; MS. has *apekṣata* (second hand *kṣyeta*) *paraḥ kāryaṁ yadi vidyeta kiṁ cana.*

3 MS. *bhavatu?*

तेनाकृतोऽन्यो नास्त्येव तेनासौ किमपेक्षतां ॥१२४

तेनेश्वरेणाकृतो य उत्पत्तिमांस्तेनाकृतः। सो नास्त्येव न विद्यते। अन्योऽपरो जगति। तेन कारणेन तदायत्तवृत्तीनां सहकारिणां सदा संनिहितत्वादसौ नित्यः कर्ता किमपेक्षतां।
5 किमपेक्षमाणः कदा चित्कार्यं न कुर्यात्। इत्थं न का चिदपि तस्यापेक्षास्तीति सदा कार्यं कुर्वीत ॥

अथापि स्यात्। समवायि कारणमसमवायि[1] कारणं निमित्तकारणं चेति कारणत्रितयात्कार्यमुत्पद्यते। तदस्य निमित्तकारणत्वात्सामग्रीमपेक्ष्य कार्यं कुर्वतो नोक्तदोषप्रसङ्गः।
10 इति पराशयमाशङ्क्याह। अपेक्ष[त] इत्यादि।

अपेक्षते चेत्सामग्रीं।

यदि नामासौ सदा सर्वकार्याणि कर्तुं समर्थः। तथाप्यपेक्षते सामग्रीं। न हि सामग्रीमन्तरेण सत्यपि समर्थे कर्तरि कार्यमुत्पद्यते। यथा किल पटोत्पादनसमर्थेऽपि क चिद्धेतौ
15 तुरितन्तुवेमादिकमन्तरेण न पट उत्पद्यते। तथा प्रकृतेऽपीति चेद्यदि। आह।

हेतुर्न पुनरीश्वरः।

यदि सामग्रीसद्भावे करोति। तदभावे च न करोतीत्यभ्युपगम्यते। तदा पुनरीश्वरो हेतुर्न स्यात्। सामग्र्या एव

---

1 MS. *samavāya*.

कार्योत्पत्तेः। ततश्चानुपपत्तेः। तथा भावाभावयोः कार्यस्य भावाभावदर्शनात्। न तु पुनरीश्वरभावाभावयोरिति। न सामग्रीकालेऽपि स परहूपेण कर्ता। स्वरूपं चास्य प्रागपि समर्थं तदेवेति कथं कदा चित्क्रियाविरामः॥ यदप्युक्तं। कुविन्दादिवत्कदा चित्करोतीति। तदपि न युक्तं। यतः 5 कुविन्दादयः प्रागसमर्था एव। पुनः पश्चात्तुर्यादिसामग्रीप्रति-लम्भादपूर्वसामर्थ्याधिगमात्। पटादिकार्यं कुर्वन्ति। अन्यथापि तेषामपि पूर्वं तत्सामर्थ्यसद्भावे तत्क्रियाप्रसङ्गो न निवर्तेत इति साध्यविकलो दृष्टान्तः॥ किं च सामग्रीजननेऽपि स एव कारणं। स च सर्वदा संनिहितस्वभाव इति। कथं कदा 10 चित्सामग्रीवैकल्यमप्यस्य। अत एवोपदर्शयन्नाह।

**नाकर्तुमीशः सामग्र्यां**

इति। नाकर्तुमीशः। नाक्रियायां समर्थः। सामग्र्यां सामग्रीविषये। सर्वकार्यक्रियायां समर्थत्वात्सामग्रीजन्मन्यपि नोदासितुं शक्नोति। जनयतु तर्हि सामग्रीमिति चेदाह। 15

**[ न कर्तुं तदभावतः॥ १२५ ]**

न कर्तुमपि सामग्र्यामीशः। कुतः। तदभावतः। तस्याः सामग्र्या अभावतोऽविद्यमानत्वात्। न चाविद्यमानस्वभावे वन्ध्यासुत इव किं चित्कर्तुं शक्यते। नीरूपत्वात्। वक्ष्यति नाभावस्य विकारोऽस्ति कल्पकोटिशतैरपि। इति॥[1] 20

---

[1] See below 147.

भवतु नाम । सामग्रीसद्भावे सत्येव [197ᵃ] कर्ता । तथापि किं सामग्रीवशात्कृष्टः स्वयमनिच्छन्नेव करोति । आहोस्विदिच्छन्निति विकल्पौ । तत्राद्यं विकल्पमाशङ्क्याह । करोतीत्यादि ।

5 **करोत्यनिच्छन्नीशश्चेत्परायत्तः प्रसज्यते ।**

करोति कार्यमभिनिर्वर्तयत्यनिच्छन्ननभिलषन्[1] । ईश ईश्वरः । चेन्मतं । परायत्तः प्रसज्यते । परायत्तः परतन्त्रः प्रसज्यते आपद्यते । सामग्रीवशेनानिच्छतोऽपि कुर्वतः । तद्वशवर्तित्वप्रसङ्गात् । न च पारतन्त्र्यमनुभवत ईश्वरत्वं युक्तमतिप्रसङ्गात्[2] । द्वितीयं विकल्पमधिकृत्याह ।

10 **इच्छन्नपीच्छायत्तः स्यात् ।**

अथेच्छन् करोतीति पक्षः स्वीक्रियते । तदापि इच्छायत्तः स्यात् । इच्छासद्भावे कार्यव्यापारात् । तदभावे चाव्यापारात् । तदपेक्षासद्भावात् । अतः

15 **कुर्वतः कुत ईशता ॥ १२६**

एवं कुर्वतः कार्यमभिनिर्वर्तयतः[3] सततस्य कुत ईशता कुत ऐश्वर्यं ॥ एतेन यदुक्तं केन चित् । बुद्धिमत्त्वादीश्वरस्य नैष दोषः । बुद्धिमन्तो हि स्वसत्तामात्रजन्यमकस्मादेव कार्यं कुर्यात् ।

---

[1] MS. *nivartayaty.*
[2] MS. °*tvam uktam.*
[3] MS. *abhinivart.*

बुद्धिमांस्तु कर्तुमीशानोऽप्यनिच्छन्न करोति । इति कथन्नो-पालम्भ इति तदपि निरस्तं । तथा हि ता अपीच्छाः स्वसत्ता-मात्रनिबन्धना । किं न करोतीति स एव तस्योपालम्भः ॥ अपि च । यदि ता न सहकारिण्यः किं तासां वियोगेऽपि न करोति । अथ[ा]सहकारिवैकल्येऽपि कार्याकरणे सर्वदा तदायत्तः । सहकारिणश्चेत् । तथापि तद्भावेऽपि सर्वकार्यं किं न करोति । सहकारिणां साकल्ये समत्वात् ॥ केवलस्याशक्तस्य न कारकत्वमिति चेत् । तत्किमयं पररूपेण कारकः । तथा चेदकारक एव । न हि स्वरूपेणाकारकः कारको [197b] नाम । स्वरूपमप्यस्य निजशक्तिसम्बद्धवाच्यं । कार्योपयोगीति चेत् । अस्तमिदानीमागन्तुकशक्त्यपेक्षया । समर्थोऽप्येष प्रकृत्या सहकारिणामसंनिधौ नैव कारक इति चेत् । मातापि सती प्रकृत्या वन्ध्येत्येतदपि तर्हि देवानां प्रियेण वक्तव्यमित्यास्तां तावत् ॥ अनित्यस्तु तद्वादिनां नाभिमतः । तथा च सत्यन्य-साधारणस्वभावस्य कथमीशत्वमिति नेश्वरकार्यं जगद्वैचित्र्य-मिति सिद्धं ॥

यदि न बुद्धिमत्कर्तृकं जगत् । तर्हि नित्यपरमाणुपुञ्जमयं द्व्यणुकादिक्रमेणोत्थं क्षितितरुपर्वतादिकं भवत्वित्याह । येऽपी-त्यादि ।

**येऽपि नित्यानणूनाहुस्तेऽपि पूर्वं निवारिताः ।**

येऽपि मीमांसकादिवादिनो नित्यानणून् । परमाणूनाहु-

अंगद्वैविध्यकारणत्वेन ब्रुवते । तेऽपि वादिनः पूर्वं । अंशा अप्यणुभेदेनेत्यादिना[1] परमाणुविचारसमये तत्प्रतिषेधाभिधारिता निराकृताः : । अतो नित्यपरमाणुमयमपि नेदं जगत् ॥

एवमीश्वरकारणतां लोकार्थनान्तराञ्च एव नित्यपरमाणुस्वभावतां च जगतो निरस्य तस्यैव तुर्यप्रकारस्य[2] समर्थनाय प्रधानपरिणामरूपतां निराकर्तुं सांख्यमतमुद्भावयन्नाह । सांख्या इत्यादि ।

**सांख्याः प्रधानमिच्छन्ति नित्यं लोकस्य कारणं ॥ १२७**

<u>सांख्याः</u> कापिलाः प्रधानं प्रकृतिरित्यपरनामधेयमिच्छन्ति मन्यन्ते नित्यं लोकस्य कारणं । तच्च नित्यमविनश्वरस्वभावं । लोकस्य सर्वस्य चराचरस्य जगतः कारणं परिणामरूपेण हेतुमिच्छन्ति ॥ किमिदं प्रधानं नामेति चेदाह । सत्त्वमित्यादि ।

**सत्त्वं रजस्तमश्चेति गुणा अविषमस्थिताः ।**
**प्रधानमिति कथ्यन्ते विषमैर्जगदुच्यते ॥ १२८**

सत्त्वं रजस्तमश्चेति । एते त्रयो गुणा अविषमं स्थिताः साम्याव[198a]स्थां प्राप्ताः । प्रधानमिति कथ्यन्ते । प्रधानमित्युच्यन्ते । एषां तावत्प्रकृत्यवस्था । विषमैर्जगदुच्यते । विषमावस्थां प्राप्तैः । पुनरेभिरेव गुणैर्जगदुच्यते । विश्ववैचित्र्यपरिणामः कथ्यते ॥ तथा हि तेषां प्रक्रिया । यदा पुरुषस्य

---

[1] See above, ix, 87.

[2] See above, p. 540, l. 10.

विषयोपभोगाकारमौत्सुक्यमुपजायते । तदा प्रकृतिः परिज्ञात-पुरुषौत्सुक्या पुरुषेण युज्यते । तदा पुनः शब्दादिसर्गरूपेण परिणतिमुपजनयति । तदायं क्रमः ।

प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥[1] 5

अस्यायमर्थः । प्रकृतेर्महान् । प्रधानान्महान् । महानिति बुद्धेराख्या । ततो महतोऽहंकारः । अहमिति प्रत्ययः । तस्मादहंकाराद्गणश्च षोडशकः । षोडशक इति एकादश चेन्द्रियाणि[2] पञ्च तन्मात्राणि । तत्र पञ्च कर्मेन्द्रियाणि वाक्-पाणिपादपायूपस्थलक्षणानि । पञ्च बुद्धीन्द्रियाणि श्रोत्रं त्वक् चक्षू 10 रसनं घ्राणं चेति । उभयात्मकं तु मन इत्येकादश भवन्ति । पञ्च तन्मात्राणि पुनः शब्दस्पर्शरूपरसगन्धाः । पञ्चभ्यः पञ्च भूतानि । पञ्चभ्यः शब्दादिभ्यः पञ्च भूतानि भवन्ति । पञ्च भूतानि आकाशवायुतेजोजलपृथिव्याख्यानि ॥ आद्यप्रकृतिस्तु कारणमेव न कार्यं । महदहंकारौ शब्दादयश्च पञ्च कार्यं 15 कारणं च । एकादशेन्द्रियाणि आकाशादयश्च पञ्च कार्यमेव न कारणं । पुरुषः पुनरुभयस्वभाववर्जित इति । यदाह ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः [198b] सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः । इति ॥[3]

---

1 Sâmkhyakârikâ, 22.
2 So MS.
3 Sâmkhyakârikâ, 3; MS. has ṣoḍaçakaç ca.

तत्र प्रधानमशेषकार्यशक्तिमदेकमेव त्रिगुणात्मकमेव कार्य-
मभिनिर्वर्तयति । कथमन्यथा तथाविधमानं कार्यं वैश्वरूप्य-
मुत्पद्यते । तथा चोक्तं ।

अशेषशक्तिप्रचितात्प्रधानादेव केवलात् ।
5 कार्यभेदाः प्रवर्तन्ते तद्रूपा एव तत्त्वतः ॥
यदि त्वसद्भवेत्कार्यं कारणात्मनि शक्तितः ।
कर्तुं तन्नैव शक्यं तन्नैरूप्याद्वियदब्जवत् ॥ इति ॥[1]

एवं किल प्रधानात्कार्यरूपेण जगद्विवर्तः प्रवर्तत इति
कापिलाः ॥ तदेवं तत्सर्वमाकाशे विरचितचित्रमिव प्रतिभासत
10 इति मन्यमानः सिद्धान्तवादी दूषयितुमाह । एकस्येति ।

**एकस्य त्रिस्वभावत्वमयुक्तं तेन नास्ति तत् ।**

एकस्य सतः प्रधानस्य त्रिस्वभावत्वं । सत्त्वरजस्तमोभेदेन
त्र्यात्मकत्वं । अयुक्तमसंगतं । तेन कारणेन नास्ति तत् । न
विद्यते तत्त्रिगुणात्मकं प्रधानं । एकमनेकस्वभावमिति
15 परस्पराहतमेतत् । अतस्तस्मिन्नपह्नुते सर्वं तत्कार्यमपाकृतं
भवेत् ॥ मा भूत्तावत् तदेकस्वभावं त्रिगुणात्मकं । गुणास्ता-
वत्स्वरूपतः सन्तीत्याह । एवमित्यादि ।

**एवं गुणा न विद्यन्ते प्रत्येकं तेऽपि हि त्रिधा ॥ १२९**

एवमेव प्रधानवत् । गुणाः सत्त्वरजस्तमोरूपा न विद्यन्ते । ते

---

1 "The lost Rājavārttika has been a Sāṁkhya work in çlokas. Should these verses have been taken from it?" (Prof. R. Garbe).

ऽपि हि त्रिधा। त्रिरूपत्वात्। ते ऽपि गुणाः प्रत्येकमेकैकशस्त्रिधा त्रिप्रकाराः। तथा हि सर्वं त्रिगुणात्मकमिति ब्रुवतां प्रत्येकं गुणा अपि स्वरूपेण त्रिगुणात्मकाः प्राप्नुवन्ति। तथा तद्गुणा अपि त्रिगुणात्मकतया नैकस्वभावा विद्यन्ते॥ यदा चैवं विचारयतो गुणा न सन्ति। तदा तद्विवर्तरूपाः शब्दादयो 5 ऽपि [144a]न युज्यन्त इत्याह। गुणाभाव इत्यादि।

गुणाभावे च शब्दादेरस्तित्वमतिदूरतः।

गुणानां सत्त्वादीनां। अभावे ऽसत्त्वे च। दूषणान्तरसमुच्चये चकारः। शब्दादेरादिग्रहणात्स्पर्शादिपरिग्रहः। अस्तित्वं सद्भावो ऽतिदूरतः सर्वथैव न युज्यते। कारणाभावे कार्यस्य 10 सत्तायोगात्। यदप्युक्तं।

सुखाद्यन्वितमेतद्धि व्यक्तं व्यक्तं समीक्ष्यते।
प्रसादतापदैन्यादिरूपस्यैकोपलक्षितः।

इति तदपि न युक्तं। [1]यस्य सत्त्वादीनां सुखादिरूपतामुपपादयितुं तत्परिणामस्य रूपादिनो व्यक्तस्य सुखाद्यन्वयो 15 हेतुरुक्तः सोऽपि नास्तीत्याह[1]। अचेतन इत्यादि।

अचेतने च वस्त्रादौ सुखादेरप्यसंभवः॥ १३०

अचेतने जडरूपे च। पूर्ववच्चकारः। वस्त्रादौ अचित्स्वभावे पटादौ। सुखादेरपि चिदात्मकस्य तादात्म्येनासंभवो ऽभावः।

---

1—1 In the margin with reference to *āha* of the first hand; first hand *tad api na yuktam ity āha acetanetyādi.*

यतः सत्त्वरजस्तमांस्येव सुखदुःखमोहा उच्यन्ते । ते च गुणा न हि सन्ति । तत्कथं तत्र सुखादयो भवेयुः ॥

अथापि स्यात् । न सुखाद्यात्मकतया पटादयः सुखादिस्वभावा उच्यन्ते । अपि तु सुखादेस्तदुत्पत्तेरित्याशङ्क्याह ।

5 तद्धेत्वित्यादि ।

## तद्धेतुरूपा भावाश्चेन्ननु भावा विचारिताः ।

तस्य सुखादेर्हेतुरूपाः कारणस्वभावा भावा बाह्याः पटादयस्तेऽभिमतं । ननु भावा विचारिताः । नामी पटादय ऽवयविरूपा नापि परमाणुस्वरूपा नापि त्रिगुणात्मकाः । एवं भावा

10 विचारिता निरूपिता युक्तितः प्रतिभासमानानां मायावन्निःस्वभावत्वाच्च । तत्क इमे भावाः सुखादिहेतुरूपा भविष्यन्ति ॥

अपि च । व्यक्तस्य सुखादिस्वभावत्वे पटादय एव सुखादिजन्याः स्युरित्याह । सुखाद्येवेत्यादि ।

## सुखाद्येव च ते हेतुः ।

15 पटस्यापि सुखाद्येव च । ते तव सांख्यस्य । हेतुः स्यात् । व्यक्तस्य सुखाद्यात्मकत्वात् । तथापि

## न च तस्मात्पटादयः ॥ १३१

आदिग्रहणाच्चन्दनमाला[199b]दयः । विपर्ययः पुनरिहोपलभ्यत इत्याह । पटादेस्त्वित्यादि ।

**पटादेस्तु सुखादि स्यात्तदभावात्सुखाद्यसत्।**

पटादेस्तु। आदिशब्दान्मालादेः। पुनः। सुखादि स्यात्। आदिशब्दाद्दुःखादि भवेत्। तदभावात्तेषां पटादीनामभावात्। सुखाद्यसत्। पटादिकार्यत्वात् सुखाद्यपि न स्यादिति तदन्वयव्यतिरेकानुविधानात्सुखादेस्तत्कार्यत्वं॥ सत्त्वादिगुणात्म- 5
कतया यदपि सुखादीनां नित्यत्वमिष्टं। तदपि न सम्यगित्याह। सुखादीनां चेत्यादि।

**सुखादीनां च नित्यत्वं कदा चिन्नोपलभ्यते॥ १४२**

सुखदुःखमोहानां च। चकारो ऽधिकदोषविवक्षायां। 10
नित्यत्वं ध्रुवस्वभावत्वं कदा चिन्नोपलभ्यते न दृश्यते। गुणानामेवासत्त्वात्तेषां नित्यत्वाद्ययोगात्॥ यदि च सुखादीनां नित्यत्वं स्यात्। तदा नित्यमुपलब्धेरित्याह। सत्यामित्यादि।

**सत्यामेव सुखव्यक्तौ संवित्तिः किं न गृह्यते।**

यदि सत्यमवस्थितरूपाः सुखादयः। तथा सर्वदेति सदा 15
तत्संवेदनं स्यात्। तत्स्वभावापरित्यागादिति समुदायार्थः। सत्यामेव सुखव्यक्तौ। एकदा भूतायां सुखव्यक्तौ सुखस्य नित्यत्वे सति। संवित्तिः किं न गृह्यते। सुखस्य संवेदनं सर्वदा किं न स्यात्। न च सर्वदा संवेदनमस्ति। तस्मात्कदाचिदनुपलभ्यमानं तत्तदा नास्तीति निश्चितमिति कथं 20

नित्यत्वं॥ स्यादेतत्। सर्वदा व्यक्तिरूप[त]ायां स्यादेष दोषः। यदा पुनस्तदेव शक्तिरूपतया व्यवगतं भवति। तदा न दोष इत्याह तदेवेत्यादि।

**तदेव सूक्ष्मतां याति स्थूलं सूक्ष्मं च तत्कथं॥ १३३**

5 तदेव व्यक्तावस्थितिं कृत्वा भावसमाश्रयात्। पश्चात्तदु-पसंहारकाले सूक्ष्मतां [200a]याति दिवा नक्षत्राणीवानुपलभ्य-स्वभावतां समाश्रयते। तदेतदसंगतं। कुतः। यस्मात्स्थूलं व्यक्तस्वभावं सत् सूक्ष्मं तत्कथं। अव्यक्तस्वभावं तत्सुखादि कथं। नित्यतया नानास्वभावतैकस्य न युक्तेति भावः॥
10 अथापि स्यात्। एकदा परस्परविरुद्धयोरेकस्मिन्नयोगः। पूर्वधर्मनिवृत्तौ तु धर्मान्तरापत्तेर्न दोष इत्याह। स्थौल्यमित्यादि।

**स्थौल्यं त्यक्त्वा भवेत्सूक्ष्ममनित्ये स्थौल्यसूक्ष्मते।**

स्थौल्यमाविर्भावरूपतां त्यक्त्वा परित्यज्य। भवेत्सूक्ष्मं।
15 तिरोहितरूपं स्यात्। एवमभ्युपगमे सति। अनित्ये स्थौल्य-सूक्ष्मते[1]। उत्पादविनाशशीलत्वादध्रुवे स्थौल्यसूक्ष्मते स्यातां॥ भवतां नामानित्ये का क्षतिरित्याह। सर्वस्येत्यादि।

**सर्वस्य वस्तुनस्तद्वत्किं नानित्यत्वमिष्यते॥ १३४**

सर्वस्य वस्तुनः। पञ्चविंशतितत्त्वलक्षणस्य तद्वत्। स्थौल्य-

1 MS. *sthūlasūkṣmate.*

स्थूलतावत् । किं नानित्यत्वमिष्यते । किमिति निरन्वय-
विनाशो न स्वीक्रियते ॥ अयमभिप्रायः । शौक्ल्यस्थूलतयोरपि
निरन्वयविनाशावदुत्पादमन्तरेण नाविर्भावतिरोभावौ युक्तौ ।
अन्यथा कथं चिरेण चिद्रूपेणावस्थानात् । पूर्ववत्पुनरुपलब्धेः
प्रसङ्गः । तद्वत्सुखादीनामपि । तस्मादवश्यं तयोर्निरन्वयविना- 5
शावदुत्पादौ[1] चाङ्गीकर्तव्यौ । यथा च तयोरेतौ भवतस्तथा-
न्येषामपि विशेषाभावात्स्यातामिति ॥ किं च ! यदि
शौक्ल्यस्थूलतयोर्विनाशोत्पत्ती दृश्येते । तदा सुखादीनामनि-
त्यताप्रसङ्गः स्यात् । तथा हि तच्छौक्ल्यं सुखाद्भिन्नमभिन्नं वा
स्यात् । तत्र यदि भिन्नं तदा तस्मिन्निवृत्तेऽपि पूर्ववत्सुखसंवेदनं
स्यात् । न हि पटे निवृत्तेऽपि घ[200b]टस्यानुपलब्धिर्युक्ता । 10
तस्य तदिति संबन्धकल्पनायामनवस्थानप्रसङ्गात् । न च सत्यपि
संबन्धेऽकारणस्य निवृत्तावन्यस्य निवृत्तिर्युज्यते । गोनिवृत्ता-
विव तत्स्वामिनः । नापि सुखस्य तत्कारणं पटादेरेव सुखोत्पत्तेः ।
नापि तदपि कारणं सुखादिसमानकालत्वात्तस्य ॥ अथाभिन्न-
मिति पक्षः । अत्रोच्यते । 15

न स्थौल्यं चेत्सुखादन्यत् ।

यदि शौक्ल्यं सुखाद्भिन्नं न भवति । तदा सुखात्मक-
मेव तत् । तदा

1 Second hand; °dāv u° ?

**सुखस्यानित्यता स्फुटं।**

तत्स्वभावतया सौख्यस्य निवृत्तौ सुखस्य विनिवृत्तेः सुखस्यानित्यता विनश्वरता स्फुटं निश्चितं॥ स्यादेतत् । यदि सर्वथा विनाशः स्यात्तदा सुखस्य पुनरुत्पत्तिर्न स्यात् । अत्यन्तासतो
5 गगनोत्पलवदुत्पादायोगात् । इति परमतमुपदर्शयन्नाह । नासदित्यादि ।

**नासदुत्पद्यते किं चिदसत्त्वादिति चेन्मतं॥ १३५**

यत्सर्वथा कारणात्मन्यविद्यमानं तन्नोत्पद्यते । यथा गगनाम्भोरुहं । तथा चान्यदपि यदि स्यात् । तदा नोत्पद्यते ।
10 अतो नासदुत्पद्यते किं चित् । नात्यन्तासत्स्वभावमुत्पद्यते किं चित् । कुतः । असत्त्वादभावात् । इति चेन्मतं । एवं यदि संमतं । तदा नैतद्वक्तव्यमित्याह । व्यक्तस्येत्यादि ।

**व्यक्तस्यासत उत्पत्तिरकामस्यापि ते स्थिता।**

व्यक्तस्यासतः । प्राक् प्रधानावस्थायामविद्यमानस्य व्यक्तस्य
15 पश्चादुत्पत्तिरुत्पादः । अनभिलाषिणोऽपि ते तव सदुत्पत्तिवादिनः स्थिता आपन्ना । अन्यथा प्रागपि तस्य सद्भावे पश्चादत् । पूर्वमपि तदुपलब्धिप्रसङ्गः । यथा व्यक्तस्यासत उत्पत्तिस्तथा यद्यन्यस्या[201a]पि स्यात्तदा न विरुध्यते किं चित्॥

अपि च । सत्कार्यवादिनः कारणावस्थायां कार्यसद्भावा-
20 दिदमपि दूषणमपरमापन्नमित्याह । भक्ष्याह इत्यादि ।

अन्नादो ऽमेध्यभक्षः स्यात्।

अन्नमत्तीत्यन्नादो ऽन्नभक्षकः। अमेध्यभक्षः स्यात्। अशुचिभोक्ता भवेत्। कथं।

फलं हेतौ यदि स्थितं॥ १३६

कार्यं यदि कारणे सत्स्वभावं। तथा हि। कार्यममेध्यभक्षस्य तथाभावस्थायामेव सत्कार्यवादिनो विद्यते। इत्यन्नभक्षणात्तद्भक्षणमापद्यते भवतः। किं च। इदमपि सत्कार्यवादिनः प्रसङ्गान्तरमासञ्जयन्नाह। पटार्घेणेत्यादि।

पटार्घेणैव कार्पासबीजं क्रीत्वा निवस्यतां।

फलं हेतौ यदि स्थितमिति संबन्धः। कार्पासबीजे कारणे भविष्यतः पटस्य कार्यस्य सद्भावात्। पटस्यार्घेण मूल्येन कार्पासबीजं क्रीत्वा गृहीत्वा निवस्यतां परिधीयतां॥ अथापि स्यात्। यदि नाम परमार्थतः कारणे कार्यमस्ति। तथापि नायं संवृत्यविद्यातिमिरोपहतलोचनः सांव्यवहारिको लोकः पश्यतीत्याशङ्कयन्नाह। मोहादित्यादि।

मोहाच्चेन्नेक्षते लोकः।

मोहादज्ञानात्। यदपि वस्तुतत्त्वं नेक्षते न पश्यति लोकः। ततो मोहदोषप्रसङ्गः। चेदिति। ननु

तत्त्वज्ञस्यापि सा स्थितिः ॥ १३७

यदि नाम न लोकोऽपश्यंस्तथा व्यवहारं करोति । तत्त्वज्ञस्य तु युज्यते । न चैवं यतस्तत्त्वज्ञस्यापि । कारणे कार्यमस्तीति परमार्थवेदिनोऽपि । सांख्यस्य सा स्थितिः । सैव सर्वसांव्यवहारिकजनसाधारणी व्यवस्थितिः । तेऽपि दृश्यन्ते ऽन्नभक्षणादिषु प्रवर्तमानाः । कर्पासबीजं पटार्थिनः परिहरन्तः ॥ नाप्ययमत्र परिहारो युज्यत इत्याह । लोकस्येत्यादि ।

लोकस्यापि च तज्ज्ञानमस्ति कस्मान्न पश्यति ।

लोकस्य सांव्यवहारिकजनस्यापि तज्ज्ञानमस्ति । येन कार्यं कारणे ऽस्तीति प्रतिपद्यते । न तत्त्वज्ञस्यैव । तथा हि कार्यं दृष्ट्वा कारणे ऽस्तीति निश्चय उभयोरपि तत्त्वज्ञस्य लोकस्य [च] साधारणः । अतो लोकः कस्माद्धेतोर्न पश्यति ॥ तच्च लोकस्यादर्शनकारणमिति वक्तव्यं । लोकस्य दर्शनमप्रमाणमिति चेत् । आह । लोकेत्यादि ।

लोकाप्रमाणतायां चेत् ।

लोकस्य सांव्यवहारिकजनस्याप्रमाणतायां तज्ज्ञानस्याप्रामाण्ये

व्यक्तदर्शनमप्यसत् ॥ १३८

व्यक्तस्याविर्भूतस्वरूपस्य संदर्शनं । तदप्यसत् । अप्रमाणं स्यात् । न तस्माद्वस्तुतत्त्वव्यवस्था प्राप्नोति । एतच्चास्माभिरिष्यत एव । सर्वसांव्यवहारिकप्रमाणानां परमार्थतो ऽप्रमाणत्वात् ।

तथा च भवतो ऽप्यसत्पक्षनिक्षेपः ॥ एवं च परिनिष्ठितः कापिलः सिद्धान्तवादिनो ऽपि साधारणदूषणमाशङ्कयन्नाह । प्रमाणमित्यादि ।

**प्रमाणमप्रमाणं चेन्ननु तत्प्रमितं मृषा ।**

यदि प्रमाणमपि परमार्थतः प्रमाणं न भवतीति भवतां 5 पक्षः । ननु तत्प्रमितं मृषा । प्रमाणस्याप्रामाण्ये तत्प्रमितं तेन प्रमाणेन परिच्छिन्नं मृषा ऽलीकं प्राप्नोति । किमतः स्यात् ।

**तत्त्वतः शून्यता तस्माद्भावानां नोपपद्यते ॥ १३९**

यदि प्रमाणस्याप्रामाण्ये तत्प्रमितं मृषा । तदा येयं भावानां धर्माणां तत्त्वतः परमार्थतः शून्यता । सर्वधर्मनिःस्वभावता 10 तस्मात्प्रमाणान्निश्चिता । सापि नोपपद्यते । न संगच्छते । सर्वप्रमाणोपदर्शितस्य मृषार्थत्वात् । सापि सर्वधर्मनिःस्वभावता तद्विचारकप्रमाणोपदर्शितैवेति समानो न्यायः ॥ अत्र परिहारमाह । कल्पितमित्यादि ।

**कल्पितं भावमस्पृष्ट्वा तदभावो न गृह्यते ।** 15

क[202a]स्मात्कल्पितं समारोपितं भावं धर्ममस्पृष्ट्वा कल्पनाबुद्ध्या ऽगृहीत्वा तदभावो न गृह्यते नालम्ब्यते । तथा हि घटमारोपितरूपेण परिकल्प्य तत्संबन्धितया घटाभावं प्रतिपद्यते लोकः । घटस्य विचारेण लोकप्रसिद्धेनैव यदा न किं चित्स्वरूपमवतिष्ठते । तदा तदभावः । तद्विपर्ययरूपः । 20 सुतरां न कश्चित् । तदेवोपदर्शयन्नाह । तस्मादित्यादि ।

**तस्माद्भावो मृषा यो हि तस्याभावः स्फुटं मृषा ॥ १४०**

यस्मात्कल्पितभावविवेकेनाभावो गृह्यते । तस्माद्भावो मृषा । असत्स्वभावो यः । यस्याभावः स्फुटं मृषा । तस्य निःस्वभावस्य भावस्याभावो विरहः स्फुटं निश्चितं मृषा । असत्यः । तस्यापि परिकल्पितरूपत्वात् । एवं च भावाभावयोः परिकल्पितरूपत्वे सर्वधर्मनिःस्वभावतैवावतिष्ठते । पुनरिदमेवोपसंहारव्याजेन विस्पष्टयन्नाह । तस्मात्स्वप्न इत्यादि ।

**तस्मात्स्वप्ने सुते नष्टे सो नास्तीति विकल्पना ।**

यस्माद्भावाभावौ कल्पनोपस्थापितत्वान्मृषार्थौ । तस्मात्स्वप्ने निद्राक्रान्तचित्तावस्थायां उत्पन्नविनष्टे सुते पुत्रे सति । स पुत्रो नास्तीति [वि]कल्पना । तदभावविकल्पः । किं करोति ।

**तद्भावकल्पनोत्पादं विबध्नाति ।**

तस्य सुतस्य भावः । तस्यास्तित्वं । तस्य कल्पना सत्त्वसमारोपः । तस्योत्पाद उत्थानं । तं निबध्नाति[1] । निषेधयति । तथैव तर्हि वेति चेत् । न ।

**मृषा च सा । १४१**

कल्पना । तद्भावकल्पनां विबध्नात्यपि मृषा । अलीकसुतस्य[2] स्वप्नेऽनुत्पन्नानिरुद्धत्वात् ॥ अथवा सत्याभिमत एव सुते नष्टे

---

[1] Sic. MS.  [2] MS. alikāsutasya.

नष्टे सर्वमेतन्मोऽभिहितं ॥ एवं सर्वधर्माणामुत्पादनिरोधौ कल्पनोपदर्शितौ द्रष्टव्यौ ॥

एतदुक्तं भवति। यथा स्वप्नोपलब्धस्य वस्तुनोऽनुत्पन्नानिरुद्धस्यापि [202b] कल्पनोपदर्शितौ भावाभावौ न परमार्थसन्तौ। अथ च कल्पनया व्यवहारगोचरमुपगतौ प्रतिभासः। 5
न च सा कल्पनाऽसत्यार्थविषयतयाप्रमाणं। तद्विषयस्य परमार्थतो निःस्वभावत्वात्। तथैव जाग्रद्दशायामुपलब्धयोरपि भावाभावयोर्व्यवहारपथमुपगतयो[:] कल्पनाप्रतिपादितयोर्व्यवस्था। इति तस्या अप्रामाण्येऽपि न सर्वधर्मनिःस्वभावता विघटते। यदाह [नागार्जुनचतुःस्तवे]। 10

उत्पन्नस्य स्थितो नष्ट उक्तो लोको ऽर्थतस्त्वया।
कल्पनामात्रमित्यस्मात्सर्वधर्माः प्रकाशिताः।
कल्पनाप्यसती प्रोक्ता यया शून्यं विकल्प्यते ॥

इति सर्वं समञ्जसं ॥ एवमहेतुभूतस्वभावेश्वरप्रधानकर्तृत्वं[1] जगतो निराकृत्य नाप्यहेतुत[2] इत्यस्यार्थं प्रसाध्योपसंहरन्नाह। 15
तस्मादेवमित्यादि।

## तस्मादेवं विचारेण नास्ति किंचिदहेतुतः।

यतः स्वभावादिसंभूतं न किंचित्कार्यमुपपद्यते। तस्मादेवं विचारेण यथानन्तरनिरूपणेन नास्ति किंचिदहेतुतः।

---

[1] Second hand °sam evamamahetu°; first hand °saṃ visamahetu bhūta°.— Perhaps viṣama, see Madhyamakavṛtti, p. 10, l. 11.

[2] See above ix, 116 ad finem.

स्वभावादेरहेतुतो ऽकारणाज्जातं किं चित्कार्यं नास्ति न विद्यते । उपलक्षणं चैतत् । पुरुषकालादिकृतत्वमपि नास्ति । तेषामप्यहेतुत्वात् । अतो नाप्यहेतुत इति सिद्धं ॥ ननु यदि नाम स्वभावेश्वरप्रधानादेरहेतुतो न किंचिदस्ति । तथापि
5 परिदृष्टकारणादेव परमार्थत उत्पद्यते । तत्कथं सर्वधर्माणां निःस्वभावता चेत्स्यादिति पराशयमाशङ्क्य ।

न स्वतो नापि परतो न द्वाभ्यां ।

इति कोटित्रयं समर्थयन्नाह । न च व्यस्तेत्यादि ।

न च व्यस्तसमस्तेषु प्रत्ययेषु व्यवस्थितं ॥ १४२

10 न च नैव व्यस्तसमस्तेष्विति व्यस्तेषु समस्तेषु च । तत्र न च व्यस्तेषु । एकैकशः स्वतः परतश्चेति । नापि समस्तेषु । द्वाभ्यां स्वप[ 203a ]राभ्यां । प्रत्ययेषु कारणेषु । व्यवस्थितं उत्पादरूपतया प्रतिष्ठितं किंचित् ॥

तत्र न तावत्स्वतः स्वभावाद्भावा[1] उत्पद्यन्ते । उत्पादात्पूर्वं
15 तस्य स्वभावस्याविद्यमानत्वात् । कुत उत्पद्यन्तां । उत्पन्ने च तस्मिन् सत्यपि स्वरूपे तस्यापि निष्पन्नत्वात् किमुत्पद्यन्तां[2] । अपि च । स्वत एव जन्मनि जातस्यैव पुनर्जन्म स्यात् । न च तद्युक्तं । कृतस्य करणायोगात् । जातस्य पुनर्जन्मनि बीजादीनामेवासंसारं प्रसृतेर्नाङ्कुरादयः कदा चिदुत्पत्तुमवसरं लभेरन् ।

---

[1] MS. *svato svabhâvâ utpadyante.*
[2] MS. *utpadyatâm.*

न चैतदभ्युपगच्छतो ऽपि लोकत एव बाधामनुभवतिसिद्धिरुपयं-
मुपयाति । बीजादेरङ्कुराद्युत्पत्तिदर्शनात् । न च बीजाङ्कु-
रयोरैक्यं । उभयोरपि भिन्नरूपरसवीर्यविपाकत्वात्[1] । स्वभ-
भावजन्यत्वे च कस्य चिदुत्पत्तिरेव न स्यात् । इतरेतराश्रयत्वात् ।
तथा हि यावत्स्वभावो न भवति तावदुत्पत्तिर्न स्यात् । 5
यावच्चोत्पत्तिर्न भवति तावत्स्वभावो न स्यात् । इतरेतराश्रयत्वं ।
तस्मान्न स्वतः किं चिदुत्पद्यते ॥

नापि परतः । परतो हि जन्मनीष्यमाणे शालिबीजादपि
कोद्रवाङ्कुरस्योत्पत्तिप्रसङ्गः । शालिकोद्रवयोरपि च कोद्रवाङ्कु-
रापेक्षया परत्वमविशिष्टं । सर्वस्य वा जन्म सर्वतो भवेत् । 10
सर्वेषां परस्परं परत्वाविशेषात् ॥ अथ यदि नाम परत्वमवि-
शिष्टं । तथापि कार्यकारणयोरन्योन्यजन्यजनकभावस्य नियाम-
कत्वान्न सर्वस्योत्पत्तिरिति चेत् । न । अनुत्पन्ने हि कार्ये ।
कस्मिन्[2] पुनरस्य शक्तिरिति वक्तव्यं । उत्पन्ने च कार्ये
कारणस्याभावात्कस्य शक्तिरिति वक्तव्यं । [203b] न च 15
कार्यकारणयोरसमानकालतया जन्यजनकभावप्रतिनियमो ऽपि
कश्चित् ॥ अत एवैकसंततिप्रतिनियमो ऽपि न युक्तः ।
कार्यकारणमन्तरेण संततेरभावात् । तस्य चैकक्षणानवस्थानात् ।
केयं संततिर्नाम । पूर्वापरक्षणप्रवाहस्य च कल्पनासमारोपितत्वात् ।
नास्ति संततिर्वास्तवी । एतेन सादृश्यमपि नियामकमिह निरस्तं । 20

---

[1] Compare Sarvadarçana, p. 16, l. 22.

[2] First hand *kasya*; second hand *kasmi*.

इति न किं चित्केन चिदेकसंततिपतितं सदृशं वा अन्यजनकभावनियतं वास्ति । अन्यजनकभावस्यैव चात्र चिन्त्यत्वात् । कथं तेनैव परिहारः । तस्मात्परतो ऽपि न कस्य चित्संभवः ॥

नापि द्वाभ्यां प्रत्येकपक्षोक्तसर्वदोषप्रसङ्गात् । प्रत्येकं च 5 द्वयोरशक्तयोर्मिलितयोरप्यसमर्थत्वात् । न ह्येकेनान्धेनादृष्टमार्गो बहुभिरपि द्रष्टुं शक्यते । प्रत्येकं वा सिकतास्तैलदानासमर्था मिलिता ऽपि तत्समर्था भवन्ति । तस्मादुभयपक्षप्रतिपादितदोषप्रसङ्गात् । द्वाभ्यामपि न कस्य चिदुत्पत्तिसंभवः ॥

इति स्वपरो[भ]यजनितमहेतुजनितं वा तत्त्वतो न किं 10 चिदस्ति । तस्मात्परमार्थतोऽनुत्पन्नानिरुद्धस्वभावं मायमरीचिप्रतिबिम्बप्रति[श्रुत्का]समं[1] प्रतीत्यसमुत्पन्नं स्वभावशून्यमेव सर्वं विश्वमाभासते ॥ न तु पुनरिदं प्रत्ययतामात्रं सांवृतमिह निषिध्यते । यदुक्तमत्र भगवता शालिस्तम्बसूत्रे । तत्र कथं प्रतीत्यसमुत्पादं पश्यति । इहोक्तं भगवता । [2]य इमं प्रतीत्य15 समुत्पादं सततसमितं निर्जीवं यथावदविपरीतमजीवमजातमभूतमकृतमसंस्कृतमप्रतिघमनालम्बनं शिवमभयमनाहार्यमव्ययमव्युपशमस्वभावं पश्यति । स धर्मं प [204a]श्यति । यस्तु । एवं सततसमितं निर्जीवमित्यादि पूर्ववत् । यावदव्युपशमस्वभावं पश्यति । सोऽनुत्तरधर्मशरीरं बुद्धं पश्यति । आर्यधर्माभिसमये

[1] Ex conjectura
[2] See above ix 15.
[3] MS. -amyak

[illegible]pradipa, Vol. I, Fasc. [illegible]; Vol. II, Fasc. 1-[illegible] @ /10/ each Rs. [illegible]
Nyāyabinduṭīkā, Fasc. 1 @ /10/ each ... [illegible]
*Nyāya Kusumāñjali Prakaraṇa, Vol. II, Fasc. 1-3 @ /10/ each ... 1
Nyayasarah ... ... ... ... 2
Padumâwati, Fasc. 1-6 @ 2/ each ... ... ... 12
Prâkrita-Paingalam, Fasc. 1-7 @ /10/ each ... ... ... 4
Prākṛta Lakṣaṇam, Fasc. 1 @ /1/8 each ... ... ... 1
Parāçara Smṛti, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... ... 12
Parāçara, Institutes of (English) @ 1/- each ... ... ... 1
Parikṣamukha Sutram ... ... ... ... 1
Prabandhacintāmaṇi (English) Fasc. 1-8 @ 1/4/ each ... ... 8
Rasarnavam, Fasc. 1-3 ... ... ... ... ... 3
Ravisiddhanta Manjari, Fasc. 1 ... ... ... ... 0
Saddarśana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... 1
Samaraicca Kaha, Fasc. 1-4, @ /10/ each ... ... ... 2
Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... 2
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 3
Six Buddhist Nyaya Tracts ... ... ... ... 0
Srāddha Kriyā Kaumudi, Fasc. 1-6 @ /10/ each ... ... 3
Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... 1
Suddhi Kaumudi, Fasc. 1-4 @ /10/ each ... ... ... 2
Sundaranandam Kavyam ... ... ... ... 1
Suryya Siddhanta, Fasc. 1-2 @ 1-4 each ... ... ... 2
Syainika Sastra ... ... ... ... ... 1
*Taittreya Brahmana, Fasc., 11-25 @ /10/ each ... ... 9
*Taittiriya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... 11
*Tāṇḍya Brāhmaṇa, Fasc. 10-19 @ /10/ each ... ... 6
Tantra Vārtika (English) Fasc. 1-10 @ /1/4 ... ... ... 12
Tattva Cintāmaṇi, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-10; Vol. III, Fasc. 1-2; Vol. IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... 24
Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-4; Vol. II, Fasc. 1, @ /10/ each ... ... ... ... ... 3
Tattva Cintamani Didhiti Prakas, Fasc. 1-4, @ /10/ each ... ... 2
Tattvārthādhigama Sutram, Fasc. 1-3 @ /10/ ... ... 1
Tirthacintamoni, Fasc. 1-3, @ /10/ each ... ... ... 1
Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ ... ... ... 1
Tul'si Satsai, Fasc. 1-5 @ /10/ ... ... ... ... 3
*Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each ... 6
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- ... ... 6
Vallāla Carita, Fasc. 1 @ /10/ ... ... ... ... 0
Varṇa Kriyā Kaumudi, Fasc. 1-6 @ /10/ ... ... ... 3
*Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7; @ /10/ each ... 6
Vidhāna Pārijāta, Fasc. 1-8; Vol. II, Fasc. 1 @ /10/ ... ... 5
Ditto Vol. II, Fasc. 2-4, @ 1/4 ... ... 3
Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... 4
Vṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ ... ... ... 3
Yogaśāstra, Fasc. 1-3 ... ... ... ... ... 3

## *Tibetan Series.*

Amarakosah ... ... ... ... ... 2
Bauddhastotrasangraha, Vol. I ... ... ... ... 2
A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, @ 1/- each ... 4
Nyayabindu of Dharmakirti, Fasc. 1 ... ... ... 1
Pag-Sam S'hi Tin, Fasc. 1-4 @ 1/- each ... ... ... 4
Rtogs brjod dpag hkhri S'iṅ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9 @ 1/- each ... ... ... 18
Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... 14

## *Arabic and Persian Series.*

Al-Muqaddasi (English) Vol. I, Fasc. 1-4 @ 1/- ... ... 4
Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each ... ... ... 33
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, Index to Vol. II, @ 2/- each ... ... 36
Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each ... ... 55
[illegible]

| Title | Rs. | As. |
|---|---|---|
| Catalogue of the Persian Books and Manuscripts in [illegible] the Asiatic Society of Bengal, Fasc. 1-3 @ 1/- each ... Rs. | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each ... ... ... ... | 31 | 8 |
| Faras Nama, Fasc. 2 ... ... ... ... | 1 | 0 |
| Farnang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... | 21 | 0 |
| Fihrist-i-Tusi, or Tūsy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Hadiqatu'L, Haqiqat, (Text & Eng.) ... ... | 3 | 8 |
| History of Gujarat ... ... ... ... | 1 | 0 |
| Haft Āsmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... | 7 | 8 |
| Iqālnamah-i-Jahāngiri, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Iṣābah, with Supplement, 51 Fasc. @ 1/- each ... ... | 51 | 0 |
| Ma'āsir-i-Rahimi, Part I, Fasc. 1-2 @ 2 each ... ... ... | 4 | 0 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... | 35 | 0 |
| Ditto (Eng.) Vol. I, Fasc. 1-2, @ 1/4/ each ... | 2 | 8 |
| Marhamu 'L-Ilali 'L-Mu'Dila, Fasc. 1-2 ... ... ... | 2 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-15 @ 10/ each ... ... | 9 | 6 |
| Ditto (English), Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/- each ... ... ... ... | 16 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each... ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1-2 @ 1/- each ... ... | 2 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... | 0 | 10 |
| Nisāmi's Khiradnāmah-i-Iskandari, Fasc. 1-2 @ /12 each ... | 1 | 8 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan ... | 1 | 0 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut.-Col. D. C. Phillott ... | 5 | 0 |
| Riyāzu-s-Salātīn, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-5 @ 1/- ... ... ... | 5 | 0 |
| Tadhkira-i-Khushnavisān ... ... ... ... | 1 | 0 |
| Tubaquat-i-Nasiri (English), Fasc. 1-14 @ 1/- each ... ... | 14 | 0 |
| Ditto Index ... ... ... ... | 1 | 0 |
| Tārikh-i-Firūz Shāhi of Ẓiyāu-d-dīn Barni, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Tārikh-i-Firūzshāhi, of Shams-i-Sirāj Aif, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| The Mabani 'L Lughat: A Grammar of the Turki Language in Persian | 1 | 8 |
| Tuzuk-i-Jahāngiri (Eng.) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Wis o Rāmin, Fasc. 1-5 @ /10/ each ... ... .. | 3 | 2 |
| Ẓafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... | 10 | 10 |

---

## ASIATIC SOCIETY'S PUBLICATIONS.

| Title | Rs. | As. |
|---|---|---|
| Asiatic Researches. Vols. XIX and XX @ 10/- each ... ... | 20 | 0 |
| Proceedings of the Asiatic Society from 1875 to 1904 @ /8/ per No. | | |
| Journal of the Asiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/- per No. to Non-Members. | | |

*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

| Title | Rs. | As. |
|---|---|---|
| Journal and Proceedings, N.S., 1905, to date (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members. | | |
| Memoirs, 1905, to date. Price varies from number to number. Discount of 25°/。 to Members. | | |
| Centenary Review of the Researches of the Society from 1784-1883 | 3 | 0 |
| Catalogue of the Library of the Asiatic Society, Bengal, 1910 ... | 3 | 0 |
| Moore and Hewitson's *Descriptions of New Indian Lepidoptera*, Parts I-III, with 8 coloured Plates, 4to, @ 6/- each ... ... | 18 | 0 |
| Kaçmiraçabdāmṛta, Parts I and II @ 1/8/ ... ... ... | 3 | 0 |
| Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. ... | 10 | 0 |

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1399.

# बोधिचर्यावतार पंजिका।

# PRAJÑĀKARAMATI'S COMMENTARY

TO THE

# BODHICARYĀVATĀRA OF ÇĀNTIDEVA,

AN INTRODUCTORY TREATISE ON THE DUTIES OF A BUDDHIST.




EDITED WITH INDICES
BY
LOUIS DE LA VALEE POUSSIN,
*Professor of Sanskrit in the University of Ghent.*

FASCICULUS VII.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE

Catalogue of the Persian Books and Manuscripts in [illegible] the Asiatic Society of Bengal, Fasc. 1-3 @ 1/ each ... Rs. 3

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

---

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... | 14 | 0 |
| Aitareyalocana ... ... ... ... ... | 2 | 0 |
| Amarakosha, Fasc. 1-2 ... .. ... ... ... | 4 | 0 |
| Anumana Didhiti Prasarini, Fasc. 1-3 @ /10/ ... ... ... | 1 | 14 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1 6 @ /10/ each ... | 3 | 12 |
| Ātmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-11. Vol. II, Fasc. 1-11 @ 1/ each .. ... ... ... | 22 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhāyana Srauta Sūtra, Fasc. 1-3; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1, @ /10/ each ... ... ... ... ... | 5 | 10 |
| Bhasavritty ... ... ... ... ... | 0 | 10 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-2 @ /10/ each ... | 5 | 0 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Bṛhaddevatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Çri Çantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-7; Vol. V, Fasc. 1-4 @ /10/ each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... | 3 | 2 |
| Ditto Vol. IX, Fasc. 1-2 ... ... ... | 1 | 4 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-18 @ /10/ each ... | 11 | 4 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 @ /10/ each | 36 | 14 |
| Ditto Vol. IV, Fasc. 7, @ 1/4/ each ... | 1 | 4 |
| Ditto Vol. IV, Fasc. 8-10 @ /10/ ... ... | 1 | 14 |
| Çlokavartika (English), Fasc. 1-7 @ 1/4/ each ... | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. 4, Fasc. 1 @ /10/ each ... | 10 | 0 |
| Çri Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1-4 ... ... ... | 3 | 3 |
| Gobhilīya Gṛhya Sūtra, Vol. I, @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2 @ 1/4 /each ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Gobhiliya Gṛhya Sūtra, Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. 1 ... | 1 | 4 |

सम्यग्ज्ञानादपनयेनैव ॥[1] प्रतीत्यसमुत्पाद इति कस्मादुच्यते।
सहेतुकः सप्रत्ययो नाहेतुको नाप्रत्यय इत्युच्यते। पेयालं।
अथ च पुनरयं प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यामुत्पद्यते।
कतमाभ्यां द्वाभ्यां कारणाभ्यामुत्पद्यते। हेतूपनिबन्धतः प्रत्य-
योपनिबन्धतश्च। सोऽपि द्विविधो द्रष्टव्यः। बाह्यश्चाध्यात्मि- 5
कश्च। तत्र बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः।
यदिदं बीजादङ्कुरः। अङ्कुरात्पत्त्रं। पत्त्रात्काण्डं। काण्डा-
न्नालं। नालाद्गण्डः[2]। गण्डाद्गर्भं। गर्भाच्छूकः। शूकात्पुष्पं।
पुष्पात्फलमिति। असति बीजेऽङ्कुरो न भवति। यावदसति
पुष्पे फलं न भवति। सति तु बीजेऽङ्कुरस्याभिनिर्वृत्तिर्भवति। 10
एवं यावत्सति पुष्पे फलस्याभिनिर्वृत्तिर्भवति ॥ तत्र बीजस्य नैवं
भवति। अहमङ्कुरमभिनिर्वर्तयामीति। अङ्कुरस्यापि नैवं
भवति। अहं बीजेनाभिनिर्वर्तित इति। एवं यावत्पुष्पस्य
नैवं भवति। अहं फलमभिनिर्वर्तयामीति[3]। फलस्यापि नैवं
भवति। अहं बीजेनाभिनिर्वर्तितमिति। अथ पुनर्बीजे सति 15
अङ्कुरस्याभिनिर्वृत्तिर्भवति। प्रादुर्भावः। एवं यावत्पुष्पे सति
फलस्याभिनिर्वृत्तिर्भवति। प्रादुर्भावः। एवं बाह्यस्य प्रतीत्य-
समुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः ॥

---

[1] Interpunction from Tibetan.—See our forthcoming edition of the Çālistambasūtra in Bibliotheca Buddhica.

[2] See Wogihara, on Bodhisattvabhūmi (Leipzig, 1908), who refers to Divya, 100, l. 16, 210, l. 24.

[3] MS. *phalam nirvartayāmiti.*

कथं बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः । षण्णां धातूनां समवायात् । कतमेषां षण्णां [204b] धातूनां समवायात् । यदिदं पृथिव्यप्तेजोवाय्वाकाशर्तुसमवायात् । बाह्यस्य प्रतीत्यसमुत्पादस्य [प्रत्ययोप]निबन्धो द्रष्टव्यः । तत्र 5 पृथिवीधातुर्बीजस्य संधारणकृत्यं करोति । अब्धातुर्बीजं स्नेहयति । तेजोधातुर्बीजं परिपाचयति । वायुधातुर्बीजमभिनिर्हरति । आकाशधातुर्बीजस्यानावरणकृत्यं करोति । ऋतुरपि बीजस्य परिणामनाकृत्यं करोति । असत्स्वेषु प्रत्ययेषु बीजादङ्कुरस्य[ाभि]निर्वृत्तिर्न भवति । यदा बाह्यश्च पृथिवीधातु- 10 रविकलो भवति । एवमप्तेजोवाय्वाकाशर्तुधातवश्चाविकला भवन्ति । ततः सर्वेषां समवायात् । बीजे निरुध्यमानेऽङ्कुरस्याभिनिर्वृत्तिर्भवति ॥ तत्र पृथिवीधातोर्नैवं भवति । अहं बीजस्य [सं]धारण[ा]कृत्यं करोमीति । एवं यावदृतोरपि नैवं भवति । अहं बीजस्य परिणामनाकृत्यं करोमीति । अङ्कुर- 15 स्यापि नैवं भवति । अहमेभिः प्रत्ययैर्जनित इति । अथ पुनः सत्स्वेतेषु बीजे निरुध्यमानेऽङ्कुरस्याभिनिर्वृत्तिर्भवति । स चायमङ्कुरो न स्वयंकृतो [न परकृतो] नोभयकृतो नेश्वरनिर्मितो न कालपरिणामितो न प्रकृतिसंभूतो न चैककारणाधीनो नाप्यहेतुसमुत्पन्नः । पृथिव्यप्तेजोवाय्वाकाशर्तुसमवायात् । बीजे 20 निरुध्यमानेऽङ्कुरस्याभिनिर्वृत्तिर्भवति । एवं बाह्यस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः ॥

तत्र [बाह्यः प्रतीत्य]समुत्पादः पञ्चभिः कारणैर्द्रष्टव्यः ।

कतमैः पञ्चभिः। न शाश्वततो नोच्छेदतो न संक्रान्तितः। परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः[1]। तत्सदृशानु[प्र]बन्धत- [205a ]श्चेति॥ कथं न शाश्वतत इति। यस्मादन्यो ऽङ्कुरो ऽन्यद्बीजं। न च यदेव बीजं स एवाङ्कुरः। अथ च पुनर्बीजं निरुध्यते। अङ्कुरश्चोत्पद्यते। अतो न शाश्वततः॥ कथं 5 नोच्छेदतः। न च पूर्वनिरुद्धाद्बीजादङ्कुरो निष्पद्यते। नाप्य- निरुद्धाद्बीजात्। अपि च। बीजं च निरुध्यते। तस्मिन्नेव समयेऽङ्कुर उत्पद्यते। तुलादण्डोन्नामावनामवत्। अतो नोच्छेदतः॥ कथं न संक्रान्तितः। विसदृशो बीजादङ्कुर इति। अतो न संक्रान्तितः॥ कथं परीत्तहेतुतो विपुलफलाभिनि- 10 र्वृत्तितः। परीत्तबीजमुप्यते विपुलफला[न्य]भिनिर्वर्तयतीति। अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः॥ कथं तत्सदृशा- नुप्रबन्धतः। यादृशं बीजमुप्यते तादृशं फलमभिनिर्वर्तयतीति। अतस्तत्सदृशानुप्रबन्धतश्चेति॥ एवं बाह्य[:] प्रतीत्यसमुत्पादः पञ्चभिः कारणैर्द्रष्टव्यः॥ 15

आध्यात्मिकस्तु प्रतीत्यसमुत्पादः पूर्वमेव विस्तरेण प्रति- पादितः[2]। इहापि योजयितव्यः॥

एवं परमार्थविचारे सांवृतमप्रतिषिद्धमेव॥

ननु भावा नात्यन्तासंभविनो भवन्ति। अपि तु हेतु- प्रत्ययवशादनागतादध्वनो वर्तमानमध्वानमागच्छन्ति। वर्त- 20

---

1 MS. *hetuphala*.

2 See p. 386.

मानात्पुनरनित्यतावशादतीतमध्वानं गच्छतीत्येवमुत्पादस्थि-
तिविनाशव्यपदेशः[1] । प्रतीत्यसमुत्पादोऽपि यथावदेवं संग-
च्छते । इति त्रैकाल्यवादिमतमाशङ्क्याह । अन्यत इत्यादि ।

**अन्यतो नापि चायातं न तिष्ठति न गच्छति ।**

5 अन्यतो देशकालादायातं । नागतं किं चित् । नाप्यागतं
वर्तमानादध्वनः क चिद्गच्छति । नापि तेनैकस्वभावेन क चि-
त्तिष्ठति ॥ तथा हि यद्यनागताद[205b]ध्वनो वर्तमानमा-
गच्छेत् । वर्तमानाद्वातीतं तदा संस्कृतमपि नित्यं स्यात् ।
सर्वदा विद्यमानत्वात् । नानित्यं नामास्ति । स धर्मो न च
10 नित्य इति कथमेतत्सेत्स्यति ॥

अथ पूर्वापरकालयोः कारित्रशून्यतया धर्मस्याध्वसु
विशेषः । तथा हि यदासंप्राप्तकारित्रः । कार्यं[2] न करोति ।
तदाऽनागतोऽभिधीयते । यदा करोति तदा प्रत्युत्पन्नः ।
यदा तु कार्यान्निवृत्तः । तदाऽतीत इति विशेषः ॥ एतदपि
15 न किं चित् । तेनैवात्मना तस्यैव तदापि सद्भावात् । कारि-
त्रमपि कथं न स्यात् । इति वक्तव्यं । प्रत्ययान्तरापेक्षापि
नित्यमवस्थितरूपस्य न संभवति । कारित्रशून्यस्य च वस्तुत्वे-
ऽश्वविषाणादीनामपि तत्त्वप्रसङ्गः । कारित्रं वा कथमतीत-

---

[1] See the texts quoted Madhyamakavṛtti, p. 145, on the *lakṣaṇas* of the *saṁskṛta*.

[2] MS. kāritram—That may be right. According to Abhidharmakoça the *kāritra* of the eye is *darçana*.

मनागतं प्रत्युत्पन्नं चोच्यते। किं तदपरकारित्रसद्भावात्। स्वयमेव वा [।] पूर्वचानवस्थानं। पश्चात्त्वे च धर्मस्यापि स्वयमतीतत्वादिव्यवस्थायां न किं चित्प्रयुयते॥ यदि च। यथा वर्तमानं द्रव्यतोऽस्ति तथातीतमनागतं चास्ति। तदा नैवं। स्वभावेन सतो धर्मस्य कथमनुत्पन्नविनष्टस्वभावता। किमस्य 5 पूर्वं नासीद्यस्याभावादजात इत्युच्यते। किं च पश्चान्नास्ति यस्याभावाद्विनष्ट इति। तेनैव चात्मना पूर्वापरकालयोरवस्थाने वर्तमानवदुपलब्ध्यादिप्रसङ्गः। तस्माद्भूतत्वाद्भवनधर्मतो न संगच्छते कथं चिदप्यध्वत्रययोगः॥ तत्त्वाभ्युपग[च्छ]तो नातीतादिसद्भावः। तदयमत्र संग्रहश्लोकः। 10

स्वभावः सर्वदा चास्ति भावो नित्यश्च नेष्यते।

न च स्वभावाद्भावो [206a] ऽन्यो व्यक्तमीश्वरचेष्टितं॥ इति।

यदप्युच्यते। अस्त्यतीतं कर्म। अस्त्यनागतं फलमिति सूत्रवचनात्। अस्त्यतीतादिभावः। तदपि हेतुफलापवादे तद्दृष्टिप्रतिषेधार्थमुक्तं भगवता। अस्त्यतीतं अस्त्यनागतमिति॥ अतीतं 15 तु यद्भूतपूर्वमुत्पद्य विनष्टं। अनागतं यत्सति हेतौ भविष्यति। एवं हि हेत्वाद्यस्तीत्युच्यते। अस्तिशब्दस्य निपातत्वात्। कालत्रयसद्भावे कल्पितं। इत्थं चैतदेवं यत्परमार्थशून्यतायामुक्तं भग-

[1] So MS.

[2] Quoted with a commentary in Abhidharmakoçavyākhyā, Société Asiatique, fol. 360.

वता। चक्षुर्भिक्षव उत्पद्यमानं न कुतश्चिदागच्छति। निरुध्य-
मानं न क्व चित्संनिचयं गच्छति। इति हि भिक्षवः चक्षुरभूत्वा
भवति। भूत्वा च प्रतिविगच्छतीति[1]॥ यदि चानागतं चक्षुः
स्यात्। नोक्तं स्यादभूत्वा भवतीति। तस्मात्त्र्यध्वसंक्रान्तिरस्ति॥
5 यदि चैवं न कुतश्चिदागमनं [क्व चिद्] गमनं वा प्रज्ञायते।
प्रतिभासमानस्य च प्रत्युत्पन्नस्य न रूपं किं चिद्विचारेणाव-
तिष्ठते। तदा

**मायातः को विशेषोऽस्य यन्मूढैः सत्यतः कृतं॥१४३**

मायात ऐन्द्रजालिकनिर्मितहस्त्यादिरूपाया अपि निःस्व-
10 भावतया विशेषो नैव कश्चित्। अस्य हेतुप्रत्ययोपजनितस्य
वस्तुरूपस्य परिदृश्यमानस्य॥ कथं न विशेषः। पुनरिदमेव
व्यक्तीकुर्वन्नाह। माययेत्यादि।

**मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितं।**
**आयाति तत्कुतः कुत्र याति चेति निरूप्यतां॥१४४**

15 मायाशब्देनात्र मायानिर्माणहेतुविज्ञानादिविशेष उच्यते।
कारणे कार्योप[चा]रात्। हेतोरपि मायास्वभावताप्रतिपाद-
नार्थं। तया निर्मितं यच्च। वस्तुरूपं मयाहेतुना मायास्वभा-
वेन यद्विरचितमिति यावत्। यच्चान्यद्वस्तुरूपं हेतुभिः।

---

[1] Quoted Abhidharmakoça, fol. 362—On *abhūtvā bhāva*, see Milinda, p. 52 (Walleser, Grundlage, 126), Madhyamakavṛtti, p. 263, and xxi, 4, xxvii, 12.—Texts supporting the existence of the *atīta*, see Digha, ix, 49.

लोकप्रसि[206b]द्धैः कारणैर्निर्मितं जनितं। परस्परसमुच्चयार्थं चकारद्वयं। आयात्यागच्छति तन्मायानिर्मितं[1] हेतुनिर्मितं वा वस्तुरूपं कुतः। कस्मात्। कुत्र याति च। विनष्टं सत्क पुनरेतद्गच्छति। इत्येवं निरूप्यतां। सूक्ष्मेक्षिकया विचार्यतां। यदि तस्य कुतश्चिदागच्छति। क्व चिद्गच्छति वोपलभ्यते॥　5

ननु च यदि हेतुप्रत्ययसामर्थ्योपजनितं वस्तुरूपं तदा कथमिवालीकं स्यात्। अत एवालीकमित्याह। यदन्येत्यादि।

**यदन्यसंनिधानेन दृष्टं न तदभावतः।**
**प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथं॥ १४५**

यद्वस्तुरूपमन्यस्य हेतुप्रत्ययस्य संनिधानेन दृष्टमुपलब्धं। न　10
तदभावतः तस्यान्यस्याभावतो न दृष्टं। तत्पराधीनवृत्तित्वात्। प्रतिबिम्बसमे प्रतिबिम्बेन आदर्शमण्डलप्रतिभासिना मुखादिसादृश्येन तुल्ये। यथा मुखादिबिम्बादर्शमण्डलादिसंनिधाने[न] प्रतिबिम्बं प्रतिभातेस। तदभावे न प्रतिभासते। तथा वस्तुरूपमपि हेतुप्रत्ययसंनिधानासंनिधानयोरिति। एवंभूते वस्तुरूपे　15
कृत्रिमे परायत्तवृत्तितयाऽस्वाभाविके सत्यताऽव्यभिचारिता कुतो। नैव युज्यते। न हि परोपनिधिस्वभावानामकृत्रिमता युक्ता। तदुक्तं।

हेतुतः संभवो येषां तदभावान्न सन्ति ये।
कथं नाम न ते स्पष्टं प्रतिबिम्बसमा मताः॥ इति।[2]

---

1 MS. *tasmān māyā°*.

2 See Madhyamakavṛtti, p. 413.

तस्मान्न हेतुप्रत्ययोपजनितं किंचित्परमार्थसदस्ति । न च हेतुप्रत्ययानां सामर्थ्यं कचिदपि परमार्थतः संभवति ॥ तथा हि स्वपरोभयात्मकैर्हेतुभिर्विद्यमानो वा भावः क्रियेताविद्यमानो वा । उभयस्वभावो वा । तत्र न विद्यमानः क्रियत
5 इत्याह । विद्यमानेत्यादि[1] ।

## विद्यमानस्य भावस्य हेतुना किं प्रयोजनं ।

वि[207a]द्यमानस्य कारणव्यापारात्प्रागेव सत्स्वभावस्य हेतुना कारणेन किं प्रयोजनं । कार्यस्य निष्पन्नात्मकतया निर्वर्त्यस्वभावाभावाद्धेतुव्यापारस्यानुपयोगात् ॥ द्वितीयं विकल्पमधि-
10 कृत्याह । अथापीत्यादि ।

## अथाप्यविद्यमानोऽसौ हेतुना किं प्रयोजनं ॥ १४६

अथापीति प्रकारान्तरद्योतनेऽविद्यमानोऽसौ न सत्स्वभावः । तर्हि हेतुना किं प्रयोजनं । तदापि न हेतुना किमपि प्रयोजनमस्ति । तथाप्यसत्स्वभावत्वात् । हेतुव्यापाराभावात् ॥
15 स्यादेतद्यदि नाम विद्यमानस्य निष्पन्नत्वात् । कर्तव्याभावान्न हेतुना किमपि प्रयोजनं । अविद्यमानस्य तु किं न भवतीत्याह । नाभावस्येत्यादि ।

## नाभावस्य विकारोऽस्ति हेतुकोटिशतैरपि ।

नाभावस्याविद्यमानस्वभावस्य विकारोऽस्ति । अन्यथात्वं

[1] So MS.

भावस्वभावताऽस्ति। नीरूपतया तस्यापि कर्तव्याभावात्। हेतुकोटिगतेरपि। आस्तां तावद्धेतुगतेर्हेतुसहचैर्हेतूनां कोटिगतेरपि। तस्य निःस्वभावतया केन चिदपि विकारयितुमशक्यत्वात्॥ मा भवतु विकारो भावस्वभावता केवलमस्यास्तु चेदथाह। तदवस्थ इति। 5

तदवस्थः कथं भावः।

तदवस्थोऽपरित्यक्ताभावस्वभावः। नैव भावः स्यात्। नाभाव एव भावो भवति। केवलमभावस्वभावतानिवृत्तौ भावस्वभावो भवति। अथाह।

को वान्यो भावतां गतः॥ १४७ 10

यदि न प्रागभावो भावस्वभावो भवति। को वा तर्हि। अभावादन्योऽपरो भावतां। अभावस्वभावतां परित्यज्य। भावरूपतां गतः। नान्यः कश्चित्प्रतीयते। कारणस्य कार्यस्वभावतायाः पूर्वमेव प्रतिषिद्धत्वात्॥ स्यादेतत्। नान्यः कश्चिद्भावो भव[207b]ति। किं तर्हि प्रागभावस्य भावविरो- 15 धिनः सद्भावात्तदा भावो न भवति। पश्चात्पुनस्तस्मिन्नपगते भवत्येवेत्याह।

नाभावकाले भावश्चेत्कदा भावो भविष्यति।

नाभावकालेऽभाववत्तासमये न भावश्चेत्। यदि भावो न भवति। कदा भावो भविष्यति। अभावकाले भावस्यानुत्पत्ति-

चेत् । [न] कदा चित्तद्भावस्योत्पत्तिः स्यात् । अभावेन विरोधिना सदा क्रोडीकृतत्वात् ॥ तेनैवोत्पद्यमानेन भावेनाभावस्य विनाशो भविष्यतीति चेदाह ।

**नाजातेन हि भावेन सोऽभावोऽपगमिष्यति ॥ १४८**

5 यावदसौ भावो न जायते । तावदभावस्य विनाशो नास्त्येव । स्थिरत्वात् । तस्मात्साजातेनानुत्पन्नेन भावेन सोऽभावः प्रागभावरूपः [1] अपगमिष्यति । निवर्तयिष्यते ॥ अथापि स्यात् मापगच्छतु नामाभावः । तस्मिन्ननपगत एव भाव उत्पद्यते उत्पन्ने च भावे भावाभावयोः परस्परपरिहारात्स्थाद्भावः

10 स्वयमेवापगमिष्यतीति । आह । न चेत्यादि ।

**न चानपगतेऽभावे भावावसरसंभवः ।**

भवत्येष क्रमो यदि पूर्वं भाव एव भवेत् । न चैतदस्ति । यो यस्मात् । न चैवानपगतेऽनिवृत्तेऽभावे भावस्यावसरो-ऽवकाशः । तस्य संभवः । भावोत्पत्तिविरोधिनोऽभावस्यैव

15 भावात् । कारणेनैव तदभावो निवर्तयिष्यते चेत् । न । कारणस्य कार्योत्पत्तावेव व्यापारात् । कार्यमुत्पादयदेव तदभावमपि निवर्तयतीति चेत् । उत्पादयत्येव कार्यं यदि तद्विरोधिनोऽभावादुत्पादयितुं च[208a]मते[1] । न च तस्मिन्नप्रतिहतसामर्थ्ये तत्कार्यमुत्पादयितुं क्षमते । न च कारणेन तद-

[1] MS. lamate.

भावस्य विरोधः । कारणकालेऽपि तत्प्रागभावस्य भावात्मंस्था-
वस्थानात् । तस्माद्भावात्मनि अभावात्मनि वा कार्ये न कार-
णस्य व्यापारो युज्यते । उभयानुभयपक्षे च प्रत्येकपक्षनिषेधा-
देव कारणव्यापारस्य निषेधः कृतो भवतीति द्रष्टव्यं । नापि
तयोः संभवोऽस्ति । विरोधिनोरेकस्यैकदा विधिप्रतिषेधयो- 5
र्भावायोगात् । तदुक्तं ।

न सन्नुत्पद्यते भावो नाप्यसन् सदसन्न च ।

न स्वतो नापि परतो न द्वाभ्यां जायते कथं ॥ इति ।

एवं तावद्भावस्योत्पत्तिः परमार्थतो न कथं चिदपि संग-
च्छते ॥ नापि कथं चिदुत्पन्नस्य सत्स्वभावस्य निवृत्तिर्युज्यत 10
इत्याह । भावस्येत्यादि ।

## भावस्याभावता नैति द्विस्वभावप्रसङ्गतः ॥ १४९

पूर्वापेक्षप्रकारः । यथाऽभावो भावतां नैति । तथा भाव-
स्याभावतां नैति । गच्छति । कुतः । द्विस्वभावप्रसङ्गतः । भावस्य
सतो यदाऽभावस्वभावता भवति । तदा चैकस्यैव वस्तुनो द्वयोः 15
स्वभावयोः प्रसङ्गः स्यात् । एकस्यैव भावाभावरूपत्वात् । न च
भावतां परित्यज्याभावरूपतां यातीति वक्तुमुचितं । तदा च
भावस्यैवाभावात् । कोऽभावरूपतां यातीति न विद्मः । न च
सत्स्वभावस्य पारमार्थिकत्वे निवृत्तिर्युक्ता । पारमार्थिकत्वस्या-
भावप्रसङ्गात् ॥ इत्थं भावस्योत्पादविनाशयोः परमार्थतोऽभावं 20
प्रज्ञाप्योपसंहरन्नाह [ 208ᵇ] एवमित्यादि ।

**एवं च न निरोधोऽस्ति न च भावोऽस्ति सर्वदा।**

एवमुक्तक्रमेणोत्पादविनाशायोगात्। चो हेतौ। यस्मान्न निरोधोऽस्ति। न विनाशोऽस्ति। [न च भावोऽस्ति।] न वस्तुत्वमस्ति। चः समुच्चये। सर्वदा सर्वस्मिन् काले। उत्पा-
5 दाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषा धर्माणां धर्मता। धर्मसमता। धर्मस्थितिता। धर्मनियामता। धर्म-धातुः। तथता। अवितथता इत्यादिवचनात्[1]। यत एवं।

**अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत्॥१५०॥**

अजातमनुत्पन्नं। अनिरुद्धं चाविनष्टं परमार्थतः। तस्मा-
10 दुत्पादविनाशाभावात्। पूर्वोक्तात्। सर्वमशेषं। इदं निःस्व-भावतासमानाधिकरणं जगदिदं सत्त्वभाजनलोकसंज्ञितं सच-राचरं वा। मायोत्पादनिरोधवद्व्यवहारवशात्। पुनरुत्पाद-निरोधौ स्तः[2]। एतेन संवृतिसत्यस्याप्रतिषेध उक्तः॥ धर्म-संगीतौ चैतदुक्तं[3]। तथता तथतेति कुलपुत्र शून्यताया एत-
15 दधिवचनं। सा च शून्यता नोत्पद्यते। न निरुध्यते। आह। यद्येवं सर्वधर्माः[4] शून्या उक्ता भगवता तस्मात्सर्वधर्मा[5] नोत्पत्स्यन्ते।

---

[1] See Çālistambasūtra, Madhyamakavṛtti, p. 40 and additions.

[2] Such seems to have been the first reading; second hand *nirodhāv ubhau*.

[3] See Çikṣāsamuccaya, p. 263, 1.

[4] *Sarva* wanting in Çi.

[5] Çi. *tasmāt sarvadharmā*.

न निरोत्स्यन्ते। निरारम्भो[1] बोधिसत्त्वः। आह। एवमेतत्कुलपुत्र यथाभिसंबुध्यसे। सर्वधर्मा नोत्पद्यन्ते न निरुध्यन्ते। आह। यदेतदुक्तं भगवता संस्कृता धर्मा उत्पद्यन्ते निरुध्यन्ते च इत्यस्य तथागतभाषितस्य कोऽभिप्रायः। आह। उत्पादनिरोधाभिनिविष्टः[2] कुलपुत्र लोकसंनिवेशः। तत्र तथागतो 5 महाका[ 209a ]रुणिको लोकस्य[3] त्रासपदपरिहारार्थं व्यवहारवशादुक्तवानुत्पद्यन्ते निरुध्यन्ते च। न चात्र कस्यचिद्धर्मस्योत्पादो न निरोध इति॥

तस्मात्सर्वधर्मा अनुत्पन्नानिरुद्धस्वभावतया आदिशान्ताः प्रकृतिपरिनिर्वृताः। इति जगतो निःस्वभावतायां तदन्त- 10 र्गतानां नरकादिगतीनामपि निःस्वभावतैवेत्युपदर्शयन्नाह। स्वप्नेत्यादि।

## स्वप्नोपमास्तु गतयो विचारे कदलीसमाः।

स्वप्नेनोपमा तुल्यं यासां तास्तथोक्ताः। तुरवधारणे। स्वप्नोपमस्वभावगतयः। नरकप्रेततिर्यग्मनुष्यदेवानां सभागता- 15 विशेषाः। यथा स्वप्ने देशान्तरादिगमनागमनं सुखदुःखाद्यनुभवनं च तथा। अनधिगतपरमार्थतत्त्वस्य नरकादिषु वेदितव्यं। न तु तत्त्वतः। कथं। विचारे कदलीसमा हेतुपद-

---

[1] Such seems to have the first reading, as in Çi.; second hand *nirâlambo*.
[2] MS. *utpâdaniṣedha*; Çi. *nirodha*.
[3] Çi. *lokasyottrâsa*

मेतत् । सर्वधर्माणां निःस्वभावतया विचारे विमर्शे सति । यस्मात्कदलीसमाः । कदलीवन्निःसारा गतयस्तस्मादित्यर्थः । एतेन यथोक्तं प्राक्

मायैवेयमतो विमुञ्च हृदय चासं[1]

5 इत्यादि । तदपि प्रसाध्योपदर्शितं भवति । यतश्चानुत्पन्नानिरुद्धाः सर्वधर्माः । अत आह । निर्वृतेत्यादि ।

**निर्वृतानिर्वृतानां च विशेषो नास्ति वस्तुतः ॥ १५१**

निर्वृता ये सर्वधर्मावरणप्रहाणादिनिर्मुक्तसर्वबन्धनाः । अनिर्वृता ये रागादिक्लेशपाशायत्तचित्तसंततयः । संसारचारका-
10 न्तर्गताः । तेषामुभयेषामपि विशेषो भेदो नास्ति [ 209ᵇ ] न संभवति । कुतः । वस्तुतः । परमार्थतः । सर्वधर्माणां निःस्वभावतया प्रकृतिपरिनिर्वृतत्वात् । संवृत्या पुनरस्त्येव विशेषः इत्यनेकधा प्रतिपादितं । अत एवाह ।

बुद्धानां सत्त्वधातोश्च येनाभिन्नत्वमर्थतः ।
15 आत्मनश्च परेषां च समता तेन ते मता ॥ इति ।[2]

इति परमार्थतत्त्वापरिज्ञानान्मिथ्याभिनिवेशादारोपितजगत्स्वभावमुपकल्प्यात्मनैवात्मानमाकुलयति बालजन इत्युपदर्शयन्नाह । एवमित्यादि ।

**एवं शून्येषु धर्मेषु किं लब्धं किं हृतं भवेत् ।**
**सत्कृतः परिभूतो वा केन कः संभविष्यति ॥ १५२**

---

[1] Above iv, 47.

[2] Nāgārjuna, *Catustava*.

कुतः सुखं वा दुःखं वा किं प्रियं वा किमप्रियम् ।
का तृष्णा कुत्र सा तृष्णा मृग्यमाणा स्वभावतः ॥ १५३
विचारे जीवलोकः कः[1] को नामात्र मरिष्यति ।
को भविष्यति को भूतः को बन्धुः कस्य कः सुहृत् ॥ १५४

एवं प्रतिपादितन्यायेन शून्येषु निःस्वभावेषु [धर्मेषु] किं 5
लभ्यं । किं कुतश्चित्प्राप्तं यल्लाभेषु प्रहृष्यन्ति ? किं हृतं ।
किमपहृतं केन चित्कस्य चिद्भवेत् । यल्लाभापहारेण प्रकु-
प्यन्ति । सत्कृतः पूजितः । परिभूतोऽपकृतो वा केन कः संभवि-
ष्यति । वस्तुस्वभावाभावे न कश्चित्केन चिदित्यर्थः ।

कुतः सुखहेतोरभावात्सुखं वा । कुतो दुःखं वा दुःखहेतो- 10
रभावात् । अन्योन्यसमुच्चयार्थं उभयत्र वाशब्दः । यत्प्राप्ति-
परिहारार्थमायासः क्रियते किं प्रियं वा किं वल्लभं वा
प्रियरूपतायाः कल्पितरूपत्वात् । किमप्रियं किमनभिलष-
णीयं । अप्रियमपि न परमार्थतः किं चिद्विद्यते । इति
किमर्थं प्रियाप्रियसंयोगवियोगार्थं प्रयत्नः[2] क्रियते ॥ का तृष्णा 15
यया लाभार्थं तृष्यति जनः । कुत्र सा तृष्णा क्व पुनरिय-
मायत्तस्थाने वस्तुनि तृष्णा । मृग्यमाणा स्वभाव[210a]तः ।

---

[1] Such is the reading of the commentary and of several MSS.; but the reading of Minayeff *vicāre jīvalokasya* is supported by Subhāṣitasaṃgraha, ed. Bendall, p. 11.

[2] *Prayatnaḥ*, second hand.

अविद्यमाना स्वरूपतः। तद्विषयस्याभावान्निर्विषयतया तस्या [अ]प्यभावः। यदग्रास्तत्कर्म समुचीयते॥

विचारे परमार्थस्वरूपनिरूपणे सति जीवलोकः सत्त्वलोकः। को। नैव कश्चित्। तदभावात्। को नामात्र मरिष्यति। जीवलोकस्य विचारेणासत्स्वभावत्वात्। को नामात्र जीवलोके मरिष्यति। उपरतजीवितेन्द्रियो भविष्यति। को भविष्यति। क उत्पत्स्यते। को भूतः। पूर्वमुत्पन्न इत्यतीतादिव्यवहारः काल्पनिक एव। को बन्धुः। कः स्वजनः। कस्य कः सुहृत्। किं मित्रं कस्य। अत्रेति सर्वत्र योजनीयं। यदभिष्वङ्गेणाकुशलमपि न गण्यते॥ एवं स्वभावशून्यत्वात्कल्पनासमारोपितमेव तत्त्वमित्याह। सर्वमित्यादि।

**सर्वमाकाशसंकाशं परिगृह्णन्तु मद्विधाः।**
**प्रकुप्यन्ति प्रहृष्यन्ति कलहोत्सवहेतुभिः॥ १५५**

सर्वमेतदुक्तमन्यच। आकाशसंकाशं समारोपिततत्त्वशून्यत्वादाकाशकल्पं। परिगृह्णन्तु। अविद्यमानमेव तु स्वरूपमारोप्य मद्विधा इति ग्रन्थकारमात्मानमेव निदर्शनं करोति। मादृशा अपरिज्ञातपरमार्थतत्त्वा बालजना अमदितकांकुशितचेतसः प्रकुप्यन्ति। मिथ्याभिनिवेशात्कोपं यान्ति। प्रहृष्यन्ति। अलीकलाभयोगात्प्रमुदिता भवन्ति। कैः। कलहोत्सवहेतुभिः। कलहहेतुभिर्विवादहेतुभिः। उत्सवहेतुभिरानन्दहेतुभिः। यथायोगं॥ तस्मादनधिगतपरमार्थतत्त्वाः। सांवृतमेव वस्तुरूपं

मत्यतयाभिनिविष्टाः [210b] सर्वमेतन्मन्यन्ते । न तु परमार्थवेदिन इति । तदुक्तं[1] । एतावच्चैव ज्ञेयं यदुत संवृतिः परमार्थश्च । तच्च भगवता शून्यतः सुदृष्टं सुविदितं सुसाक्षात्कृतं तेन सर्वज्ञ इत्युच्यते । तत्र संवृतिर्लोकप्रचारतः । तथागतेन दृष्टा[2] । यः पुनः परमार्थः । सोऽनभिलाप्यः । अनाज्ञेयोऽविज्ञेयः । अदेशितः । अप्रकाशितः । यावदक्रियः । अकरणः । यावन्न लाभो नालाभो न दुःखं न सुखं न यशो नायशः । न रूपं नारूपमित्यादि ।

[3]तत्र जिनेन जगस्य कृतेन
संवृति देशित लोकहिताय ।
येन जगत्सुगतस्य सकाशे
संजनयीह प्रसादसुखाय[4] ॥
संवृति प्रज्ञयती[5] नरसिंहः[6]
षड्गतयो भणि सत्त्वगणानां[7] ।
नरकगतीश्च[8] तथैव च प्रेतान्[।]
[अ]ासुरकाय नरांश्च मरूंश्च

---

[1] See above ix. 2 ad finem (from Pitāputrasamāgama).

[2] MS. dṛṣṭāḥ.

[3] See Çikṣāsamuccaya, p. 256. Madhyamakāvatāra, p. 175.

[4] Çi. *sukhārthe.*

[5] Çi. *prajñāmayi.*

[6] Visarga illegible.

[7] Çi. *bhaṇi . . . gaṇānām*; MS. *gatānām.*

[8] Çi. *narakatiraçca*, a much better reading

नीचकुलां तथ उच्चकुलांश्च
आढ्यकुलांश्च[1] दरिद्रकुलांश्च ॥

इत्यादि ॥ इदमपि तत्त्वानधिगमस्य फलमित्याह :
शोकायासैरित्यादि ।

5 **शोकायासैर्विषादैश्च मिथश्छेदनभेदनैः ।**
**यापयन्ति सुकृच्छ्रेण पापैरात्मसुखेच्छवः ॥ १५६**

पुत्रकलत्रादिविप्रयोगकृताः शोकाः । सुखदुःखप्राप्तिपरिहारनिमित्तपरिश्रमा आयासाः । तैः शोकायासैर्मंदिधा यापयन्ति सुकृच्छ्रेणेति संबन्धः । विषादैश्च[2] । लाभसत्कारादि-
10 विगमे विषादैर्दौर्मनस्यैश्च । मिथश्छेदनभेदनैः । मिथः परस्परं । छेदनानि करचरणशिरोनासिकाकर्णप्रभृतीनां । भेदनानि बाहुजङ्घोरुवक्षःपार्श्वोदरादीनां । चकारोऽनुवर्तते । तैश्छेदनभेदनैश्च यापयन्ति । कालक्रमेणायुःसंस्का[211ᵃ]रान् क्षपयन्ति । सुकृच्छ्रेण महता कष्टेन कथं चित्लब्धाशनपानवसनाः ।
15 किंभूताः सन्तः । पापैरात्मसुखेच्छवः । पापैरकुशलैः कर्मभि । आत्मनः स्वस्य सुखेच्छवः सुखाभिलषणशीलाः[3] ॥ तथाविधैश्च समाचारविशेषैश्च[4]

---

1 MS. *ādya*.
2 MS. *viçādair*.
3 MS. *abhilāṣaṇa* ; *ā* erased.

**मृताः पतन्त्यपायेषु दीर्घतीव्रव्यथेषु च ।**

मृता जीवितेन्द्रियविमुक्ताः । पतन्ति गच्छन्त्यपायेषु नरकप्रेततिर्यक्षु । किंभूतेषु । दीर्घतीव्रव्यथेषु च । दीर्घा चिरकालभाविनी । तीव्राऽतिदुःसहवेदनीयविपाकत्वात् । व्यथा[1] येष्वपायेषु ते तथोक्ताः । तेषु च । चकार उक्तसमुच्चये भिन्न- 5
क्रमे वा । केन प्रकारेणेत्याह । आगत्यागत्येत्यादि ।

**आगत्यागत्य सुगतिं भूत्वा भूत्वा सुखोचिताः ॥ १५७**

सुखसंवर्धिता भूत्वा भूत्वा । कथं । आगत्यागत्य सुगतिं । शोभनां देवमनुष्यगतिं प्राप्य प्राप्य ॥ पुनरपि तथाभूतानां दुःखपरम्परासागरनिमज्जनोन्मज्जनमादर्शयन्नाह । भव इत्यादि । 10

**भवे बहुप्रपातश्च तत्र चासत्त्वमीदृशम्[1] ।**
**तत्रान्योन्यविरोधश्च न भवेत्तत्त्वमीदृशम् ॥ १५८**

भवे संसारे कामरूपारूप्यस्वभावे बहुप्रपातश्च बहुतर उपघातश्च । तत्र चासत्त्वमीदृशं । तत्र च भवे प्रपाते वा । असत्त्वमीदृशं व्यामोहविजृम्भितमेतादृशं सर्वजनसाधारणं यथा- 15
विधं प्रतिपादितं परिदृश्यमानं वा । तत्रान्योन्यविरोधश्च । तत्रैवंविधे असत्त्वे सति अन्योन्यविरोधः । परस्परविप्रतिपत्तिः । केन कारणेन न भवेत्तत्त्वमीदृशमिति । तस्माद्वस्तुरूपमेतादृशमनेकाकारसमारोपात् ।

---

[1] See lines 12, 17, 18.

तत्र चानुपमास्तीव्रा अनन्तदुःखसागराः। [211b]

तत्र चैवमपि। अनुपमाः। तदपरसदृशदुःखाभावादुपमातुमशक्याः। तीव्रा अत्युग्रवेदना। अनन्ता [अ]नवधिकालविपाकतया ऽपर्यन्ता वा दुःखानामतिविपुलतया मध्यावसानमनधिगम्य निस्तरीतुमशक्यत्वात्। सागराः। तथापि कथंचित्। महता वीर्येण कुश]लपक्षोपचयाद्बहुना कालेन सुगतिं प्राप्य क्षपयितुं शक्यन्त इत्यत आह। तत्रैवमित्यादि।

तत्रैवमल्पबलता तत्राप्यल्पत्वमायुषः ॥ १५९
तत्रापि जीविताऽऽरोग्यव्यापारैः क्षुत्क्लमश्रमैः।
निद्रयोपद्रवैर्बालसंसर्गैर्निष्फलैस्तथा ॥ १६०
वृथायुर्वहत्याशु विवेकस्तु सुदुर्लभः।

तत्र तथारूपेऽपि समावेश एवं परिदृश्यमानरूपा अल्पबलता हीनवीर्यतेति यावत् ॥ तत्राप्यल्पत्वमायुषः। तत्राप्येवंभूते सत्यपि। अल्पत्वं। स्तोकत्वं। आयुषः आयुःसंस्काराणां ॥ तत्रापि जीविताऽऽरोग्यव्यापारैः। जीवितस्य चिरकालयापनाय व्यापारैः। स्नानाभ्यञ्जनप्रभृतिभिः। आरोग्यस्य आरोग्याय वा। रोगोपशमाय व्यापारैः। विशेषेण कटुतिक्तभैषज्यकषायपानादिभिः। कुशलोपार्जनमन्तरेण वृथा चैवायुर्वहत्याश्विति वक्ष्यमाणेन संबन्धः ॥ तथा क्षुत्क्लमश्रमैः। क्षुत् बुभुक्षा। क्लमो ग्लानिः। श्रमो मार्गखेदादि तैः। निद्रयोपद्रवैः। निद्रया स्वप्नेन। उपद्रवैर्दंशमशकाघविहेठनादिकृतैः। शरीरोपघाताद्यन्तग-

दंशमशकादिकृतैः । वधबन्धनताडनादिलक्षणैः । तथा बाल-संसर्गैर्निष्फलैस्तथा । बालानां पृथग्जनानां संसर्गैः संपर्कैः । किंभूतैः । निष्फलैः । आत्मोत्कर्षादिसंभिन्नप्रलापादिबहुलैः । तथेति । न केवलं पूर्वोक्तक्रमेण इत्यमपि वृथैवायुर्वहत्याशु । वृथैव । निष्फलमेव कुशलपक्षो[212a]पचयरहितत्वात् । आयु-र्वहति । याति । आशु शीघ्रं । अमह्यापारप्रसङ्गात् । त्वरितमेव परिक्षयात् ॥ एवमपि वर्तमानानां विवेकस्तु सुदुर्लभः । विवे-कस्तु हेयोपादेयज्ञानं । व्यासङ्गपरित्यागो वा । सुदुर्लभः । कथमप्यतिकृच्छ्रेणापि न लभ्यते ॥ भवतु नामैवं । तथापि यदि कथं चित्समाधानं जायते तदा कल्याणं स्यात् । तदपि 10 नास्तीत्याह । तत्रापीत्यादि ।

**तत्राप्यभ्यस्तविक्षेपनिवारणगतिः कुतः ॥ १६१**
**तत्रापि मारो यतते महापायप्रपातने ।**

तत्राप्येवमवस्थां गतेऽपि । अभ्यस्तविक्षेपः । परिशीलितमौ-द्धत्यं । तस्य निवारणं निवर्तनं । तस्य गतिरनुप्रवेशः । कुतो । 15 नैवास्ति ॥ तत्राप्येवमनर्थपरम्परायां स्थितानां कथं चित्कुशल-पक्षं समीक्ष्य । मारो यतते महापायप्रपातने । क्लेशमारो देवपुत्रमारो वा यतते उद्यच्छते । महापायप्रपातने । प्रपातन-निमित्तं । अवीच्यादिनरकप्रक्षेपणार्थमिति[1] यावत् ॥ एवमपि

[1] MS. *kṣepana*; this misreading is common enough, but usually corrected by a second hand.

कदा चित्सत्पुरुषादिष्वभिसंप्रत्ययवशात्कथं चित्कुशलमुपजायत इत्याह । तचासन्मार्गेत्यादि ।

**तचासन्मार्गबाहुल्याद्विचिकित्सा[1] च दुर्जया ॥ १६२**

**पुनश्च क्षणदौर्लभ्यं बुद्धोत्पादोऽतिदुर्लभः ।**

5 **क्लेशौघो दुर्निवारश्चेत्यहो दुःखपरम्परा ॥ १६३**

तत्रैवंदशां प्राप्नोति । सम्यग्दृष्टिविपक्षस्यासन्मार्गस्य चार्वाकमीमांसकादिपरिदीपितस्य बाहुल्याद्भूयस्त्वात् । विचिकित्सा सन्मार्गे विमतिश्च दुर्जया । कथं चिदपि विचिकित्सा त्यक्तुं न शक्या ॥ कथं चित्सुगतिप्रतिलम्भेऽपि । पुनश्च क्षणदौर्लभ्यं ।

10 अष्टाक्षणविनिर्मुक्तस्य क्षणस्य दौर्लभ्यं । परमदुर्लभत्वं

महार्णवयुगच्छिद्रकूर्मग्रीवार्पणोपमं ।[2]

कथं चिदितरक्षणसंभवेऽपि । बुद्धोत्पादोऽतिदुर्लभः । बु-[द्धानां [3] ] [212b] समस्तजगदालोककारिणां सर्वदुःखनिदानभूतक्लेशप्रशमापहारिणामुत्पादः प्रादुर्भावः । अतिदु-

5 र्लभः । कथं चित्कर्हिं चित् । उदुम्बरपुष्पप्रायः । संसारसागरोत्तरणोपायभूतः । कथं चिद्बुद्धोत्पादसंभवेऽपि । क्लेशौघ [ [4] ] दीनां उघः[5] । अविच्छिन्नप्रवाहः । स दुर्निवारः ।

[1] Minaev *bâhulyam.*

[2] See above iv. 20.

[3] Four akṣaras are wanting.

[4] About seventeen akṣaras wanting.

[5] So MS.

दुःखेनापि निवारयितुमशक्याः॥ इत्यहो दुःखपरम्परा। इत्येवं। अहो इति खेदे। दुःखस्य कष्टस्य परम्परा। एकस्माद्दुःखाद्वि-निर्गमेऽपि। अपरस्मिन्दुःखे [प्रप]तनात्॥

सांप्रतमेवं सत्त्वा[न् सुदुः]खितान् समीक्ष्य करुणाम्रेडित-हृदयः परदुःखदुःखी शास्त्रकारः सत्त्वानां दुःखं शोचयन्नाह। 5
अहो बतेति।

## अहो बतातिशोच्यत्वमेषां दुःखौघवर्तिनाम्।

निपातसमुदायः खेदे। अतिशोच्यत्वं अतिशयेन शोच-नीयत्वं। एषां हिताहितपरिज्ञानविकलानां सत्त्वानां दुःख-सागरकल्लोलपरम्परानिमज्जनोन्मज्जनाकुलचेतसां। के पुनरमी 10
सत्त्वा शोचनीया इत्याह। य इत्यादि।

## ये नेक्षन्ते स्वदौःस्थित्यमेवमप्यतिदुःस्थिताः॥ १६४

ये सत्त्वा अविद्यान्धीकृतज्ञानलोचना नेक्षन्ते न पश्यन्ति। स्वदौःस्थित्य[1]। स्वस्यात्मनो दुःखावस्थितत्वमेवमप्यतिदुःस्थिता[1]। एवमुक्तक्रमेण अतिदुःस्थिताः। अतिशयेन दुःखावस्थिताः। 15
दुःखपर्यापन्ना इति यावत्॥ एतदनुरूपदृष्टान्तेन स्पष्टयन्नाह। स्नात्वेत्यादि।

---

1 Visarga wanting in MS.

2 First hand *nti*.

स्नात्वा स्नात्वा यथा कश्चिद्विशेद्वह्निं मुहुर्मुहुः ।
स्वसौस्थित्यं च मन्यन्त एवमप्यतिदुःखिता ॥ १६५

स्नात्वा स्नात्वा जलावगाहनं कृत्वा कृत्वा यथा कश्चिदुप-
हतबुद्धिः शीतार्तः सुखाभिलाषी । विशेत्प्रविशेत् । वह्निमग्निं
5 मुहुर्मुहुः प्र[213ª]तिक्षणं पुनः पुनर्वा । तथैतेऽपि सत्त्वाः ।
स्वसौस्थित्यं आत्मसुखसंपत्तिं च । मन्यन्ते । अवबुध्यन्ते । एव-
मप्यतिदुःखिताः । एवमनेन प्रतिपादितक्रमेणातिदुःखिताः ।
दुःखाग्निज्वालकवलीकृताः । अहो बतातिबहलतराज्ञानान्ध-
काराक्रमणममीषां यदात्मगतमपि प्रमादं न पश्यन्तीत्याह ।
10 अजरेत्यादि ।

अजरामरलीलानामेवं विहरतां सताम् ।
आयास्यन्त्यापदो घोराः कृत्वा मरणमग्रतः ॥ १६६

न विद्यते जरा जीर्णता येषां तेऽजराः । न म्रियन्ते ये
[ते]ऽमराः । तेषामजराणाममराणामिव लीला विचेष्टितं ।
15 येषां ते तथोक्ताः । तेषामेवमनया लीलया विहरतां निश्चितं
विचरतां सतामायास्यन्ति । ढौकिष्यन्ते । आपदो निरन्तरं ।
सर्वे ते दुःखहेतवो जराव्याधिविपत्तयः । घोरा अतीव भयं-
कराः । कथमायास्यन्ति । कृत्वा मरणमग्रतः । मरणमप्रती-
कारपरिहारं मृत्युमग्रतः पुरतः कृत्वा ॥

एतच्चोक्तं भगवता राजाववाद[क]सूत्रे[1]। तद्यथा महाराज। चतसृभ्यो दिग्भ्यश्चत्वारः पर्वता आगच्छेयुः। दृढाः। सारवन्तः। अखण्डाः। अच्छिद्राः। असुषिराः[2]। सुसंवृत्ताः। एकघनाः। नभः स्पृशन्तः। पृथिवीं चोल्लिखन्तः। सर्वं[3] तृणकाष्ठशाखा-पर्णपलाशादि सर्वसत्त्वप्राणभूतान्[4] निर्मथ्नन्तः। तेभ्यो न सुकरं जवेन वा पलायितुं बलेन वा द्रव्यमन्त्रौषधैर्वा निवर्तयितुं। एवमेव महाराज चत्वारीमानि महाभयानि। आगच्छन्ति। येषां न सुकरं जवेन [वा] पालयितुं। बलेन वा। द्रव्य-मन्त्रौषधैर्वा निवर्तनं कर्तुं। कतमानि चत्वारि। जरा व्याधि-र्मरणं विपत्तिश्च। जरा महाराज आग[च्छति] [213b] यौवनं प्रमथमाना। व्याधिर्महाराज आगच्छति आरोग्यं प्रमथ्नन्[5]। मरणं महाराज आगच्छति जीवितं प्रमथमानं। विपत्ति-र्महाराज आगच्छति सर्वाः संपत्तीः प्रमथ्नन्ती। त[त्क]स्मा-द्धेतोः[6]। तद्यथा महाराज सिंहो मृगराजो रूपसंप[न्नो] जव-संपन्नः सुजातनखदंष्ट्राकरालो मृगगणमनुप्रविश्य मृगं गृहीत्वा यथाकामकरणीयं करोति। स च मृगराजो ऽतिबलं व्याघ्र-मुखमासाद्य विवशो भवति। एवमेव महाराज विद्धस्य मृत्यु-शल्येनापगतमदस्यात्राणस्याप्रतिशरणस्यापरायणस्य मर्मसु च्छिद्य-

1 See Çikṣāsamuccaya, p. 206.
2 MS. asuçirāḥ.
3 Çi. sarva.
4 Çi. prāṇibhūtāni nir.
5 Çi. pramathamānaḥ.
6 Çi. tat kasya hetoḥ.

मानेषु मांसशोणिते परिशुष्यमाणे परिहृषितविक्लवदनस्य[1] करचरणविक्षेपाभियुक्तस्या[कर्मण्यस्या]समर्थस्य लालासिंघानक-पूयमूत्रपुरीषोपलिप्तस्य[2] ईषज्जीवितावशेषस्य कर्मभवात्पुनर्भव-मालम्बमानस्य यमपुरुषभयभीतस्य कालरात्रिवशगतस्य चर-
5 मास्वासप्रश्वासेषूपरुध्यमानेषु[3] । एकाकिनो ऽद्वितीयस्यासहायस्य । इमं लोकं जहतः परलोकमाक्रमतो महापथं व्रजतः महा-कान्तारं प्रविशतः महागहनं समवगाहमानस्य महाकान्तारं प्रपद्यमानस्य महार्णवेनोह्यमानस्य[4] कर्मवायुना नीयमानस्य निमित्तीकृतां दिशं व्रजतो नान्यत्त्राणं नान्यच्छरणं नान्यत्प-
10 रायणमृते धर्मात् । धर्मो हि महाराज तस्मिन् समये त्राणं लयनं शरणं भवति । तद्यथा शीतार्तस्याग्निप्रतापः । अग्नि-मध्यग[214a]तस्यापि निर्वापणं । तृष्णार्तस्य वा शैत्यं । अध्वानं प्रतिपन्नस्य सुशीतलच्छायोपवनं । पिपासितस्य सुशीतलं सलिलं । बुभुक्षितस्य वा प्रणीतमन्नं । व्याधितस्य वा वैद्यौ-
15 षधिपरिचारकाः । भयभीतस्य बलवन्तः सहायाः साधवः प्रति-शरणा भवन्तीति विस्तरः ॥ तस्मादेतद्भयपरिहारार्थं कुशल-पक्षेष्वेव प्रज्ञापरिशोधितेषु यत्नः करणीयः ॥

इदानीं जात्यादिदुःखदुःखितानां दुःखापहरणाय स्वाशय-माशङ्कयन्नाह । एवमित्यादि ।

---

[1] Cf. *paritaptatṛṣita.*

[2] So MS. *ciṁghāna = siṁghāṇa*—MS *purīṣoparilipta.*

[3] MS *praçvāseṣu pūrvarudhyamāneṣu.*

[4] Cf. *arṇavenorjyamānasya.*

**एवं दुःखाग्नितप्तानां शान्तिं कुर्यामहं कदा ।**
**पुण्यमेघसमुद्भूतैः सुखोपकरणैः स्वकैः ॥ १६७**

एवमनन्तरोक्तया नीत्या । दुःखाग्नितप्तानां । दुःखान्येवाग्नयः । तैः संतापितानां सत्त्वानां शान्तिं जात्यादिदुःखानलतापप्रशमनं कुर्यामहं कदा । कस्मिन् काले कुर्यां विदध्यां । कथं सुखोपकरणैः । सुखस्योपकरणानि सुखसाधनानि वस्त्राभरणानुलेपनशयनासनप्रभृतीनि । किं तदुपार्जितैरेव । नेत्याह । स्वकैः स्वात्मीयैः । मया स्वयमुपार्जितैरित्यर्थः । किं निर्माणादिप्रदर्शितैः । नेत्याह । पुण्यमेघसमुद्भूतैः । पुण्यान्येव मेघाः । सर्वदुःखसंतापार्तिशमनसुखोपकरणशीतलवृष्टिप्रदाननिदानत्वात् । तेभ्यः समुद्भूतानि नि[र्जाता]नि तैः ॥ एवमभ्युदयसंपदि परेषां चेतो विधाय निःश्रेय[स]संपदि[1] प्रदर्शयन्नाह । कदेत्यादि ।

**कदोपलम्भदृष्टिभ्यो देशयिष्यामि शून्यताम् ।**
**संवृत्यानुपलम्भेन पुण्यसंभारमादरात् ॥ १६८**

कदा कस्मिन् काले । उपलम्भदृष्टिभ्यो भावग्राहाभिनि[वि]ष्टेभ्यो । देशयिष्यामि प्रकाशयिष्यामि । शून्यतां सर्वधर्मनिः[स्वभावतां । कथं । संवृत्या व्य]वहारेण[1] । अन्यथा विकल्पाविषयतया परमार्थशून्यस्य शून्यताया देशयितुमशक्यत्वात् ।

[1] Eleven akṣaras wanting.

एवं निःश्रेयसहेतुज्ञानसंभारनिमित्तमुपदर्शितं ॥ तत्कारणं पुण्यसंभारनिदानमुपदर्शयन्नाह । पुण्येत्यादि । पुण्यस्य दानादेः संभारं [कः?रोपलम्भ]दृष्टिभ्यो[1] देशयिष्यामीति संबन्धः । आदरादिति । महता गौरवेण सत्कृत्य न यदृच्छया । येन
5 प्रकारेण । अनुपलम्भेन । देयदायकप्रतिग्राहकादिचिततथानुपलम्भयोगेन त्रिकोटिपरिशुद्धेति यावत् । एवमुपचितः पुण्यसंभारो बुद्धताधिगमाय जाय[ते] । तदेवमनेन सर्वक्लेश-संक्लेशहेतुसर्वसमारोपविकल्पप्रतिपक्षतया सर्वावरणप्रहाणोपायत्वात् । समस्ततथागताधिगमहेतुत्वाच्च सर्वदुःखोपशमोपाय-
10 प्रज्ञोपजायते[2] इत्युपदर्शितं भवतीति ॥

ये गम्भीरमथावगाहनपटुप्रज्ञा[नि]रस्तभ्रमाः
संक्लेशव्यवदानपक्षविमलज्ञानोच्छ्रिताः सूरयः[3] ।
ते सन्तो गुणदोषयोरपि च तैः सारं विमिश्राद्धतो
ग्राह्यं सर्वमकल्मषं विषमिव त्याज्यं दुष्कं यदि ॥

15 न युक्तमुक्तं किमपीह यन्मया
परं प्रजातं स्खलितं तदेव मे ।
ननु प्रतीच्छन्ति समाप साधवो
मतिं मयानेन कृतेन सांप्रतम् ॥

अपि च ।

20 यः संवृत्या भजति मनसो गोचरत्वं कथं चित्

---

[1] Eight akṣaras wanting.

[2] Or *upāya*.

[3] MS. çurayaḥ

तादृक्सत्त्वं सूयते न मतिः कस्य वै तादृगस्य ।
तत्सूक्तार्थप्रविचयवतां मध्यमानीतिभाजां[1]
दृष्ट्वा किं[2] चित्तगुणलवमिह स्यादुपादेयबुद्धिः ॥ [215a]
प्रज्ञाया विवृतिं विधाय विशदव्याख्यापदैः[3] संवृतां[4]
सम्यग्ज्ञानविपक्षदृष्टिनिबिडव्यामोहशान्त्या मया ।
यत्पुण्यं समुपार्जितं हितफलं तेनास्तु सर्वो जनो
मञ्जुश्रीरिव मञ्जुगुणैकवसतिः प्रज्ञाकरो जायतां ॥ इति ॥

## बोधिचर्यावतारे प्रज्ञापारमितापरिच्छेद-टीका समाप्ता ॥

॥ कृतिरियं पण्डितभिक्षुप्रज्ञाकर[मति]पादानाम् ॥

---

[1] MS. madhyamām.
[2] So MS.
[3] MS. viṣada.
[4] MS. saṃvṛtam.

टीकेयं परमा[1] सुयन्त्रितपदा[2] शुद्धा मनोह्लादिनी
संसारार्णवपारगामिनि जने नौयानयानोपमा ।
आशु प्राप्तिकरी जिनस्य पदवीं साद्यल्लिखित्वा मया
प्राप्तं यत्कुशलं सुसंपदि पदं तेनास्तु बुद्धो जनः ॥
5 अष्टानवतिसंयुक्ते गते सरति वत्सरे ।
कृष्णे श्रावणपञ्चम्यां वासरे कुजसाह्वये ॥
श्रीमच्छंकरदेवस्य राज्ये विजयशालिनः[4] ।
बोधिचर्यावताराख्यटीके लिख्यमिदं शुभं ॥
श्रीललितपुरे रम्ये श्रीमानीश्वरसंज्ञके ।
10 यच्छ्रीराघवनाम्नस्य विहारे सुगतालये ॥
धन्यः स्थविरभिक्षोऽस्य बुद्धचन्द्रस्य पुस्तकम् ।
तत्पुण्याद्बोधिसत्त्वं लभते परमं पदम् ॥ इति ॥

सृजतु सलिलं घना यथेष्ट
भवतु मही बहुशस्यसंप्रयुक्तम् ।
15 भवतु नरपतिः प्रजा विनाथाः
भवतु रयनपतेः सुखातिवृद्धिः ॥ इति ॥

॥ कायस्थः भुवनाकरसंण लिखितमिति ॥[7]

---

[1] MS. paramam.

[2] MS padāṁ .. prantikaraṁ.

[3] So MS.

[4] Visarga wanting in MS.

[5] So MS.

[6] The common reading is *[illegible]*, Bendall, Journey, Insc. Plate xiv, l 4, Catalogue p. ix, and Lévi Nepal ii, p. 105.

[7] The readings of the colophon contrast with the correction of the MS

[illegible]
Manutikā Sangraha, Fasc. 1-3 @ /10/ each ... ... 2
Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... 9
Mugdhabodha Vyakaranam, Vol. I, Fasc. 1-7, @ /10/ each ... ... 4
Nirukta, (2nd edition) Vol. I, Fasc. 1-2, @ Rs. 1-4 ... ... 2
Nityācārapaddhati, Fasc. 1-7 @ /10/ each ... ... 4
Nityācārapradīpa, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-4 @ /10/ each ... 7
Nyāyabinduṭīkā, Fasc. 1 @ /10/ each ... ... 0
Nyaya Vartika Tatparya Pariśuddhi, Fasc. 1-4 @ /10/ each ... 2
Nyayamarah ... ... ... 2
Padumāwati, Fasc. 1-6 @ 2/ each ... ... ... ... 12
Prākrita-Paiugalam, Fasc. 1-7 @ /10/ each ... ... ... 4
*Parāçara Smṛti, Vol. I, Fasc. 2-8, Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... 11
Parāçara, Institutes of (English) @ 1/- each ... ... ... 1
Pariksamukha Sutram ... ... ... ... 1
Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... 3
Rasarnavam, Fasc. 1-3 ... ... ... ... 3
Ravisiddhanta Manjari, Fasc. 1 ... ... ... ... 0
Sadukti-karna-mrita, Fasc. 1-2, @ /10/ each ... ... ... 1
Saddarśana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... 1
Samaraicca Kaha, Fasc. 1-7, @ /10/ each ... ... ... 4
Sāṇkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... 2
Ditto (English) Fasc. 1-3 @ 1/- each ... ... ... 3
Six Buddhist Nyaya Tracts ... ... ... ... 0 1
Siva Parinahya ... ... ... ...
Smriti Prakasha, Fasc. 1 ... ... ... ... 0 1
Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... 3 1
Sri Surisarvasvam, Fasc. 1-2, @ /10/ each ... ... 1
Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... 1
Suddhi Kaumudī, Fasc. 1-4 @ /10/ each ... ... 2
Sundaranandam Kavyam ... ... ... 1
Suryya Siddhanta, Fasc. 1-2 @ 1-4 each ... ... ... 2
Syainika Sastra ... ... ... ... 1 0
Tantra Vārtika (English) Fasc. 1-14 @ /1/4 ... ... ... 17 8
*Tattva Cintāmaṇi, Vol. I, Fasc. 1-9; Vol. II, Fasc. 2-10; Vol. III, Fasc. 1-2; Vol. IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... 23 12
Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-3, Vol. III, Fasc. 1, @ /10/ each ... ... 7 8
Tattva Cintamani Didhiti Prakas, Fasc. 1-6 @ /10/ each ... ... 3 12
Tirthacintamoni, Fasc. 1-4, @ /10/ each ... ... ... 2 8
Trikāṇda-Maṇḍanam, Fasc. 1-3 @ /10/ ... ... ... 1 14
Tul'si Satsai, Fasc. 1-5 @ /10/ ... ... ... ... 3 2
*Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each ... 6 14
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- ... ... 6 0
Vallāla Carita, Fasc. 1 @ /10/ ... ... ... ... 0 10
Varṣa KriyāKaumudī, Fasc. 1-6 @ /10/ ... ... ... 3 12
Vidhāna Pārijāta, Fasc. 1-8; Vol. II, Fasc. 1 @ /10/ ... ... 5 10
Ditto Vol. II, Fasc. 2-6 @ 1/4/ ... ... ... 6 4
Vishahitam, Fasc. 1 ... ... ... ... 0 10
Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... 4 6
Vrhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ ... ... ... 3 12
Yogaśāstra, Fasc. 1-3 ... ... ... ... 3 12

## *Tibetan Series.*

Amarakosah ... ... ... ... 2 0
Amartika Kamdhenuh ... ... ... ... 1 0
Bauddhastotrasangraha, Vol. I ... ... ... ... 2 0
A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, @ 1/- each ... 4 0
Nyayabindu of Dharmakirti, Fasc. 1-2 ... ... ... 2 0
Pag-Sam S'hi Tin, Fasc. 1-4 @ 1/- each ... ... ... 4 0
Rtogs brjod dpag hkhri S'in (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-11, Vol. II, Fasc. 1-11 @ 1/- each ... ... 22 0
Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/- each ... ... ... 14 0
Tshed-Kun-Din ... ... ... ... ... 1 0

## *Arabic and Persian Series.*

Amal-i-Salih, or Shah Jahan Namah ... ... ... 2
Al-Muqaddasi (English) Vol. I [illegible]

[illegible]

[illegible] ... 1 12

Catalogue of Arabic Books [illegible] ... 2 0

Catalogue of the Persian Books and Manuscripts, Fasc. 1-2 @ 1/- each ... 2 0

Farsi Books, of Hashimi ... 1 0

Ditto of Zabardast Khan ... 1 0

Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... 21 0

Fihrist-i-Tusi, or Tusy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... 4 0

Gulzar ... 2 6

Hadiqatu'L, Haqiqat, (Text & Eng.) ... 3 6

History of Gujarat ... 1 0

Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0 12

History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... 7 8

Iqbalnamah-i-Jahangiri, Fasc. 1-3 @ /10/ each ... 1 14

Isabah, with Supplement, 51 Fasc. @ 1/- each ... 51 0

Kashf al-Hujub wal Astar; ... 2 0

List of Arabic and Persian MSS. 1903-1907 and 1908-1910, @ 1/- each 2 0

Ma'asir-i-Rahimi, Part I, Fasc. 1-4 @ 2 each ... 8 0

Maasir-ul-Umara, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... 35 0

Ditto (Eng.) Vol. I, Fasc. 1-6, @ 1/4/ each ... 7 8

Memoirs of Tahmasp ... 1 0

Marhamu 'L-Ilali 'L-Mu'Dila, Fasc. 1-3 ... 3 0

Muntakhabu-t-Tawarikh, Fasc. 1-15 @ 10/ each ... 9 6

Ditto (English), Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 2 @ 1/- each ... 17 0

Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each ... 11 14

Ditto Part 3, Fasc. 1-4 @ 1/- each ... 4 0

Persian and Turki Divans of Bayran Khan, Khan Khanan ... 1 0

Qawaniun 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes ... 5 0

Riyazu-s-Salatin, Fasc. 1-5 @ /10/ each ... 3 2

Riyazu-s-Salatin, (English) Fasc. 1-5 @ 1/- ... 5 0

Shah Alam Nama, Fasc. 1-2 ... 2 0

Tadhkira-i-Khushnavisan ... 1 0

Tabaquat-i-Nasiri (English), Fasc. 1-14 and Index @ 1/- each ... 15 0

Tarikh-i-Firuz Shahi of Ziyau-d-din Barni, Fasc. 1-7 @ /10/ each ... 4 6

Tarikh-i-Firusshahi, of Shams-i-Siraj Aif, Fasc. 1-6 @ /10/ each ... 3 12

Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... 3 0

The Mabani 'L Lughat: A Grammar of the Turki Language in Persian 1 [illegible]

Tuzuk-i-Jahangiri (Eng.) Fasc. 1 @ 1/- ... 1 0

Wis o Ramin, Fasc. 1-5 @ /10/ each ... 3 2

Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

ASIATIC RESEARCHES. Vol. XX @ 10/- each ... 10 0

PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No.

JOURNAL of the Asiatic Society for 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/- per No. to Non-Members.

*N.B.—The figures enclosed in brackets give the number of Nos. in each year.*

Journal and Proceedings, N.S., (Nos. 1-4 of 1905 are out of stock), 1906—1912 @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.

Memoirs, Vol. I (21), Vol. II (11), Vol. III (6), Vol. IV (1). Price varies from number to number. Discount of 25% to Members.

Centenary Review of the Researches of the Society from 1784-1883 ... [illegible]

Catalogue of the Library of the Asiatic Society, Bengal, 1910 ... [illegible]

Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/- each [illegible]

Kacmiraçabdāmrta, Parts I [illegible] II @ 1/8/ [illegible]